# श्रीविचारबिन्दुः

सटीकः

( प्रथमः परिच्छेदः )

नृसिंहदेवशास्त्री दर्शनाचार्यः
गोपीचन्द्रवर्मा शास्त्री बी० ए०

* हरिः ॐ *

ब्रह्मवित्तमयोगिवर्यश्रीस्वामिमङ्गलनाथविरचितः

# श्रीविचारबिन्दुः

(प्रथमः परिच्छेदः)

लवपुरीयप्राच्यविद्यालयान्तर्गतसंस्कृतसाहित्यदर्शन-
महोपाध्यायैः दर्शनाचार्यकवितार्किकादिविविध-
विरुदभाग्भिः पण्डितवर्यश्रीनृसिंहदेवशास्त्रिभिः
विरचितया स्वोपज्ञविषमस्थलीयविशद-
टिप्पणसमुद्भासितया पीयूषवाहिनी-
नाम्न्या संस्कृतटीकया तैरेव कृतया
मिताक्षरानाम्न्या हिन्दीभाषा-
टीकया च समलङ्कृतः

स च

प्राप्तद्रव्यसाहाय्यकेन लवपुरीयदयालसिंहकालेजीय-
संस्कृतहिन्दीविभागप्रधानाध्यापकेन शास्त्री
बी० ए० इत्युपाधिधारिणा
गोपीचन्द्रवर्मणा
तत्र तत्र टिप्पणीभिः सुसंयोज्य सम्पादितः
प्रकाशितश्च

वि० १९९० । ई० १९३३

---

यह ग्रन्थ मुमुक्षुजनों को निम्नलिखित स्थानों से ( विना मूल्य ) प्राप्त हो सकता है:—

( १ ) लाला जयकृष्णजी, सेवक सन्तकुटिया, सराय दीवान रत्नचन्द, लाहौर ।

( २ ) भक्त लुड़ीन्दचन्द जी, मैनेजर पञ्जाब सिन्ध क्षेत्र, हृषीकेश ।

( ३ ) भक्त घूमीराम जी, हरिआश्रम, हृषीकेश ।

( ४ ) मैस्सर्ज़ किशोरीलाल बख़तावरलाल, अनाज मण्डी, फिरोज़पुर छावनी ।

( ५ ) मङ्गलाश्रम, मुनि की रेती, हृषीकेश ।

लाहौर, हृषीकेश, तथा फिरोज़पुर से भिन्न स्थानों पर निवास करने वाले महात्मागण तथा सत्सङ्गिजन अधोलिखित पते पर से डाकद्वारा भी मँगा सकते हैं । परन्तु ऐसा करते समय अपना पूरा पता—ग्राम डाकखाना आदि सहित—सुस्पष्ट अक्षरों में लिखना आवश्यक है ।

गृहस्थ सज्जनों को प्रेषण व्यय ।।) ( आठ आने ) डाकखाने के टिकटों के रूप में भेज देना चाहिये ।

गोपीचन्द्रवर्मा शास्त्री बी० ए०
दयालसिंह कालेज, लाहौर ।

* हरिः ॐ *

# किञ्चिद्वक्तव्यम्

परं पदं प्रदर्श्यते तमोऽन्तरायनाशिना ।
विचारबिन्दुनाऽमुना भुवस्तलं यथांऽशुना[1] ॥
( श्रीस्वामिरामानन्दाः )

अनुभूतचरमेवेदं सर्वेषां प्राणिनामाब्रह्मणः आ च निकृष्टतमकीटाद् यत् सर्वः सर्वत्र सर्वथा सुखमेव समीहत इति । नास्ति चेदमननुरूपं तस्य, सुखस्याऽऽत्मरूपत्वात् आत्मनश्च सर्वत्र परमप्रेमास्पदत्वात् । परमनाद्यविद्याविमोहितात्मनो जीवस्य न तत्सुलभम् । स तु अहर्निशं वाञ्छन्नपि निश्चलमनसा ध्यायन्नपि, सर्वात्मना तत्सिद्ध्यर्थं प्रयतमानोऽपि अनन्तेषु जन्मजन्मान्तरेषु सुकृतदुष्कृतफलान्युपभुञ्जानः केवलं दुःखमेवानुबोभवीति न तु क्वचन सुखम् । सुकृतफलं सुखमप्यनुभवतीति चेन्न तादृशस्य सुखस्यापि दुःखमिश्रितत्वेन दुःखरूपत्वात्, सुखदुःखचक्रे परिवर्तमाने सुखानन्तरमापततोऽल्पस्यापि दुःखस्य महत्त्वेन प्रतीयमानत्वात् हेतोः तत्सुखस्यैव सुतरां दुःखनिमित्तत्वाच्च । तदुक्तं युक्तिप्रयुक्तिप्रवीणैर्हारितायनमहर्षिभिर्हेमलेखाहेमचूडसंवादे[2]—

योऽयं भोगः सुखार्थोऽस्ति सोऽप्यनन्तो भवेन्नतु ॥ १७ ॥
न केनचित्तदखिलं प्राप्तं यस्मात्सुखं भवेत् ।
यत्किञ्चिल्लाभतो यस्मात्[3]सुखं तत्रापि संश्रृणु ॥ १८ ॥

---

(१) सूर्येणेत्यर्थः । "चण्डांशुरंशुमानंशुस्सहस्रांशुस्सदागतिः" इति वैजयन्त्यां यादवप्रकाशः ।

(२) त्रिपुरारहस्यस्य ज्ञानखण्डगतचतुर्थाध्यायस्था इमे श्लोकाः ।

(३) अत्र "यस्माद्" इत्यस्य स्थाने "यत्तु" इति पाठो वरीयान् भाति । अपि वा यत्तु इत्यर्थे एव यस्मादिति आर्षः पाठो भवेत् ।

न तत्सुखं भवेन्नाथ यतो दुःखविमिश्रितम् ॥ १६ ॥
सुखं वाञ्छावशेषेऽपि यदस्ति नृपसम्भव ।
तद् दुःखमेव जानीहि यत्कृमिष्वपि सम्भवेत् ॥ २३ ॥
वरं तिर्यक्कीटकृमिप्रभृतीनां सुखन्तु यत् ।
स्वल्पवाञ्छासम्मिलितं; नृणां किं स्यात् सुखं वद ॥ २४ ॥
वाञ्छाशतसमाविष्टो यदि किञ्चिदुपेत्य तु ।
सुखी भवेदिह तदा को हि न स्यात्सुखी वद ॥ २५ ॥
अखिलाङ्गे वह्निदग्धे सूक्ष्मपाटीर[1]विन्दुना ।
यदि शीतलदेहः स्यात् तदा सोऽपि सुखी भवेत् ॥ २६

अनुभवन्ति च लौकिकपरीक्षका अपि "महतां[2] चोपरि निपतन्नणुरपि सृणिरिव करिणां क्लेशः कदर्थनायालम्" इति[3]। तदस्या अनर्थपरम्पराया मूलमविद्यैव ।

अविद्यायामन्तरे वर्तमानाः
स्वयंधीराः पण्डितंमन्यमानाः ।
दन्द्रम्यमाणा[4]: परियन्ति मूढा
अन्धेनैव नीयमाना यथाऽन्धाः ॥
(कठ० उ० १।२।५; मुं० उ० १।२।८)

इति भगवती श्रुतिरप्याहाऽविद्यादौरात्म्यं स्वश्रीमुखेन ॥

सेयमविद्या कथं निस्तरणीयेत्यनुयोगे केचन प्रत्यवतिष्ठन्ते कर्मभिरिति । अपरे चाहुः प्रसङ्ख्या[5]नेनेति । अन्ये च जगुर्भक्त्यैवेति । परं त्रितय-

(१) पाटीरविन्दुश्चन्दनविन्दुः । (२) सांसारिकसुखोपकरणीभूतसर्वसम्पत्तिभाजामित्यथः । कर्पक्षे तु महत्परिमाणवतामित्यर्थः । (३) हर्षचरिते सावित्रीवाक्यम् । (४) मुण्डकोपनिषदि तु 'जङ्घन्यमानाः' इति पाठः । (५) प्रसङ्ख्यानमत्रोपासना "प्रसङ्ख्यानं शब्दयुक्तिप्रत्ययानामावृत्तिः" इति भिक्षूक्तेः ।

मप्येतन्मतं यथा निस्तत्त्वमिति तु न तिरोहितं विचारशीलानाम् । यद्यत्कृतकं तत्तदनित्यमिति लौकिकन्यायमनुवदन्तीभिः "तद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते"। ( छां०उ० ८।१।१६ ) "परीक्ष्य लोकान्कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन"। ( मुं० उ० १।२।१२ ) न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" ( कै०उ० २) इत्यादिभिः श्रुतिभिः, "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" । ( भ० गी० ९।२१ ) "क्षीणपुण्यः पतत्यर्वागनिच्छन्कालचालितः"(श्रीमद्भा०११।१०।२६) इत्येवमादिभिः स्मृतिभिश्च कर्मणां मोक्षप्राप्तिहेतुत्वं स्पष्टमेव प्रत्यषेधि।

एतेन साक्षात्कर्मणां मोक्षहेतुत्वे निषिद्धेऽपि विविदिषायै मलिनान्तःकरणजिज्ञासुजनमनोमार्जनार्थं शास्त्रीयाणां फलाभिसन्धिरहितानां कर्मणामवश्यकरणीयत्वमव्याहतम्, अन्यथा "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳसमाः। एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे"। ( यजु०४०।२ ) "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इत्यादीनां श्रुतीनाम् "न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् । जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् ॥" ( भ० गी० ३।२६ ) "आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते"॥ (भ० गी० ६।३ ) "तावत्कर्माणि कुर्वीत न निर्विद्येत यावता। मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते॥" ( श्रीमद्भा० ११। २०।९ ) भगवत्परो "निवृत्तं[1] कर्म सेवेत" (श्रीमद्भा० ११। १०। ४) "नाचरेद् यस्तु वेदोक्तं स्वयमज्ञोऽजितेन्द्रियः। विकर्मणाह्यधर्मेण मृत्योर्मृत्युमुपैति सः॥ वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे। नैष्कर्म्यां लभते सिद्धिम्" ( श्रीमद्भा० ११।३। ४५-४६ ) इत्यादीनां स्मृतीनां "चित्ते ह्यादर्शवद् यस्माच्छुद्धे विद्या प्रकाशते।

(१) निवृत्तिप्रयोजनकं फलाभिसन्धिरहितमित्यर्थः।

-यैर्मनित्यैश्च यज्ञैश्च तपोभिस्तस्य शोधनम् ॥ " ( उप०सा० प० १७।२२।) " चित्तस्य शुद्धये कर्म " ( विवेक० ११ ) इत्याद्य-भियुक्तोक्तीनां च व्याकोपप्रसङ्गात्; "विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः। ( मुं० ३।१।८ ) " नाविरतो दुश्चरिता-न्नाशान्तो नासमाहितः । नाशान्तमानसो वापि प्रज्ञानेनैनमा-प्नुयात् ॥ " ( कठ० उ० १।२।२३ ) " यस्त्वविज्ञानवान्भव-त्यमनस्कः सदाऽशुचिः । न स तत्पदमाप्नोति संसारं चाधि-गच्छति ॥" ( कठ० उ० १।३।७ ) इत्यादिभ्यः श्रुतिभ्यः—

"मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः ।
तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते ॥ "

( म० भा० मोक्ष० २५०।४ वनपर्व २६०।२५)

इत्यादिस्मृतिषु गीयमानात् लौकिकपरीक्षकजनानुभवसंवलितात् मनः-समाधानमाहात्म्याच्च निर्मलान्तःकरणानामेव ब्रह्मविचारेऽधिकारसम्भवात् ।

प्रसङ्ख्यानमपि मानसं कर्मैवेति कर्मणि निरस्ते नाक्रियासाध्ये नित्य-सिद्धे मोक्षे एतस्याप्यवकाशो भवितुमर्हति । विरोधाभावाच्च नैकमपि उभयो-स्तयोरविद्यानिवर्तकं स्यात् । नहि तिमिरं तिमिरं तिरोस्करोति अविरोधात् । नाप्यग्निरग्निं भस्मीकरोति अविरोधादेव । श्रुतिरपि मुहुर्मुहुराह "नान्यः पन्था विद्यते अयनाय " ( श्वे०उ०३।८;६।१५; तै०आ०३।१३) "ज्ञात्वा देवं सर्वपाशापहानिः " ( श्वे०उ० १।११) यदा चर्मवदाकाशं वेष्टयि-ष्यन्ति मानवाः । तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति ॥ " ( श्वे० उ० ६।२० ) इति । अतो विद्यां विनाऽविद्याऽपनोदो नैव शक्यः कर्तुम् । युक्तश्चैतत् यतस्तयोरेव हि परस्परं निवर्त्यनिवर्तकभावः । न हि तिमिरं कदाचिदपि दूरीभवेत् प्रकाशं विना ।

अखण्डाकारा वृत्तिरप्यविद्यान्तगर्तत्वेन तदविरोधिनी कथम-विद्याविनिवर्तिकाऽभिमन्यत इति चेन्न रजस्त्वेऽपि नीरवर्तिरजो-

ऽपनयनसामर्थ्यशालिकतकरजोवत्, भ्रमत्वेऽपि सम्यक्फलप्रदायिसंवादिभ्रमवत् , मिथ्यात्वेऽपि प्रतिविम्बादेर्वास्तविकबिम्बाद्यनुमानप्रामाण्यवच्च तस्या अविद्याविरोधित्वेन मोक्षसाधनत्वस्येष्टत्वात् । अविशिष्टा एते सर्वे दृष्टान्ताः प्रसङ्ख्यानेऽपीति चेत्तदपि न, अखण्डाकाराया वृत्तेर्विद्यारूपत्वेन विशिष्टत्वात् । तदुक्तमाचार्यवर्यैः " **निर्विकारात्मबुद्धिश्च विद्येतीह प्रकीर्तिता** " (उप० सा० प० १।१२) इति । नन्वेवञ्चेत् " **स्वयं भ्रमोऽपि संवादी यथा सम्यक्फलप्रदः । ब्रह्मतत्त्वोपासनापि तथा मुक्तिफलप्रदा** " ( पञ्चदशी ९ । १३ ) इत्याद्यभियुक्तोक्तीनां का गतिरिति चेन्नास्माकं तत्र कापि विप्रतिपत्तिः, विद्याद्वारैवोपासनस्य मुक्तिसाधनत्वेन तैरभिप्रेतत्वात् । तथाह्यूचुस्त एव तत्रैव " **ब्रह्मज्ञानायते पुंसो निर्गुणोपासनं शनैः** " ( पञ्च० ९ । १२२ ) इति । " **यथा संवादिविभ्रान्तिः फलकाले प्रमायते । विद्यायते तथोपास्तिर्मुक्तिकालेऽतिपाकतः** " ( पञ्च० ९ । १२३ ) इति च ।

एतेन "**भक्त्याऽहमेकया ग्राह्यः**" ( श्रीमद्भा० ११ । १४ । २१ ) **न साधयति मां योगो न साङ्ख्यं धर्म उद्धव । न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता** ॥ ( श्रीमद्भा० ११।१४।२० ) इत्यादीनि भक्तिश्रेष्ठत्वपराण्यपि वाक्यानि व्याख्यातानि समानन्यायात् । उक्तञ्च श्रीमद्भागवते

**इत्यच्युताङ्घ्रिं भजतोऽनुवृत्त्या**
**भक्तिर्विरक्तिर्भगवत्प्रबोधः ।**
**भवन्ति वै भागवतस्य राजँ-**
**स्ततः परां शान्तिमुपैति साक्षात्** ॥ इति ॥
( श्रीमद्भा० ११।२।४३)

एष विद्ययाऽविद्यापनोदो मोक्षो नाम । एतदेवामृतत्वम् । सैषा मुक्तिः । तदेतद्वास्तविकं सुखं निःश्रेयसशब्दव्यपदेश्यम् । सैषैव चैकान्तिकाऽऽत्यन्तिका

च दुःखनिवृत्तिः। या खल्वनिशमभिलष्यमाणापि, सततं चिन्त्यमानापि अनवरतं कीर्त्यमानापि, सर्वशक्त्याऽऽहिण्डयमानापि अविद्यामाहात्म्यपरिमुषितात्मनो जीवस्यातीव दुर्लभा। या चैकवारं प्राप्ता सती न कदाचिन्निवर्तते "न स पुनरावर्तते न स पुनरावर्तते" (कालाग्नि० उ०) "न च पुनरावर्तते न च पुनरावर्तते" (छां० उ० ८।१५।१) इत्यादिश्रुत्यनुगृहीतेभ्यः "अनावृत्तिः शब्दादनावृत्तिः शब्दात्" (ब्र० सू० ४।४।२२) "आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन। मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" (भ० गी० ८।१६) इत्येवमादिप्रमाणेभ्यः। सति चैवं तदात्यन्तिकत्वनिवृत्त्या हेयत्वप्रसङ्गाच्च।

सैषाऽविद्याविरोधिनी विद्या पुनः कथं सम्पादनीयेत्याशङ्कायां सत्यामाहुर्विवेकेनेति। विवेकश्च सदसद्विवेचनरूपो न विचारादृते जातु जायते। विचारमाहात्म्यमविचारदौरात्म्यञ्चोक्तं विस्तरेण सारल्येन च दत्तात्रेयभगवद्भिर्भगवन्तं भार्गवं राममुपदिशद्भिस्त्रिपुरारहस्यस्य ज्ञानखण्डगते द्वितीयाध्याये। तथाहि—

"विचारः सर्वमूलं हि सोपानं प्रथमं भवेत् ॥५१॥
परश्रेयोमहासौधप्राप्तौ जानीहि सर्वथा।
सुविचारमृते क्षेमप्राप्तिः कस्य कदा भवेत् ॥५२॥
अविचारः परो मृत्युरविचारहता जनाः।
विमृश्यकारी जयति सर्वत्राभीष्टसङ्गमात् ॥ ५३ ॥
विचारः सुखवृक्षस्य बीजमङ्कुरशक्तिकम् ॥५५॥
विराजते विचारेण पुरुषः सर्वतोऽधिकः।
विचाराद्विधिरुत्कृष्टो विचारात्पूज्यते हरिः ॥५६॥
सर्वज्ञस्तु विचारेण शिव आसीन्महेश्वरः।
अविचारान्मृगासक्तो रामो बुद्धिमतां वरः ॥५७॥
परमामापदम्प्राप्तो विचारादथ वारिधिम्।
बद्ध्वा, लङ्कापुरीं रक्षोगणाकीर्णां समाक्रमत् ॥५८॥

अविचाराद्विधिरपि मूढो भूत्वाऽभिमानतः ।
शिरश्छेदं समगमदिति संस्तुतमेव ते ॥५९॥
महादेवोऽविचारेण वरं दत्वाऽसुराय वै ।
भस्मीभावात्स्वस्य भीतः पलायनपरोऽभवत् ॥६०॥
एवमन्ये सुरा देवा यातुधाना नरा मृगाः ।
अविचारवशादेव विपदं प्राप्नुवन्ति हि ॥६२॥
महाभागास्ते हि धीरा यान्कुत्रापि च भार्गव ! ।
विजहाति विचारो नो नमस्तेभ्यो निरन्तरम् ॥६३ ॥"

अपि च

"विचारोदयपर्यन्तं भयमस्ति महत्तरम् ।
अविचारात्मदोषेण ग्रस्तस्य प्रतिवासरम् ॥७५ ॥
यथा हि सन्निपातेन ग्रस्तस्यौषधसेवनात् ।
अपि तावद्भवेद्भीतिर्यावद्धातोरशुद्धता ॥७६॥
प्राप्ते विचारे परमे फलितं जीवितं नृणाम् ।
यावत्सु जन्मसु नृणां विचारो न भवेत् परः ॥७७॥
तावन्तो जन्मतरवो वन्ध्या विफलहेतुतः ।
स एव सफलो जन्मवृक्षो यत्र विमर्शनम् ॥७८॥ "

अन्यच्च

"कूपमण्डूकसदृशा ये नरा निर्विमर्शनाः ।
यथा कूपे समुत्पन्नो भेको नो वेद किञ्चन ॥७९॥
शुभं वाप्यशुभं वापि कूपे एव विनश्यति ।
तथा जना अपि वृथोत्पन्ना ब्रह्माण्डकूपके ॥८०॥
शुभं वाप्यशुभं वापि न विदुः स्वात्मनः क्वचित् ।
उत्पद्योत्पद्य नश्यन्ति न जानन्ति स्वकं हितम् ॥ ८१॥
सुखबुद्धिश्च दुःखेषु सुखे दुःखविनिश्चयम् ।

प्राप्याविचारमाहात्म्यात्पच्यन्ते स्मृतिपावके ॥८२॥
दुःखेन क्लिश्यमानाश्च न कथञ्चित्त्यजन्ति तत् ।
यथा पादशताघातैस्ताडितोऽपि महाखरः ॥८३॥
रासभीमनुयात्येव तथा संसरणं जनः ।
त्वन्तु !राम विचारात्मा पारं दुःखस्य सङ्गतः ॥८४॥" इति ।

"नोत्पद्यते विना ज्ञानं विचारेणान्यसाधनैः" (अपरो० ११) "वस्तुसिद्धिर्विचारेण" (विवेक० ११) "अर्थस्य निश्चयो दृष्टो विचारेण" (विवेक० १३) "अतो विचारः कर्तव्यः" (विवेक० १५) इत्यादीनां कर्मापवादं विचारप्रस्तावकानामाचार्यवर्यवचनानामप्यस्मिन्नेवार्थे परं तात्पर्यम् ।

तस्यैतस्य श्रेयोमूलस्य विचारस्यैव प्रवर्त्तनार्थं तदुपयुक्तान्तःकरण-संस्करणार्थञ्चानेकानि दर्शनानि तत्त्वज्ञैः प्रणीतानि । तेषु मुख्यानि तु षडेवेत्यत्र न विदां विवादः । तद्यथा महर्षिगौतमप्रणीतं न्यायदर्शनमेकम् । पूज्यपादकणादविरचितं वैशेषिकदर्शनं द्वितीयम् । सिद्धेश्वरकपिलप्रस्तुतं साङ्ख्यदर्शनं तृतीयम् । योगीश्वरपतञ्जलिसङ्कलितं योगदर्शनं चतुर्थम् । महामुनिजैमिनिनिबद्धं पूर्वमीमांसादर्शनं पञ्चमम् । 'व्यासो नारायणः स्वयम्" 'अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः । अभाललोचनः शम्भुर्भगवान् बादरायणः" ॥ इत्याद्युक्तेः भगवदभिन्नरूपैः श्रीवेदव्यासमहर्षिभिः सूत्रितमुत्तरमीमांसादर्शनञ्च षष्ठम् । तत्राद्ये आरम्भवादनिरूपके अपि मुख्यतः प्रमाणाप्रमाणविचारपरे । तृतीयं परिणामवादपरमपि प्रकृतिपुरुषविवेकपर्यवसायि । चतुर्थं समाधिफलकमपि प्रसङ्ख्यानप्रसङ्गं नातिक्रामति । पञ्चमश्चाम्नायस्य क्रियार्थत्ववादि कर्मण्येव सर्ववेदतात्पर्यमिति निरूपयति । षष्ठन्तूपनिषत्परिपुष्टाभिः परमप्रौढयुक्तिभिः सर्वाणि वादान्तराणि निरस्य ब्रह्मज्ञान एवाखिलवेदतात्पर्यमिति व्यवस्थापयति । एतद्विषये—

तावद्गर्जन्ति शास्त्राणि जम्बुका विपिने यथा।
न गर्जति महाशक्तिर्यावद्वेदान्तकेसरी ॥

इति वाचोयुक्तिस्तु नातिशयोक्तिरूपेत्यत्रानुभव एव विदुषां प्रमाणम्।

न च परस्परं विरोध्यर्थाभिधानेनैतेषामेकं विहाय सर्वेषामपरेषां हेयत्वमेव युक्तमिति वाच्यं जिज्ञासुजनमनःसम्मार्जनार्थं सर्वेषामेवैतेषां यथायथमुपयुक्तत्वात्, सोपानक्रमन्यायेन स्थूलारुन्धतीन्यायेन वा तेषामेकस्मिन्नेवार्थे समन्वयसम्भवात्, सर्वथाऽप्यसद्रूपस्य जगतः सृष्टिमपवदद्भिरपि तदुत्पत्तिक्रमं महत्यारभटया वर्णयद्भिर्वसिष्ठमिश्रैः पुनः 'मन्दानां बोधसिद्ध्यर्थं तत्त्वज्ञैः कल्पितः क्रमः" इत्येवमध्यारोपावर्जनीयतायाः स्वारस्यस्य समाहितत्वाच्च।

तदेवमहेयत्वेऽपि अन्येषां दर्शनानां ब्रह्मदर्शनस्य सर्वतोमुख्यत्वमव्याहतम्। सच्छास्त्रोपादेयतां स्तुवद्भिरसच्छास्त्रोपादेयताञ्चापवदद्भिश्चोक्तमभियुक्तैर्योगवासिष्ठे—

तस्मादस्मान्निवर्तध्वमसच्छास्त्रविचारणात्।
शान्तिं प्राप्स्यथ सच्छास्त्राज्जयलक्ष्मीं यथा रणात्॥
विवेके चाविवेके च वहत्येषा मनोनदी।
यत्रैव वाह्यते यत्नात्तत्रैव स्थितिमृच्छति॥
अस्माच्छास्त्रादृते श्रेयो न भूतं न भविष्यति।
ततः परमबोधार्थमिदमेव विचार्यताम्॥ इति।

सच्छास्त्रञ्च तदभिप्रेतं तदेव यदात्मज्ञानपर्यवसायि इति स्पष्टीकृतं तैस्तत्रैव यथा—

भवबन्धमयी साधो विषमेयं विषूचिका।
आत्मज्ञानादृते दीर्घा न कदाचन शाम्यति॥ इति।

---

(१) सोऽयं समन्वयः टीकाकृतां दर्शनाविरोधसमीक्षावार्तिकग्रन्थेऽवलोकनीयः। (२) यो० वा० ६। २। १०३। २३-२५ (३) यो० वा० ६। २। १०३। २८।

सच्छास्त्राभ्यासपरतापरतयैव भगवान् वेदः पुनः पुनराह "स्वाध्यायोऽध्येतव्यः।" (तै० आ० २।१५।७) "स्वाध्यायान्मा प्रमदः।" (तै० उ० १।११) "स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्"। (तै० उ० १।११) इति। कर्मप्रवृत्तिप्रयोजनकत्रयीपर एवायं सर्वत्र स्वाध्यायशब्द इति चेन्न तदर्थाकुञ्चने प्रमाणाभावात्, परमपुरुषार्थविवरणपराणां वेदान्तानामपि वेदान्तःपातित्वेन सर्वस्यैव वेदस्य मुख्यतः परमपुरुषार्थनिरूपणपरत्वेनाभिप्रेतत्वाच्च।

"इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम्।
अयं तु परमो धर्मो यद् योगेनात्मदर्शनम्॥"

(या० स्मृ० १।८)

इत्येवमात्मज्ञानस्योपेयतामिज्यादीनाञ्चोपायतामभिदधद् याज्ञवल्क्यमुनिरप्यात्मज्ञाननिरूपकं शास्त्रं सर्वोपरिभूतमाचष्टे।

शास्त्राण्यधीत्य मेधावी अभ्यस्य च पुनः पुनः।
परमं ब्रह्म विज्ञाय उल्कावत्तान्यथोत्सृजेत्॥

(अ० ना० १)

ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः[1]।
पलालमिव धान्यार्थी त्यजेद्ग्रन्थमशेषतः॥

(अ० बि० उ० १८)

तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः।
नानुध्यायाद्बहूञ्शब्दान्वाचो विग्लापनं हि तत्॥

(बृ० ४।४।२१)

इत्यादयः श्रुतयः

अविज्ञाते परे तत्त्वे शास्त्राधीतिस्तु निष्फला।
विज्ञातेऽपि परे तत्त्वे शास्त्राधीतिस्तु निष्फला॥

(१) "तत्परः" इत्यस्य स्थाने "तत्त्वतः" इति पाठभेदोऽपि दृश्यते।

इत्यादयोऽभियुक्तोक्तयश्च ब्रह्मज्ञानोत्तरं सर्वशास्त्रनैष्फल्यमभिदधाना ब्रह्मज्ञानमेव च सर्वतोमुख्यं शास्त्रप्रतिपाद्यमिति निरूपयन्त्यः साक्षाद् ब्रह्मज्ञान-प्रतिपादकस्यैव शास्त्रस्य सर्वशास्त्रशिरोमणितामभिप्रयन्ति । ब्रह्मदर्शनञ्च ब्रह्मस्वरूपप्रतिपादनपरत्वेन, तत्रैव सर्वेषां वेदान्तानां परमं तात्पर्यमिति युक्ति-प्रमाणोपन्यासपुरस्सरं निर्णायकत्वेन च उपर्युक्तसच्छास्त्रपदवीमधिरोहतीति नात्र कथमपि संशयलेशावकाशः ।

तस्यैतस्य ब्रह्मदर्शनस्य सूत्ररूपस्य निर्विशेषाद्वैतपरं शारीरकाख्यं व्याख्यान-मकारि मूर्तिमच्छङ्करभगवद्भिः शङ्करनामधेयैः **श्रीशङ्कराचार्यैः** । नैष्ठिकब्रह्म-चर्योपबृंहितगुरुजनसत्कृपाप्रवृद्धबुद्धिवैभवेनैतद्ग्रन्थगतगूढतमरहस्यान्यादायोपक्षिप्त-सर्वशास्त्रार्था ब्रह्मदर्शनस्य प्रथमां चतुःसूत्रीं सुविशदमपूर्वेण प्रकारेण नवनवाभिश्च युक्तिभिः शास्त्रीयाभिरर्थतो व्याचिख्यासुभिः; पूर्वकाशीस्वधीतव्याकरणादिसर्व-शास्त्रैः;प्रख्यातविद्यामहिम्नां,निस्तीर्णसर्वलघिम्नां,सर्वतन्त्रस्वतन्त्राणामपि शिष्यानु-रोधपरतन्त्राणां, कैलासवासिनामपि[१] हृषीकेशस्थितीनाम्, गिरिवद्गुरुतां दधानानां गिरीणामप्यमहीभृतां, धनराजविख्यातीनामप्यकुबेराणां[२], हृषीकेशीयकैलासा-श्रमाधिष्ठातॄणां ( श्री १०८ श्रीस्वामि**धनराजगिरीणां** ) चरणकमलकृपा-स्वादितश्रुतिशिरोरहस्यमकरन्दैः; उत्तरकाश्यादिस्थानपार्श्ववर्तिषु परमैकान्त-

---

(१) कैलासो नाम हिमवद्गिरिमध्यवर्ती हिमाच्छन्नः पर्वतविशेषः । पक्षे कैलासाश्रमेतिनाम्ना प्रसिद्धः हृषीकेशीयाश्रमविशेषः ।

हृषीकेशो नाम हिमगिर्युपत्यकावर्ति सत्सङ्गप्रथितमाहात्म्यं सुरसरित्तट-स्थितं तीर्थस्थानम् । तस्मिन् स्थितिर्निवासो येषां ते तेषामित्यर्थः । पक्षे हृषीकाणामिन्द्रियाणामीशो हृषीकेशो भगवान् विष्णुर्ब्रह्म वा **श्रोत्रस्य श्रोत्र**-मित्यादिश्रुतेः । तस्मिन् स्थितिर्निष्ठा येषां ते तेषां, परमभागवतानां ब्रह्मनिष्ठानां चेति भावः ।

( २ ) कुत्सितं बेरं शरीरं यस्य स कुबेरः कुरूप इति यावत् । स न भवतीत्यकुबेरः सौम्यमूर्तिरित्यर्थः । तेषाम् । पक्षे कुबेरो धनदस्तद्भिन्नानाम् ।

प्रदेशेषु परिनिष्ठापितारण्यकविद्यैः; ब्रह्मश्रोत्रियैः; ब्रह्मनिष्ठैः; विद्वन्मण्डली-मुण्डमण्डिताङ्घ्रिकञ्जैः; ब्रह्मविद्याचणदाक्षिणात्यविपश्चिद्वरसुब्रह्मण्यशास्त्रिमहा-महोपाध्यायश्रीस्वामिकेशवानन्दमहामहोपाध्यायलक्ष्मणशास्त्र्यादिपण्डितप्रका-ण्डप्रशंसितप्रवचनप्रकारैः; योगिवर्यैः; नानादिग्दिगन्तरागतभक्तमण्डलीसतत-सेव्यमानचरणद्वन्द्वैः; मुहुर्मुहुर्महामनोमदनमोहनमालवीयोपहृतसुमनो-मालालङ्कृताङ्घ्रिभिरपि निर्मानैः; समस्तभारतवर्षोद्धरणबद्धपरिकरभुवन-विख्यातमहामहिममोहनदासकर्मचन्द्रगान्धीसम्मानितैरप्यनाख्यातमाहा-त्म्यैः, परमहंसविरक्तनाथसम्प्रदायानुचरवृद्धमहापुरुषदीक्षितैरपि परमहंस-विरक्तनाथैः; पवित्रकीर्तिपरमहंसवरश्रीरामकृष्णदीक्षागुरुभिरपि स्व-जन्मालङ्कृतबीकानेरप्रदेशैः; श्रीवीरविजयकवयितृभिरपि विगतसर्वकर्तृ-

---

(१) एतेषां महापुरुषाणामभिख्या कृतप्रयत्नेनापि न पारिता ज्ञातुमिति नात्र दत्ता ।

(२) वङ्गविख्यातपरमहंसरामकृष्णगुरवस्तु पाश्चाला इति तत्पक्षे विरोधः । तत्परिहारस्तु पश्चात्प्रसिद्धपरमहंसश्रीरामकृष्णचरणपरामर्शेन करणीयः ।

(३) एतेषां जन्मग्रामनाम तु न ज्ञायते ।

(४) बाणखाक्षि-(२०५) पद्यमयोऽयं ग्रन्थः 'अग्निकौशिकनन्देन्दुमिते वैक्रमवत्सरे' सिकारपुरवास्तव्याभ्यां भक्तवर्यश्रीयुतसुन्दरदासहोला-रामाभ्यां निर्णयसागरनामनि मुम्बापुरवर्तिमुद्रणालये मुद्रापितः । तद्विषये इमे वाचोयुक्ती अत्र स्थानमर्हतः—

वेदान्तार्थविकासी लघुरप्येष गुरुरर्थतो विजयः ।
चिन्तामणिरिव सुचिता विचिन्त्यमानो व्यनक्ति सर्वस्वम् ॥२०३॥

यः कोऽपि वीरभवनं भजते निसर्गं
जीवन्नपीह स पुमाँल्लभतेऽपवर्गम् ।
यस्मिञ्छुतेऽस्तमुपयाति समस्तबन्धः
सोऽयं समाप्तिमगमद्विजयो निबन्धः ॥२०४॥

त्वाद्यभिमानैः; विरक्तिमूर्तिविपश्चिदपश्चिमपरमहंसवरश्रीस्वयञ्ज्योतिःसखैरपि स्वयञ्ज्योतिःस्वरूपैः; क्षमाभरगुरुभिरप्यशेषैः ; प्रियगोरक्षैरपि[3] निर्जितेन्द्रियैः; अजातशत्रुभिरपि अनभिमन्युभिः; अधृष्यैरप्यभीमैः; परिमिताहारविहारैरपि अपरिच्छिन्नाहरणविहरणसामर्थ्यशालिभिः; प्रेममयैरपि सततापोदितकदाचारैः; मङ्गलमयमतिगतिकीर्तिभिः **श्री १०८ श्रीस्वामिमङ्गलनाथैः** परतत्त्व-विचारपरोऽयं **विचारबिन्दुर्नाम** प्रकरणग्रन्थः कवयितुमारब्धोऽपि जिज्ञासुजना-

---

(१) हृषीकेशकनखलबीकानेरादिषु प्रदेशेषु परमप्रसिद्धा इमे पण्डित-प्रकाण्डाः। वेदान्तविषयकसूक्ष्मविचारपरस्य **सिद्धान्तदिग्दर्शननाम्नो** हिन्दी-भाषामयस्य प्रकरणस्य कर्तार इम एव ।

(२) क्षमा पृथ्वी तस्या भरो भारस्तेन गुरवो भारशालिनः । तैः। शेषो शेषनागः स न भवति इत्यशेषस्ने तैः। शेषस्तु धराभरगुरुरिति विरोधः। तत्परिहारस्त्वेवम् । क्षमा क्षान्तिः तस्या भरेण गुरवो गौरवशालिनः । शेषः परार्थः जगत्प्रपञ्चः स न भवतीत्यशेषं ब्रह्म तत्स्वरूपैरित्यर्थः ।

(३) गाव इन्द्रियाणि । परिहारपक्षे तु गावो धेनवः ।

(४) परिमिताहारविहारैः युक्ताहारविहारैरित्यर्थः । आहरणं भोजनं विहरणं व्यवहारो विनोदार्थं भ्रमणं वा। तयोः सामर्थ्यमाहरणविहरणसामर्थ्यम् । अपरिच्छिन्नं चैतदाहरणविहरणसामर्थ्यमित्यपरिच्छिन्नाहरणविहरणसामर्थ्यम् । तच्छालिभिरिति विरोधः। परिहारपक्षे तु अपरिच्छिन्नस्य परिच्छेदत्रयातीतस्य ब्रह्मणो बोधदानेन आहरणमानयनमत्युत्कटवैराग्यवद्भक्तजनसमीपीकरणमिति यावत् । तस्मिन्नेव च यद्विहरणं विहारः आत्मक्रीडा ब्रह्मनिष्ठेति भावः। तयोः सामर्थ्यमपरिच्छिन्नाहरणविहरणसामर्थ्यं तच्छालिभिः ।

(५) अजातशत्रुर्युधिष्ठिरः । अभिमन्युः सौभद्रः । परिहारपक्षे तु अभितः सर्वतो गत इति यावन्मन्युः क्रोधो दैन्यं वा । मध्यमपदलोपी समासः। नास्त्यभिमन्युर्येषु ते तैरित्यर्थः ।

(६) कुत्सितः आचारः कदाचारः 'कोः कत्तत्पुरुषेऽचि' इति कोः कदादेशः। सततमपोदितः निन्दितः कदाचारो यैः ते तैरिति भावः।

-नामल्पभाग्यतया न पूरयितुपारि। केवलं परिच्छेदद्वयगतवस्विन्दुरस-(६१८) श्लोकात्मकः पूर्वार्धं एवाऽस्य तैर्निबद्धस्तच्चरणरजःपरिमाणुपरिपूतलवपुरीय-'सन्तकुटिया' सेवकभक्तहरजीरामद्वारा मुम्बय्यां मुद्राप्य प्राकाश्यमभजत। उत्तरार्धस्तु प्रारब्धोऽपि केवलं त्रयोदशश्लोकोपनिबन्धानन्तरं नैकविधलोक-सङ्ग्रहहैतुककार्यवाहुल्यरूपान्तरायेणान्तरितोऽपूर्ण एव समतिष्ठत। प्रातः-स्मरणीयाश्च जीवन्मुक्तवर्याः स्वीकृत्य पूर्वस्मिन् दिने नानाशाऽऽगतविद्व-न्मुनिभक्तमण्डलोपरचितगुरुपूजासम्भारम्, विहाय प्रियगोगणरक्षाभिनिवेशम्, अपहायानुरक्तभक्तमण्डलीम्, अवज्ञायावशिष्टलोकसङ्ग्रहकार्यम्, अवमत्य हृषीके-शीयदेवकुल 'सुधार' सुधारसासक्तचित्तं वैष्णवसङ्घम्, अथ चावगणय्य सर्वथा प्रतिभासमात्रस्वरूपं जगत्प्रपञ्चम्, प्रारब्धभोगक्षयात्—

बाणवस्वङ्कचन्द्रे ( १९८५ ) ऽब्दे वैक्रमे नभसोऽसिते।
पक्षे प्रतिपदि प्रातः कैवल्यं समवाप्नुवन् ॥

अथ **'आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तया'** इति श्रुत्यनुकूलतया गम्भीरवेदान्ततत्त्वविचारेण ज्ञानिजनानेहोयापनाय जिज्ञासु-जनानाञ्चामन्दाभिलाषपूरणाय तेषां मुनिवराणामभिप्रेतं सर्वमप्यर्थजातं यथा-शास्त्रं विशकलय्य अपूर्णमपि तं ग्रन्थं टीकयित्वा पूरयितुं साक्षाद्ब्रह्ममूर्तीनां परमहंसवरश्री १०८ श्रीस्वामिरामकृष्णचरणानामाशंसाशंसितैर्लवपुरीय-'सन्तकुटिया' सेवकैः श्रीजयकृष्णप्रभृतिभिः विविधग्रन्थरचनादिचातुरी-चञ्चवः पण्डितमण्डलीमण्डनायमानाः सर्वतन्त्रस्वतन्त्राः वेदान्तविद्याविशारदाः सन्तकुटियायामुपनिषद्भाष्यशारीरकभाष्याद्यनेकवेदान्ताकरग्रन्थकथावाचनलब्ध-

( १ ) अनादितत्त्वम्, वेदान्ततत्त्वसमीक्षा, दर्शनाविरोधसमीक्षावार्त्तिकम्, श्रीकृष्णस्तवकशतकम्, न्यायसिद्धान्तमुक्तावल्याः 'प्रभा', न्यायपञ्चलक्षण्याः 'अन्वितार्थप्रकाशिका', काव्यादर्शस्य 'कुसुमप्रतिमा', चित्सुख्याः स्वप्रकाशवादान्तो हिन्दीभाषानुवादः इत्येवमादयो मुद्रितामुद्रिता अनेके ग्रन्था एभी रचिताः, टीकिता अनूदिताश्च।

प्रतिष्ठाः दर्शनाचार्यकवितार्किकादिविविधविरुदभाजः श्री ६ श्रीनृसिंहदेव-शास्त्रिणः प्रार्थिताः । अहमपि च विनयविधेय आज्ञप्तस्तमेव सम्पाद्य प्रकाश-यितुम् । उभयोरप्यावयोर्केरेन वेदान्तशास्त्रविचारव्यसनिना सप्रेमोपहृतोपहार-पुष्पमालेव सा प्रार्थनाऽपरेण च जिज्ञासुभावमन्विच्छता सप्रसत्ति दत्ता शेषेव साऽऽज्ञा स्वस्वशिरसि विधृते । व्याप्रियावहि च यथाकालमावां स्वस्वकार्ये । शरीरस्य कार्श्येन मुहुर्मुहू रोगैराक्रम्यमाणैरपि पण्डितवर्यैरेतस्य प्रथमः परिच्छेदः विषयस्य गूढतायां सत्यामपि यथासम्भवं सरलसंस्कृतटीकया **पीयूषवाहिनी**-संज्ञया टीकितः केषुचिद्विषमस्थलेषु टिप्पणीभिः संयोजितश्च । असंस्कृतज्ञानां जिज्ञासूनामल्पायासेनैव तत्त्वार्थबोधनाय सङ्गतिपदार्थान्वयतात्पर्यबोधनपराऽन्वर्था **मिताक्षरा**नाम्नी हिन्दीटीकाऽपि समयोजि । मयाऽपि सम्पादयता क्वचित् क्वचिदव-शिष्टावश्यकस्थलेषु टिप्पणीर्विन्यस्य पाठकवृन्दसौकर्यमभिलक्ष्य तत्र तत्र स्थूल-सूक्ष्माक्षरपरिवर्तनञ्च विधाय पश्चात्तेषु परमविख्याते **'बाम्बे मैशीन प्रेस'** इत्याख्ये मुद्रणालयेऽमुद्रापि । सर्वप्रकारैर्यथाशक्ति प्रयतमानस्यापि **"गच्छतः स्खलनं क्वापि भवत्येव'** इति न्यायेन त्रुटयोऽवश्यम्भाविन्य इति ता उपेक्ष्य **"शैवलं किल विहाय केवलं निर्मलं किमु न पीयते जलम्"** इत्येवंरीत्या शास्त्रीयतत्त्वमवगाहन्तां तत्त्वपरिमलग्राहिणो विद्वच्चञ्चरीकाः । रुचितश्चेत्सचेतसामयं श्रमस्तर्ह्यवशिष्टोऽप्यस्य ग्रन्थस्य भागः यथावसरं प्रकाशयिष्यते । अन्ते च

धन्याः खलु महाभागाः उदारचरिताशयाः ।
प्रकाशनेऽस्य यैरर्थैः सुसहायः कृतोऽस्म्यहम् ॥
धन्यधन्याश्च ते सन्तः परतत्त्वविचक्षणाः ।
प्रोत्साहवचनैर्येषां कृतार्थोऽयं जनः कृतः ॥

इति निवेदयति

विदुषां वशंवदो
दर्शनाचार्याणामन्तेवासी
**गोपीचन्द्रवर्मा**

घावलियां
श्रीकृष्णजन्माष्टमी १९९०

* ॐ *

# भूमिका

प्रभातकाल में यथा, निवार अन्धकार को ।
निजप्रकाश से रवी, दिखात भूतलादि को ॥
निजस्वरूप को तथा, विचार से दिखात है ।
विचारबिन्दु सज्जनो ! तभी हमें सुहात है [1]॥

ब्रह्मा से लेकर कीट पर्यन्त सभी प्राणि सुख को चाहते हैं। बात भी ठीक ही है क्योंकि सुख जीव का स्व-रूप है और स्व-रूप के साथ सभी का परम प्रेम देखा गया है। परन्तु फिर भी अनादि अविद्या से विमूढ़ जीव को वह है दुष्प्राप्य। रात दिन उस की इच्छा भी करता है, ध्यान लगा कर उस का चिन्तन भी करता है और सर्व शक्ति से उस की प्राप्ति के लिए यत्न भी करता है तो भी अनन्त जन्म जन्मान्तरों में अपने किये पुण्यपापों के फ़लों को भोगता हुआ यह जीव दुःख से विनिर्मुक्त नहीं होता। वास्तविक सुख की प्राप्ति तो इसे होती ही नहीं। इस में कोई सन्देह नहीं कि पुण्य का फल सुख होता है परन्तु ऐसा सुख वास्तविक सुख कदापि नहीं कहला सकता, क्योंकि अविशुद्धि, क्षय, सातिशयता, राग, द्वेष आदि अनेक दुःखों के बीज पड़े रहने के कारण इस में दुःख सदा मिला ही रहता है। एक और भी कारण है। सुख और दुःख

---

(१) श्रीस्वामीरामानन्दजी के एक श्लोक का पद्यात्मक भावानुवाद।

(२) आत्मा की परमानन्दरूपता आनुभाविक युक्तिओं द्वारा श्री-स्वामी विद्यारण्य जी ने पञ्चदशी ( १। ८-९ ) में सिद्ध की है।

इन दोनों की गति चक्र के समान होती है । दुःख के अनन्तर सुख और सुख के बाद दुःख आया करता है। जिस प्रकार दुःख भोगने के अनन्तर थोड़ा सा भी सुख बहुत सुख के समान प्रतीत होता है इसी प्रकार सुख के अनन्तर जब थोड़ा सा भी दुःख आ पड़ता है तो वह दूभर हो जाता है। इसी लिए ऐहिक और पारलौकिक दोनों प्रकार का सुख, दुःख की विशेषता की प्रतीति का कारण होने से, वस्तुतः दुःखरूप ही है । जब ऐसी बात है तो इसे वास्तविक सुख कैसे कहा जा सकता है ? युक्तिनिपुण हारितायन महर्षि के "त्रिपुरारहस्य" के ज्ञानखण्ड में विदुषी हेमलेखा अपने परमप्रिय पतिदेव राजकुमार हेमचूड़ को सम्बोधन करती हुई इस विषय में जो कुछ कहती है उस में से थोड़ा सा अंश अनूदित करके हम यहां पर उद्धृत करते हैं—

कुण्डलिया—यह सुखार्थ जो भोग है, सो अनन्त ह नाँहि ।
सब का सब यह भी कभी, मिलै किसी को नाँहि ॥
मिले किसी को नाँहि, अल्प भोगों से जो सुख ।
दुख-मिश्रित सो नाथ ! इसे समझें दुख ही दुख ॥
'गोपीचन्द्र[1]-'सरूप देव ! जहँ बनी रहे चहँ[2] ।
सो सुख कहां कहाय, रहे कीटों में भी यह ॥
भला सौख्य कीटादि का, जिन मन थोड़ी चाह ।
कहा सौख्य है मनुज को, जिस में भरी अथाह ॥
जिस में भरी अथाह चाह, यदि वह सुख पावे ।
कछुक भोग ही पाय, नहीं को अनँद[3] मनावै ॥
चन्दन 'चन्द्र' समान नाथ ! किमि है तनजला ।
चन्दनलेप सुथोर पाय, सुशीतलतन भलौ[4] ॥

(१) श्रीकृष्णचन्द्र । (२) चाह । (३) आनन्द । (४) संस्कृत के मूलश्लोक जिन का यह पद्यात्मक अनुवाद है संस्कृतभूमिका में देखें ।

दुर्वासा महर्षि के शाप के शोक से पीड़ित सरस्वती देवी को आश्वासन देते हुए सावित्री देवी ने भी अपने अनुभव से ही कहा था कि "ठीक है जिस प्रकार महत्परिमाण वाले हाथिओं के मस्तक में लगा हुआ छोटा सा भी अंकुश अत्यन्त दुःखदायी होता है इसी प्रकार महान् पुरुषों के ऊपर पड़ा हुआ थोड़ा सा भी दुःख बहुत क्लेशकर होता है"[1]।

इस प्रकार सर्व अनर्थपरम्परा की मूलकारण अविद्या ही है। वेद भगवान् भी जहां तहां अनेक स्थलों पर इसी अविद्या के दौरात्म्य को कथन करता उसकी शक्ति को बतलाता है। देखिए[2]:—

"जिस प्रकार एक अन्धे के पीछे लगे हुए अनेक अन्धे पुरुष मार्गादि से अनभिज्ञ हुए २ भटकते ही रहते हैं इसी प्रकार अविद्यावशीभूत जीव अपने आप को धैर्यसम्पन्न और बुद्धिशाली समझते हुए भी जन्ममरण के चक्र में घूमते ही रहते हैं"।

अब प्रश्न होता है कि इस सर्व अनर्थ की बीजभूत अविद्या से छुटकारा किस प्रकार पाया जा सकता है? इस प्रश्न का उत्तर प्रायः वादियों ने अपनी अपनी दृष्टि से भिन्न भिन्न ही दिया है। कई कहते हैं कि कर्मों के द्वारा इस अविद्या का नाश किया जा सकता है। दूसरे कहते हैं कि नहीं, उपासना के विना इसे दूर किया ही नहीं जा सकता। तीसरे कर्म और उपासना इन दोनों से हट कर तीसरा ही उपाय—अर्थात् भक्ति—इस की निवृत्ति के लिए सर्वतोमुख्य साधन बताते हैं। परन्तु विचारशील आस्तिकपुरुषों से यह बात छिपी नहीं है कि इन तीनों में से कोई भी उपाय अविद्या को निवृत्त करने में समर्थ नहीं। "जो जो पदार्थ कर्मजन्य होता है वह अवश्य अनित्य अर्थात् नाशवान् होता है" यह एक अनुभवसिद्ध न्याय है। अनेक श्रुतिएं तथा

(१) हर्षचरित १ (२) मुं० उ० १।२।८; कठ० उ० २।५

स्मृतिएं इसी न्याय का अनुवाद करती हुई इसका समर्थन करती हैं। उदाहरण के लिए देखिए छान्दोग्य उपनिषद्[1] में कहा है कि "जिस प्रकार इस लोक में कर्मजन्य पदार्थ क्षय को प्राप्त होता है इस प्रकार परलोक में यज्ञादिक पुण्यकर्मों द्वारा सम्पादित स्वर्गादि पदार्थ भी क्षय को प्राप्त हो जाता है" मुण्डकोपनिषद्[2] का वचन है कि "कर्मजन्य पदार्थों का क्षयिष्णुत्वरूप परिणाम देखकर मुमुक्षु पुरुष को उन से वैराग्य कर लेना चाहिये, क्योंकि यह एक अटल नियम है कि नित्य (मोक्ष) कर्मों से नहीं होता"। भगवद्गीता[3] में भगवान् कहते हैं कि "स्वर्गप्रापक पुण्यों के क्षीण हो जाने पर स्वर्गीय जीव फिर मर्त्यलोक में आ जाते हैं"। श्रीमद्भागवत[4] में भी वह यही कहते हैं कि "पुण्यों के क्षीण हो जाने पर काल से चालित हुआ २ स्वर्गीय जीव न चाहता हुआ भी नीचे (मर्त्यलोक में) गिर जाता है"। इन श्रुतिस्मृतियों से अर्थ संवाद रखने वाली एक और श्रुति[5] कहती है कि "कर्म, प्रजा और धन से कदापि अमृतत्व की प्राप्ति नहीं होती। इन के त्याग से ही पूर्वकाल में अनेकों ने इसे प्राप्त किया है"। यह श्रुति साक्षात् अपने मुख से अमृतत्व-प्राप्ति में कर्मप्रजाधनादिकों की साधनता का निषेध करती हुई कर्मादि के त्याग से ही उसकी प्राप्ति को बताती है। इस से स्पष्ट है कि कर्म से नित्य मोक्ष की प्राप्ति कदापि नहीं हो सकती।

इस प्रकार यद्यपि साक्षाद्रूप से कर्मों की मोक्षहेतुता का निषेध सिद्ध है तो भी विविदिषा के सम्पादनार्थ मलिन अन्तःकरण-वाले जिज्ञासुओं के मनों के मल को निकाल कर उन्हें शुद्ध करने के लिए, निष्काम भाव से शास्त्रविहित कर्मों का अनुष्ठान भी परमावश्यक मानना पड़ता है, क्योंकि यदि इस प्रकार

(१) ८।१।६ (२) १।२।१२ (३) ९।२१ (४) ११।१०।२६
(५) क० उ० २; महाना० उ० १०।५

स्वीकार न किया जाय तो अनेक श्रुतिओं स्मृतिओं और श्रद्धेय आचार्यों के वचनों की सङ्गति न लग सकेगी । तथाहि—यजुर्वेद में कहा है कि "कर्म करता हुआ ही पुरुष सौ वर्ष जीने की अभिलाषा करे"। उपनिषदों में कथन किया है कि "मुमुक्षु पुरुषों को वेदानुवचन, यज्ञ, दान और अनशनादि तपों के द्वारा आत्मविषयक जिज्ञासा का सम्पादन करना चाहिए"। श्रीमद्भगवद्गीता में कहा है कि "ज्ञानी पुरुष को चाहिये कि वह कर्मों में आसक्ति वाले अज्ञानियों की बुद्धि में कर्मविषयक भ्रम अर्थात् अश्रद्धा उत्पन्न न करे, किन्तु स्वयं परमात्मा के स्वरूप में अवस्थित हुआ हुआ और सब कर्मों को करता हुआ वह उन से भी वैसे ही करावै" । आगे चल कर भगवान् ने वहीं पर फिर कहा है कि "योग में आरूढ होने की इच्छा वाले मननशील पुरुष के लिये, योग की प्राप्ति में, निष्कामभाव से कर्म करना ही हेतु कहा है"। श्रीमद्भागवत में भी उन्होंने अनेक स्थलों पर निष्काम कर्मों के अनुष्ठान की आवश्यकता कही है देखिए—"जब तक वैराग्य न हो जाए अथवा मेरी कथा आदि के श्रवण और कथन में श्रद्धा न हो तब तक कर्मों को करता ही रहे"। भगवत्परायण पुरुष "निवृत्ति प्रयोजन वाले निष्काम कर्मों का अनुष्ठान करे"। भगवान् के पार्षद योगेश्वर आविर्होत्र कहते हैं कि "जो अजितेन्द्रिय और अज्ञानी पुरुष वेदोक्त कर्म का आचरण नहीं करते वह विहितकर्मत्याग के पाप से बार बार जन्म मरण को प्राप्त होते हैं । वेदोक्त कर्मों को निःसङ्ग भाव से तथा ईश्वरार्पणबुद्धि से करता हुआ पुरुष नैष्कर्म्यसिद्धि को प्राप्त कर लेता है" । श्रीशङ्कराचार्य जी कहते हैं कि "जिस प्रकार निर्मल दर्पण में प्रतिबिम्ब स्पष्टरूप से प्रकाशमान होता है इसी प्रकार निर्मल अन्तःकरण में ही विद्या ठीक प्रकार से प्रकाशमान होती है । इस

---

(१) ४०।२ (२) बृ० उ० ४।४।२२ (३) ३।२६ (४) ६।३ (५) ११।२०।९
(६) ११।१०।४ (७) श्रीमद्भा० ११।३।४५–४६ (८) उप० सा० प० १७।२२

लिये यम, नित्यकर्म, नैमित्तिक कर्म तथा निष्कामभाव से अनुष्ठान किये हुए यज्ञों से अन्तःकरण को अवश्य शुद्ध करना चाहिये"। अन्यत्र फिर वह कहते[1] हैं कि "चित्त की शुद्धि के लिए (निष्कामभाव से) कर्मों का अनुष्ठान आवश्यक है"। सुरेश्वराचार्य जी का कथन है कि[2] "जिस कारण नित्य नैमित्तिक कर्मों के अनुष्ठान की महिमा महान् है इस लिये आत्मज्ञान के अभिलाषी मुमुक्षुओं को अन्तःकरणशुद्ध्यर्थ सदैव नित्य नैमित्तिक कर्मों का अनुष्ठान करना चाहिए"। इस प्रकार कर्मों के विधान करने वाले अन्य भी कई वाक्य मिलते हैं। मोक्ष में कर्मों की हेतुता के निषेध करने वाले वाक्यों के साथ इन वाक्यों की सङ्गति लगाने के लिए अन्तःकरण की शुद्धिपर्यन्त निष्काम कर्मों की कर्त्त-व्यता अवश्य स्वीकार करनी पड़ती है। एक बात और भी है और वह यह कि अनेक स्थलों पर श्रुति यह प्रतिपादन करती है कि निर्मलान्तःकरण वाले पुरुषों का ही आत्मविचार में अधिकार है दूसरों का नहीं। उदाहरण के लिए एक दो स्थल यहां पर उद्धृत कर दिये जाते हैं। मुण्डकोपनिषद् में लिखा है कि[3] "अन्तःकरण के शुद्ध हो जाने पर निदिध्यासन द्वारा पुरुष उस निष्कल अर्थात् निरञ्जन प्रभु के दर्शन कर सकता है"। कठोपनिषद् में लिखा है कि[4] "जो पुरुष पापों से निवृत्त नहीं हुआ, जिसने अपनी इन्द्रियों तथा मन को वश न कर सकने के कारण चित्तैकाग्र्य सम्पादन नहीं किया वह सर्वान्तर्यामी प्रभुविषयक ज्ञान को प्राप्त नहीं कर सकता। उसे उसका साक्षात्कार नहीं होता"। आगे चल कर वहीं पर फिर लिखा है कि[5] "जिसने मन को वश में नहीं किया, अतएव जिस को विज्ञान की प्राप्ति नहीं हुई और जो सदा अपवित्र रहता है वह प्रभु के पद को न पाकर जन्ममरणरूप संसारचक्र को

---

(१) विवेकचूडामणि ११ (२) नै०सि०१। ५० (३) ३।१।८ (४) १।२।२३(५)१।३।७

प्राप्त होता रहता है"। "मन और इन्द्रियों की एकाग्रता परम तप है। यह धर्म सब धर्मों से उत्कृष्ट है। इस को परम धर्म कहते हैं।" इत्यादि स्मृतिओं में वर्णित मन के समाधान का माहात्म्य भी यही जतलाता है कि विना चित्त की एकाग्रता के किये ब्रह्मविचार नहीं हो सकता। इस के अतिरिक्त विद्वानों का अनुभव भी इस बात का साक्षी है कि जब किसी सूक्ष्म पदार्थ को समझना होता है तो उस के लिए चित्त को समाहित करना आवश्यक होता है क्योंकि चित्त समाहित किये विना उस की गति सूक्ष्म पदार्थ में होती ही नहीं। जब आत्मा सूक्ष्मातिसूक्ष्म है—यहां तक कि उसे मन वाणी का अगोचर कहा जाता है—तो उसके ज्ञान के लिये चित्त के समाधान की परमावश्यकता अर्थसिद्ध है। और क्योंकि चित्त की समाहितता विना विक्षेपरूप मल की निवृत्ति के हो नहीं सकती और विक्षेपों की निवृत्ति विना उस की शुद्धि के बन नहीं सकती और शुद्धि का शास्त्रविहित उपाय केवल (आहारशुद्धिसहकृत) विहितकर्मों का निष्कामभाव से अनुष्ठान करना ही है इसलिए यह बात सिद्ध है कि चित्त के मलविक्षेप के नाश के निमित्त, आहार शुद्धि के साथ साथ, निष्काम भाव से विहित कर्मों का अनुष्ठान करना परमावश्यक है। चित्त की निर्मलता के हो जाने के अनन्तर फिर उन की आवश्यकता नहीं रहती। फिर तो सद्गुरूपदिष्ट रीति से विचार कर लेने पर वेदान्तवाक्यों से ब्रह्मज्ञान और उस से साक्षात् मोक्ष की प्राप्ति होती है। यह शास्त्र का परम सिद्धान्त है।

इस प्रकार जब कर्मों से अविद्या की निवृत्ति नहीं बनती तब उपासना से वह कैसे बन सकती है क्योंकि उपासना भी

(१) म० भा० १२।२५०।४; ३।२६०।२५

तो एक मानसिक कर्मविशेष ही है। इस के अतिरिक्त मोक्ष 'अकृत' है अर्थात् मोक्ष क्रियासाध्य नहीं, नित्यसिद्ध है। जब ऐसी बात है तो इस में कर्मों या उपासना की गति कैसे हो सकती है ? कदापि नहीं। एक और भी बात है। कर्म और उपासना इन में से किसी का भी विरोध अविद्या के साथ है नहीं। अविरोधी पदार्थ कभी दूसरे का घातक या बाधक नहीं होता। अन्धकार अन्धकार का नाश कभी नहीं करता क्योंकि इनका आपस में विरोध नहीं होता। अग्नि भी अग्नि को कभी नहीं जलाता। कारण यह कि अग्नि अग्नि का विरोधी नहीं। तो फिर अविद्या के अविरोधी कर्म या उपासना किस प्रकार उस का नाश कर सकते हैं ? श्रुति तो बार २ यही कहती है कि विना विद्या के अविद्या तथा तत्कार्य की निवृत्ति करके उपलक्षित मोक्ष की प्राप्ति होती ही नहीं। "ज्ञान के विना मुक्ति के लिए कोई भी दूसरा मार्ग नहीं है[2]। " जब मनुष्य चर्म की भान्ति आकाश को लपेट लेंगे तब कहीं जाकर परम प्रभु के ज्ञान विना दुःख का अन्त हो तो हो पहिले नहीं[3]"। इत्यादि कई श्रुतिओं के आधार पर यह बात सिद्ध होती है कि विद्या ही मुक्ति का एक मात्र साधन है। यही अविद्या को निवृत्त कर सकती है। इन्हीं का परस्पर विरोध है। प्रामाणिक विद्या प्रबल होने के कारण अप्रामाणिक होने से निर्बल अविद्या को कैसे रहने दे सकती है ? प्रकाश के विना अन्धकार कदापि दूर नहीं होता और प्रकाश के हो जाने पर वह ठहर भी नहीं सकता ॥

यहां पर अब यह प्रश्न हो सकता है कि सिद्धान्त में "अहं

---

(१) मुं० उ० १।२।१२ (२) श्वे०उ० ३।८; ६।१५
(३) श्वे० उ० ६।२०॥

ब्रह्मास्मि" इस अखण्डाकारवृत्ति को अविद्या की निवर्तिका माना है। यह अखण्डाकारवृत्ति वृत्ति होने से अविद्यान्तर्गत है, अविद्या से बाह्य नहीं। अविद्यारूप अखण्डाकारवृत्ति अविद्या को कैसे नाश कर सकती है ? इस प्रश्न का ऊत्तर यह है कि जिस प्रकार निर्मली बूटी का चूर्ण स्वयं रज होता हुआ भी पानी के रज को दूर करने के सामर्थ्य वाला होता है, जिस प्रकार संवादि-भ्रम भ्रम होता हुआ भी सम्यक्फल को देने में समर्थ होता है, और जिस प्रकार प्रतिबिम्ब स्वयं मिथ्या होता हुआ भी बिम्ब के आकार आदि का अनुमान कराने में प्रामाणिक समझा जाता है इसी प्रकार अखण्डाकारवृत्ति स्वयं अविद्यारूप होने से मिथ्या होती हुई भी अविद्या की विरोधिनी होने से उस की निवृत्ति करने में समर्थ होती हुई मोक्ष का साधन बन ही सकती है। इस में किसी प्रकार की आपत्ति नहीं आसकती। यहां पर यदि यह कहा जाए कि इन तीनों दृष्टान्तों के रहते हुए उपासना से ही अविद्या के नाश की सम्भवता को क्यों नहीं स्वीकार कर लेते, तो इसका उत्तर पहिले ही दिया जा चुका हुआ है कि उपासना का अविद्या के साथ विरोध नहीं है। अखण्डाकार-वृत्ति अविद्यान्तर्गत होती हुई भी विद्या के अत्यन्त समीप होने से विद्यारूप ही कथन की जाती है। देखिए श्रीशङ्कराचार्य जी उपदेश साहस्री में एक स्थान पर लिखते हैं कि 'मैं कूटस्थ निर्विकार हूं' इस को विषय करने वाली बुद्धि वेदान्तशास्त्र में विद्या नाम से पुकारी जाती है"। इस प्रकार विद्यारूप होने से यह वृत्ति अविद्या की विरोधिनी है। अविद्या की अविरोधिनी उपासना उन विषम दृष्टान्तों के आधार पर अविद्या की निवृत्ति कदापि नहीं कर सकती॥

---

(१) पद्यभाग ११।१२

ननु यदि उपासना अविद्या के नाश करने म समर्थ नहीं तो श्रीस्वामीविद्यारण्य जी ने पञ्चदशी में यह कैसे लिख दिया है कि[1] "जिस प्रकार से संवादि भ्रम भ्रम होता हुआ भी सम्यक्‌फल को दे देता है इसी प्रकार ब्रह्मतत्त्व की उपासना भी मुक्तिरूप फल को दे देती है।" उत्तर—ठीक है श्रीस्वामी विद्यारण्यजी ने ऐसा लिखा है। परन्तु इससे उनका कदापि यह तात्पर्य नहीं है कि उपासना साक्षात् मुक्ति का साधन है। वह भी विद्याद्वारा ही उपासना को मुक्तिप्रद मानते हैं। देखिए वह अपनी ही लेखिनी से उसी प्रकरण में क्या लिखते हैं[2]—"निर्गुण ब्रह्म की उपासना शनैः शनैः ब्रह्मज्ञान रूप हो जाती है" और "जिस प्रकार संवादिभ्रम फलकाल में प्रमारूप हो जाता है उसी प्रकार अतिपरिपक्व हुई २ उपासना भी फलकाल में विद्यारूप हो जाती है"। यदि वह उपासना को साक्षात् ही मुक्ति का साधन स्वीकार करते तो उन्हें यह कहने की आवश्यकता न पड़ती। अतः कर्म और उपासना दोनों ही किसी प्रकार से भी साक्षाद्रूप से अविद्या को निवृत्त करने में समर्थ नहीं माने जा सकते।

इसी प्रकार "मैं एकमात्र भक्ति से ही प्राप्त किया जा सकता हूँ[3]" "साङ्ख्य योग धर्म स्वाध्याय तप और त्याग इन में से कोई भी इस प्रकार मुझे वश में नहीं कर सकता जिस प्रकार कि मेरी अनन्य भक्ति[4]।" इत्यादि भक्ति मार्ग को सब से श्रेष्ठ निश्चय कराने वाले वाक्य भी लगा लेने, क्योंकि इनका तात्पर्य भी उपासना वाले वाक्यों की न्याइ ज्ञान द्वारा ही मुक्ति प्राप्त कराने में है, साक्षात् रूप से नहीं। श्रीमद्भागवत में ही—जहां पर ऊपर उद्धृत किये हुए वाक्य आये हैं—राजा निमि को उपदेश देते हुए भगवान् विष्णु के पार्षद

(१) ९।१३ (२) पञ्चदशी ९।१२२–१२३ (३) श्रीमद्भा० ११। १४।२० (४) श्रीमद्भा० ११।१४।१९

महायोगेश्वर कवि ने भक्ति के प्रसङ्ग में कहा है कि "हे राजन्! निर्दिष्ट रीति से, भगवान् के चरणों का निरन्तर भजन करते २ भक्त को भगवान् से प्रेम, भगवान् को छोड़ कर अन्य सब पदार्थों में वैराग्य और फिर भगवान् के स्वरूप का यथार्थ बोध हो जाता है। तत्पश्चात् वह साक्षात् परम शान्तिरूप मोक्ष को प्राप्त कर लेता है॥"

उल्लिखित विद्या से अविद्या की निवृत्ति होते ही मोक्ष अभिव्यक्त हो जाता है । इस की अभिव्यक्ति के अनन्तर कुछ करणीय शेष नहीं रह जाता। मोक्ष, अमृतत्व, वास्तविक सुख, निःश्रेयस तथा ऐकान्तिक और आत्यन्तिक दुःख की निवृत्ति यह सब शब्द पर्याय होने से एक ही अर्थ के बोधक हैं । यह मोक्ष रूप अर्थ नित्यसिद्ध होने पर भी नितान्त दुर्लभ है। कारण यह है कि आवरण तथा विक्षेपरूप दो महान् शक्तियों वाली अविद्या की महिमा से इस जीव ने अपना स्वरूप एक दम खो कर कुछ का कुछ समझ लिया हुआ है। इसी हेतु से चाहे वह निरन्तर इस की चाह भी करता रहे, समाधिस्थ होकर इस का ध्यान भी धरता रहे, और इस के अतिरिक्त यावच्छक्ति इस की प्राप्ति के लिये यत्न भी करता रहे तो भी इस की प्राप्ति तब तक असम्भव सी बनी रहती है जब तक आत्मज्ञान की प्रचण्ड अग्नि से अविद्यारूप महान् तूलराशि जल नहीं जाती॥ परन्तु यह बात भी भूलने योग्य नहीं कि जब एक बार इसको प्राप्त कर लिया जाता है तो बस फिर सदा के लिए बन्धन की निवृत्ति हो जाती है । बन्ध फिर रहता ही नहीं । इस की पुनरावृत्ति नहीं होती। वेद भगवान् कई स्थलों पर कहता है कि "वह (ज्ञानी) फिर जन्म मरण (के चक्र) में नहीं पड़ता । वह सदा के लिए

(१) ११।३।४३

मुक्त हो आता है"[१] "उसका आगमन फिर इधर होता ही नहीं"[२] इत्यादि। ब्रह्मसूत्र में व्यास भगवान् भी ऐसी श्रुतियों के भाव का वर्णन करते हुए कहते हैं कि[३] "वेद भगवान इस बात का साक्षी है कि वहां पहुंच कर फिर किसी को आवृत्ति इस लोक में होती ही नहीं।" भगवान् कृष्ण भी अपने श्रीमुख से कथन कहते हैं कि[४] "हे कुन्तीपुत्र! मुझे प्राप्त होकर फिर किसी का जन्म नहीं होता।"

एक और भी बात याद रखने योग्य है। मोक्ष को पाकर भी यदि क्षयित्व का खड्ग मुक्त पुरुष के सिर पर तना रहना हो तो मोक्ष और स्वर्ग में अन्तर ही क्या रह जाता है। फिर तो जैसे स्वर्ग विनाशी होने से हेयता कोटि के अन्तःपाती है वैसे ही मोक्ष भी क्षयी होने से परमोपादेय नहीं हो सकेगा? अतः अगति से भी मोक्ष शाश्वत ही सिद्ध ठहरता है।

कार्यसहित अविद्या को दूर करके नित्यनिरवधिकानन्द-स्वरूप मोक्ष की प्राप्ति की साधनभूता जो विद्या, वह बिना वैराग्य के हो नहीं सकती और वैराग्य सदा उसी पदार्थ में होता है जिस में दोषबुद्धि हो। शास्त्र की दृष्टि से अविद्यात्कार्य में दोषदृष्टि करनी उचित है परन्तु बिना विवेक के वह असम्भव है। यह विवेक ही बतलाता है कि कौन पदार्थ सत् है और कौन असत् है। सत् और असत् के विवेचन अर्थात् पृथक्करण को ही विवेक कहते हैं। श्रीस्वामी निश्चलदास विवेक का स्वरूप बताते हुए कहते हैं कि[५]—

"अविनासी आतम अचल, जग ताते प्रतिकूल।
ऐसो ज्ञान विवेक है॥"

---

(१) कालाग्निरुद्रोपनिषद् (२) छां० उ० ८।१५।१ (३) ब्र० सू० ४।४।२२ (४) भ० गी० ८।१६ (५) वि० चा० सा० १।१३

परन्तु यह विवेक भी विना विचार के कदापि नहीं हो सकता। इसी लिए तो विचार का महत्त्व शास्त्रों में जहां तहां भली प्रकार निरूपण किया है। देखिए "त्रिपुरारहस्य" में ब्राह्मणकुल-तिलक तपस्वी परशुराम को उपदेश देते हुए भगवान् दत्तात्रेय कितनी सरलता से विचार की महिमा और अविचार की निन्दा निरूपण करते हैं :—

"विचार सब का मूल है। मोक्षरूप महल में जाने के लिए इसे पहली सीढ़ी समझना चाहिए। सुविचार के विना कब किस का कल्याण हुआ? अविचार तो परम मृत्यु है। अविचार के मारे जीव जन्ममरणचक्र में घूमते ही रहते हैं। परन्तु विचारशील पुरुष को अभीष्ट की प्राप्ति होती है। उसका सर्वत्र जय होता है। विचार सुखरूप वृक्ष का शक्तिशाली बीज है। विचार से पुरुष की उन्नति होती है। ब्रह्मा विचार के कारण सब से उच्च गिने जाते हैं। विचार के कारण ही विष्णु का पूजन किया जाता है। शिव भी विचार के कारण ही सर्वज्ञ और महेश्वर कहलाए। रामचन्द्र कितने बुद्धिमान् थे? परन्तु वह भी अविचार के कारण सुवर्णमृग के अभिलाषुक होकर परम आपत्ति को प्राप्त हुए। परन्तु पीछे उन्होंने विचारद्वारा समुद्र में पुल बान्ध कर राक्षसों से भरी लङ्का को भी जीत लिया। हे भार्गव! तुम्हें यह मालूम ही है कि एक बार ब्रह्मा भी अविचार से मूढ होकर अभिमान के वशीभूत हो गये थे। तब उन्हें अपना सिर कटवाना पड़ा था। महादेव ने भी एक बार विना विचारे एक असुर को वर दे दिया था। उसका फल क्या हुआ? अपने ही भस्मीभवन से डर कर उन्हें भागना पड़ा। इसी प्रकार अन्य भी सब देवता राक्षस पुरुष पशु आदि जब कभी विपत्ति को प्राप्त करते हैं उसका मूल कारण सर्वदा अविचार ही होता है। हे परशुराम! वह धैर्यशाली महापुरुष धन्य हैं जिन के पास विचार सदा रहता है। हमारा उन को निरन्तर प्रणाम हो।"

(१) ३।२ ५—६३

आगे फिर कहते हैं कि "जैसे सन्निपात रोग से ग्रस्त पुरुष को ओषधि के सेवन करने पर भी तब तक भय बना रहता है जब तक कि शारीरिक धातुओं की पूर्ण रूप से शुद्धि नहीं होजाती वैसे ही जब तक विचार-रूप पूर्ण आरोग्य का उदय नहीं हो जाता तब तक पुरुष अविचाररूप रोग से रात दिन ग्रसा रहता है। इसी लिए बड़ा भारी भय रहता है। जब परम-विचार की प्राप्ति हो जाती है तब मनुष्य जीवन सफल समझा जाता है। जिन जन्मों में अध्यात्म विचार प्राप्त नहीं होता वह सब के सब जन्मरूप वृक्ष फलहीन होने के कारण निष्फल जानने चाहिये। जिस जन्मरूप वृक्ष पर विचाररूप फल लगे वही सफल होता है"।

इस के आगे और भी कहते हैं कि "जो पुरुष निर्विचार हैं वह सब के सब कूपमण्डूक के समान हैं। जैसे कूएं का मेण्डक कूएं में उत्पन्न होता है और अपना शुभ और अशुभ जाने विना वहीं मृत्यु को प्राप्त हो जाता है। वैसे ही अन्य प्राणी भी ब्रह्माण्डरूप कूएं में वृथा ही वार २ उत्पन्न होकर मृत्यु को प्राप्त करते हैं। अपने हित और अहित को नहीं समझते। दुःखों में सुखबुद्धि कर बैठते हैं और सुख में दुःखबुद्धि कर लेते हैं। बस फिर क्या? अपने अविचार के प्रभाव से जन्म मरण रूप प्रचण्ड अग्नि में वार २ दाह को प्राप्त होते रहते हैं। दुःख से दुःखी भी होते हैं परन्तु उसे छोड़ते नहीं। जैसे गर्दभी के पदाघात से पीड़ित हुआ भी गर्दभ उसके पीछे ही जाता है वैसे ही प्राणी संसार कूप में पड़ा ही रहता है उससे निकलने कर प्रयत्न नहीं करता। परन्तु हे राम! तूने विचार (स्वरूप) जहाज़ की शरण लेली है। अब तू अपने को दुःखसागर से पार पहुंचा ही समझ॥"

"विचार को छोड़ कर अन्य (कर्मादिक) साधनों से ज्ञान उत्पन्न नहीं होता।" (अपरोक्षानुभूति ११) "विचार से ही विद्यमान वस्तु का

---

(१) त्रि०र०३।२।७५-७८ (२) त्रि०र०३।२।७९--८४

निर्णय हो सकता है[1]" "विचार से ही पदार्थों का निश्चय देखने में आता है[2]" " इस लिए ( अन्य सब साधनों से छुट्टी पाकर मुक्ति के लिए, केवल ) विचार ही करना चाहिएँ[3]" इत्यादि महापुरुषों की उक्तियों का तात्पर्य भी विचार की महिमा बताने में ही है ।

महामहिमशाली इसी विचार को संसार में प्रवृत्त कराने के लिए तथा मोटी तथा खोटी बुद्धि वाले पुरुषों के अन्तःकरण को निर्मल करके विचारोपयोगी बनाने के लिए तत्वज्ञ महर्षिओं ने अनेक दर्शन शास्त्रों की रचना की । उन सब दर्शनों में मुख्य दर्शन ६ ही हैं तथाहि-(१) महर्षि गौतमजी का न्याय-दर्शन (२) महर्षि कणाद जी का वैशेषिक-दर्शन ( ३ ) सिद्धेश्वर कपिल जी का साङ्ख्य-दर्शन ( ४ ) योगीश्वर पतञ्जलि जी का योग-दर्शन (५) महामुनि जैमिनिजी का पूर्वमीमांसा-दर्शन और ( ६ ) भगवदवतारभूत महर्षि वेदव्यास जी का उत्तरमीमांसा-दर्शन। इन में से यद्यपि पहिले दो दर्शनों में आरम्भवाद का निरूपण है तो भी विशेष करके इन में प्रमाणाप्रमाणविचार किया गया है । तृतीय में परिणामवाद और प्रकृतिपुरुषविवेक ही मुख्य विषय हैं । योगदर्शन में उपासना का ही निरूपण मुख्यरूप से किया गया है । पञ्चम दर्शन का मुख्य सिद्धान्त यह है कि यावद्वेद का तात्पर्य कर्मों के विधान में है । परन्तु छठा दर्शन श्रुतिपरिपुष्ट अकाट्य युक्तियों से इन सभी मतों का खण्डन करके इस बात का पूर्णरूप से निश्चय करा देता है कि सम्पूर्ण वेद का मुख्य तात्पर्य ब्रह्मस्वरूप के निरूपण में ही है। यह बात विद्वानों से छिपी नहीं कि इस दर्शन के विषय में निम्नलिखित कथन कोई अतिशयोक्तिरूप नहीं है " जब तक वेदरूप महारण्य में

(१) विवेक० ११ । (२) विवेक० १२ । (३) विवेक०१५ ।

वेदान्तरूप सिंह नहीं गर्जता बस तभी तक जम्बुक आदि छोटे जन्तुओं की न्याईं अन्य शास्त्र गर्जन करते रहते हैं । सिंह की गर्जना के होते ही जैसे सब अन्य जीव चुप हो जाते हैं वैसे ही वेदान्तदर्शन के सामने होने पर अन्य सब दर्शन चुप हो जाते हैं ॥ ”

यहां पर अब यह प्रश्न उठ सकता है कि इन सम्पूर्ण दर्शनों के सिद्धान्त एक दूसरे से केवल विलक्षण ही नहीं अपितु परस्पर विरोधी भी हैं। इस लिए इन सब में से किसी एक को छोड़ कर बाकी सभी दर्शन त्याज्य ही होने चाहिए । उन्हें आस्तिक कोटि में क्यों गिना गया है ? इसका उत्तर यह है कि यह आस्तिक दर्शन इस लिए कहाते हैं कि इन सभी दर्शनों में वेदरूप शब्दप्रमाण को परमश्रद्धेय माना है । अपनी २ दृष्टि से वेद का उल्लङ्घन कोई भी नहीं करता । परस्परविरोध केवल स्वस्वदृष्टिकृत है वास्तव नहीं । और इस प्रतीयमान विरोध की उपयोगिता जिज्ञासुजनों की बुद्धि को सूक्ष्मातिसूक्ष्म करने में सर्वथा सफल हो जाती है। इस के अतिरिक्त सोपानक्रमन्याय से अथवा स्थूलारुन्धतीन्याय से इन सब का समन्वय एक ही पदार्थ के निरूपण में है । किसी भी विषय को निरूपण करते हुए यह आवश्यक नहीं होता कि जिस बात को काट देना हो उसका निरूपण ही न किया जाय । शास्त्रों में सर्वत्र पूर्वपक्ष और उत्तरपक्ष की रीति सदा से चली आई है । एक पक्ष को दृढ़ करने के लिए स्थूणानिखननन्याय से उसके विरोधी पक्ष को खड़ा करना कोई नई बात नहीं है। महर्षि वशिष्ठ अजातसत्तावादी थे । 'तीनों कालों में सृष्टि का अभाव है' यह उनका अकाट्य मत था। परन्तु तो भी उन्होंने सृष्टि का अपवाद करने के ही अभिप्राय से सृष्टि की उत्पत्ति का कितना लम्बा चौड़ा

वर्णन कर डाला था। उन्होंने स्वयं इस विरोध का परिहार करते हुए कहा है कि "यह क्रम केवल मन्दबुद्धि पुरुषों को भली भान्ति वस्तुतत्त्व समझाने के लिए रक्खा गया है।" श्रीकृष्ण भगवान् भी उद्धव के प्रश्न करने पर भिन्न २ ऋषियों द्वारा की हुई भिन्न २ तत्त्वसङ्ख्याओं की योजना बताते हुए कहते हैं कि "इस प्रकार ऋषियों ने नाना प्रकार से तत्त्वों की गणना की है। युक्तियुक्त होने के कारण वे सभी ग्राह्य हैं। विद्वानों की किस में शोभा नहीं ? उन्हें सभी कुछ शोभा देता है[1]।"

इस प्रकार यद्यपि यह सभी दर्शन मान्य हैं तो भी इन सब में ब्रह्मदर्शन मुख्य है। इस का कारण यह है कि इस दर्शन का मुख्यविषय साक्षात् आत्मस्वरूपनिरूपण ही है। सच्छास्त्र की स्तुति और असच्छास्त्र की निन्दा करते हुए महर्षि वशिष्ठ जी कहते हैं कि "असच्छास्त्र के विचार से निवृत्त हो कर सच्छास्त्र के विचार से शान्ति ऐसे प्राप्त होती है जैसे शौर्य वीर्य और अस्त्र शस्त्र आदि सर्व प्रकार की रणसामग्री से युक्त सेना वाले राजा को रण में जयलक्ष्मी प्राप्त होती है। मनरूपी नदी दोनों ओर बह सकती है, विवेक की ओर भी अविवेक की ओर भी। जिस ओर यत्न करके इस के बहाव को झुका दिया जाता है बस उसी ओर यह बह निकलती है। इस (अध्यात्म) शास्त्र को छोड़ कर अन्य किसी शास्त्र से न किसी का कल्याण हुआ है और न होना है। इस लिए आत्मबोध के लिए इस (अध्यात्म) शास्त्र का ही विचार करना उचित है[2]"। इन उपर्युद्धृत पङ्क्तियों में सच्छास्त्र से अध्यात्मशास्त्र ही अभिप्रेत है यह बात उन्हों ने स्वयं आगे चल कर स्पष्ट कर दी है। देखिए वह क्या कहते

---

(१) श्रीमद्भा० ११।२२।२५ (२) यो० वा० ६।२।१०३।२३-२५।

हैं—"हे साधो! संसारबन्धनरूपविषूचिका का रोग महाभयानक है। आत्मज्ञान से अतिरिक्त इस का कोई उपचार नहीं है[1]।"

वेदभगवान् भी अध्यात्मविज्ञान की परमावश्यकता के अभिप्राय से ही बार २ कहता है कि "स्वाध्याय (वेद) का अध्ययन करना चाहिये[2]"। "स्वाध्याय के विषय में कदापि प्रमाद नहीं करना चाहिए[3]"। "स्वाध्याय और प्रवचन अर्थात् वेद का पढ़ना और अधिकारी पुरुषों को पढ़ाना यह एक परमावश्यक धर्म है जिसमें प्रमाद करने से पुरुष पाप का भागी बनता है[3]"। यहां पर यह कहना—कि स्वाध्याय शब्द का अर्थ केवल ऋग्वेद यजुर्वेद और सामवेदरूप वेदत्रयी ही है और वेदत्रयी का मुख्य उपयोग कर्म के अनुष्ठान में है न कि अध्यात्म चिन्तन में। इस लिए स्वाध्याय शब्द अध्यात्मचिन्तनपरक नहीं हो सकता—बिलकुल निस्सार है। कारण यह कि स्वाध्याय शब्द के अर्थ के सङ्कोच में कोई प्रमाण नहीं है। "स्वाध्याय" और "वेद" यह दोनों शब्द पर्याय हैं और "वेद" जैसे संहिता भाग का वाचक है वैसे ही ब्राह्मणभाग का भी वाचक है। आपस्तम्ब महर्षि कह गये हैं कि "वेद शब्द मन्त्र और ब्राह्मण दोनों का वाचक है।" इस लिए उस का पर्याय स्वाध्यायशब्द भी दोनों का ही वाचक है। इस प्रकार परमपुरुषार्थ मोक्ष का निरूपण करने वाली ब्राह्मणान्तःपाती उपनिषदें भी वेद के अन्तःपाती ही हैं। इस के अतिरिक्त एक और भी बात है जो ध्यान में रखने योग्य है। आस्तिक पुरुषों की दृष्टि में वेद से बढ़ कर और कोई भी शास्त्र परमश्रेय का निरूपक नहीं हो सकता। सम्पूर्ण वेद का मुख्य विषय परमश्रेय का निरूपण ही है। इस लिए वेद का

(१) यो० वा० ६। २। १०३। २८। (२) तै०आ० २।१५।७। (३) तै० उ० १। ९। १।

अस्य च—वेदान्तप्रकरणत्वात्तदीयैरेवानुबन्धैस्तद्वत्तासिद्धेर्न ते पृथगालोचनीयाः। तस्मात्—

सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते।
शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः॥

इत्यभियुक्तोक्तेः "ईशानमात्मानं स्मरामी"ति पदैर्यथायथं जीवब्रह्मैक्यं शुद्धचैतन्यं सकलवेदान्तप्रमेयं "विषयः"। तत्रैव सकलवेदान्तानां तात्पर्यसत्त्वात्। "तत्तु समन्वयात्" (ब्र० १।१।४) इति व्यासोक्तेः। "सम्बन्धश्च"-तदैक्यप्रमेयस्य तत्प्रतिपादकोपनिषत्प्रमाणस्य च बोध्यबोधकभावलक्षणः। "प्रयोजनं" तदैक्यप्रमेयगताऽज्ञाननिवृत्तिः स्वस्वरूपानन्दावाप्तिश्च "तरति शोकमात्मवित्" (छां० ७।१।३) "ब्रह्म वेद ब्रह्मैव भवति" (मुं० ३।२।९) इत्यादिश्रुतेः। दर्शितप्रयोजनकामः "अधिकारी" ति च सम्प्रदायविद्भिर्बोद्धव्यमिति शम्॥ १॥

## "मिताक्षरा"

सङ्गति—वेदान्त प्रकरण का आरम्भ करते हुए ग्रन्थकार शिष्टाचारपरिपालनपूर्वक ग्रन्थ की निर्विघ्न समाप्ति के लिये प्रथम "सत्यज्ञानसुखाकारम्" इत्यादि श्लोक से निर्गुणवस्तुनिर्देशरूप मङ्गल करते हैं—

अर्थ—"सत्यज्ञानसुखाकारम्"=सच्चिदानन्दस्वरूप "निराकारम्"=आकाररहित अर्थात् स्थूलसूक्ष्मकार्यकारणात्मक सकल उपाधि से वर्जित, अतएव "अद्वयम्"=सजातीय विजातीय स्वगतभेदशून्य अखण्ड=निर्विशेष, "अविक्रियम्"=

षड्भावविकारवर्जित, किंवा षड् ऊर्मियों से रहित, "गिरावगतम्"=वेदरूप तत्त्वमस्यादि महावाक्यों द्वारा ज्ञात, "ईशानम्"=(माया के नियन्ता) अर्थात् तत्पद के लक्ष्यार्थ शुद्ध ब्रह्म का "आत्मानम्"=त्वम्पद के लक्ष्यार्थ जीवसाक्षी के साथ "स्मरामि"=अभेद करके चिन्तन करता हूं अर्थात

१ उत्पत्ति, अस्ति, विपरिणाम, वृद्धि, अपक्षय और विनाश के यह छः "भावविकार" कहाते हैं, जो अनात्मपदार्थ के परिणामविशेष हैं। आत्मा इन परिणामों से अतीत है। अभिप्राय यह है कि—धर्मपरिणाम, लक्षण-परिणाम और अवस्थापरिणाम भेद से परिणाम तीन प्रकार का होता है। धर्मी के एक धर्म को छोड़कर दूसरे धर्म में वदल जाने का नाम "धर्मपरि-णाम" है। जैसे चित्त का सर्वार्थता अर्थात् अनैकाग्रता को छोड़कर एकाग्र हो जाना, अथवा एकाग्रता को त्यागकर निरुद्ध होजाना, किंवा मृत्तिका का पिण्डाकार को छोड़कर कपालाकार होजाना। धर्म के अनागतकाल को छोड़ कर वर्त्तमानकाल में अथवा वर्त्तमानकाल को छोड़कर अतीतकाल में आजाने का नाम "लक्षणपरिणाम" है। एवं नयी अवस्था को छोड़कर शनैः शनैः अत्यन्त पुराणी अवस्था में आजाने का नाम "अवस्थापरिणाम" है, यह योग-शास्त्र की परिभाषा है। परन्तु यह सब परिणाम प्रकृतिरूप अनात्मपदार्थ के ही हैं आत्मा इन परिणामों से अतीत होने के कारण "अविक्रिय" है।

२—प्राणस्य क्षुत्पिपासे द्वे मनसः शोकमोहकौ।
जरामृत्यू शरीरस्य षडूर्मिरहितः शिवः॥

इस उपरितन श्लोक में परिगणित क्षुधा, पिपासा, शोक, मोह, जरा और मृत्यु यह ६ विकार "ऊर्मि" कहलाते हैं। आत्मा इनसे रहित होने के कारण ही "निर्विकार" और "अविक्रिय" इत्यादि पदों से व्यवहृत होता है।

त्वम्पदार्थ से अभिन्न तत्पदार्थ और तत्पदार्थ से अभिन्न त्वम्पदार्थ का स्मरण करता हूं।

यहां इतना विशेष ध्यान रहे कि यह ग्रन्थ वेदान्त का प्रकरण है इस लिये वेदान्तशास्त्र के जो अनुबन्ध हैं वही अनुबन्ध इस ग्रन्थ के भी जान लेने चाहिये क्योंकि अनुबन्ध ज्ञान के बिना प्रेक्षावान=विवेकी पुरुषों की प्रवृत्ति नहीं हो सकती। सो "ईशानमात्मानं स्मरामि" इस वाक्य से "जीव ब्रह्म की एकता" ग्रन्थ का विषय सूचित किया है, और उक्त "जीवब्रह्मात्मैक्यरूपविषयगत=प्रमेयगत अज्ञान की निवृत्ति तथा स्वरूपानन्द की प्राप्तिरूप" जो प्रयोजन, वह "सत्यज्ञानसुखाकरम्" इस पद से व्यक्त किया है। एवं ( विषय, प्रयोजन द्वारा आक्षिप्त ) उक्त प्रमेय का ग्रन्थ के साथ "प्रतिपाद्यप्रतिपादकभाव" वा "बोध्यबोधकभावादि" सम्बन्ध भी अर्थसिद्ध जान लेना। अर्थात् यह ग्रन्थ जीवब्रह्मात्मैक्यरूप प्रमेय का "प्रतिपादक" है और उक्त प्रमेय ग्रन्थद्वारा "प्रतिपाद्य" है, और दुःखात्यन्तनिवृत्तिपूर्वक परमानन्दप्राप्ति की कामनावाला जो जिज्ञासु वह इस शास्त्र का "अधिकारी" है।

किञ्च—उक्त श्लोक द्वारा निर्गुणवस्तु निर्देशात्मक मङ्गल करते हुए "गिरावगतम्" इस पद से यह भी

अभिप्राय स्फुट किया गया है कि वेदान्तवाक्य ही ब्रह्म-साक्षात्कार के प्रति करण=प्रमाण हैं और संस्कृत=शुद्ध हुआ मन सहकारी कारण है यही सम्प्रदायसम्मत सिद्धान्त है ।

उक्त पद से तार्किकसम्मत अनुमानप्रमाणसिद्ध ईश्वर की निमित्तकारणता में अरुचि भी प्रकट की गई है । अर्थात तर्कसम्मत ईश्वर जगत का निमित्तकारण नहीं किन्तु श्रुति-प्रमाणसिद्ध ब्रह्म ही जगत का "अभिन्ननिमित्तोपादान-कारण" है । "अद्वय" पद के कथन करने से महावाक्यार्थ का बोध भी सूचित करते हुए सकल वेदान्तशास्त्र का निर्विशेष अद्वैतवाद में ही तात्पर्य है इत्यादि समन्वयाधि-करणसिद्ध अर्थ भी सूचित कर दिया गया है, इसादि और भी यथासम्भव शास्त्रीयरहस्य जान लेना ।

(शङ्का) ननु—अद्वयरूप से कथन किए हुए ब्रह्म का स्मरण कैसे होता है ? क्योंकि पूर्व अनुभूत पदार्थ का ही स्मरण होता है । (उत्तर) इस शङ्का का "गिरा-वगतम्" इस पद द्वारा ही वारण कर दिया गया है कि— वेदान्त के महावाक्यों से जो ज्ञात है उसी का मैं स्मरण करता हूं ॥ १ ॥

---

एवं परतत्त्वानुसन्धानव्याजेन निर्गुणवस्तुनिर्देशात्मकं मङ्गलमनुष्ठाय वेदान्तशास्त्रीयाऽनुबन्धचतुष्टयनिर्देशः कृतः, तत्रोक्तलक्षणे परमार्थवस्तुनि ब्रह्मतत्त्वे प्रवर्त्तमानानां वेदान्तानां प्रामाण्यप्रदर्शनव्याजेन ब्रह्मण एव विवर्त्तभूतां वाग्देवीं स्तुत्या संस्मरन् सगुणवस्तुनिर्देशात्मकं मङ्गलमप्याचरति—"सदा स्वार्थेन सम्बद्धाम्" इतिः—

सदा स्वार्थेन सम्बद्धां देवीं सर्वार्थदीपिकाम् ।
सङ्केतसचिवां वाचमालम्बेऽभीष्टसिद्धये ॥ २ ॥

"अहं वाचमालम्बे" इति सम्बन्धः। "आलम्बे" इति क्रियापदेन "अह" मिति कर्त्तुरस्मदः स्थानिन उपलब्धिः। अहम्=ग्रन्थकारः वाचम्=वागधिष्ठात्रीं सरस्वतीम्, देवीम्=दिव्यस्वरूपाम्—उक्तञ्च सरस्वतीध्याने—

या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता
या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना।
या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैः सदा वन्दिता
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ॥

इत्येवमुपासकध्येयतया लोकोत्तरस्वरूपामित्यर्थः । आलम्बे= आश्रये। अप्रतिहतप्रसरतया तस्या एव भौतिकं स्वरूपं साक्षात्कर्त्तुं तदीयं दिव्यमभौतिकं रूपं ध्यायामीति फलितोऽर्थः। कथम्भूतां वाचम्—सदा=सर्वदा स्वार्थेन=स्वोऽसाधारणो योऽर्थः उपासकजनजाड्यापहरणरूपं प्रयोजनं तेन सम्बद्धाम्=विशिष्टां भक्तजनवत्सलां भक्तकामप्रपूरणार्थं गृहीतावतारामिति यावत्।

---

१—वैखरीत्वेन प्रसिद्धमाकाशगुणकं शब्दमयं सरस्वत्या भौतिकं रूपम्, तदधिष्ठातृतया शास्त्रप्रसिद्धया यद्ध्येयं तदभौतिकं दिव्यमिति यावदित्यत्र तात्पर्यम्।

उक्तञ्च भगवता—

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥ इति ।

पुनः कीदृशीम्—सर्वार्थदीपिकाम्=सर्वे च तेऽर्थाः सर्वार्थाः धर्मार्थकाममोक्षाख्याः तेषां दीपिकां प्रकाशयित्रीं, यथाधिकारं चतुर्विधपुरुषार्थप्रदात्रीमित्यर्थः । पुनः कीदृशीम्—सङ्केतसचिवाम्=सङ्केतः सत्सम्प्रदायप्रवर्त्तकगुरोरुपदेशरूपः समयः सः सचिवः सहायो यस्यास्तां गुरूपदेशलभ्याम्—अर्थात्—

मेधा वाणी भारती त्वं विद्या माता सरस्वती ।
ब्राह्मी भाषा वर्णमयी पराऽऽद्या कृतिरव्यया ॥
विकल्पा निर्विकल्पाऽजा कला नादमयी क्रिया ।
कालशक्तिः सर्वरूपा शिवा श्रुतिरनुत्तरा ॥

---

१—मन्त्रोऽयं "हारीतायनसंहितायां" श्रीमातृकास्तुतौ—

अस्यायमर्थः—मेधते सङ्गच्छतेऽस्यां मेयवस्तु इति "मेधा" धारणावती बुद्धिः सा । वण्यते शब्दयते इति "वाणी" वाक् सा । बिभर्त्ति धारयतीति "भारती" वृत्तिविशेषः । विद्यतेऽनयेति "विद्या" पुरुषार्थसाधनीभूता मन्त्रादिलक्षणा । माति शब्दव्यापारेण विश्वं परिच्छिनत्तीति "माता" परिच्छेत्री । सरो नीरं ज्ञानं वाऽस्या अस्तीति "सरस्वती" नदीविशेषश्च । ब्रह्मण इयं "ब्राह्मी" । भाषणं "भाषा" संस्कृतादिरूपा सर्वाऽपि भाषा भगवत्याः स्वरूपमेवेतिभावः, शिवशक्त्योरव्यभिचारात् । वर्णा एकपञ्चाशत् त्रिषष्टिर्वा तन्मयी । "परा" आत्मज्योतिः । "आद्या" स्थावरजङ्गमात्मकस्य जगतोऽप्यादिभूता सृष्टेः शब्दपूर्वकत्वात् । करणं "कृतिः" कर्त्तृव्यापार इत्यर्थः । नास्ति व्ययो यस्याः सा "अव्यया" अविनाशिनी । एवं प्रथमश्लोके त्रयोदशनामानि ।

विरुद्धः कल्पो विकल्पः तद्वती "विकल्पा" । निर्गतः विकल्पो भ्रान्तिर्यस्याः सा "निर्विकल्पा" । न जायते इति "अजा" । "कला" चतुःषष्टिरूपा । "नादः"

इत्येवंरूपेण गुरूपदिष्टेन मन्त्रेण प्राप्याम् । कस्मै प्रयोजनाय आलम्बे इत्याह—"अभीष्टसिद्धये" इति । अभित इष्टं वाञ्छितमभीष्टं तमोविनाशो जाड्यनिवृत्तिरिति यावत् तस्य सिद्धिरुत्पत्तिस्तदर्थम् । अथवा—अभीष्टं तमोविनाश एव सिद्धिरित्यभीष्टसिद्धिस्तस्मै वाचमाश्रये । अज्ञानं हि सर्वदा सर्वथा सर्वत्र अनर्थकरम्भवति, तन्निवृत्तिश्च वाग्देव्या उपासनेन क्रियते । उक्तञ्च महाकविना "दण्डिना"—

इदमन्धन्तमः कृत्स्नं जायेत भुवनत्रयम् ।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ॥ इति ।

तदेवमाधिदैविकपक्षेऽर्थयोजना बोध्या ।

( इति प्रथमं वर्णकम् )

केचित्तु—वाचम्=वेदवाणीम्, आलम्बे=सेवये तदभ्यासपरो भवामीत्यर्थः । "स्वाध्यायोऽध्येतव्यः"(शत० ११।५।७) इति श्रुतेः ।

---

अर्धचन्द्ररोधिनी नादनादान्तशक्तिव्यापिका समनोन्मननाख्येषु यथोत्तरसूक्ष्मरूपेषु स्वच्छन्दादिनिरूपितेषु अष्टसु वर्णः स चान्येषामप्युपलक्षकः तन्मयी तत्स्वरूपेत्यर्थः । क्रियत इति "क्रिया" उच्चावचा । कालस्य शक्तिः भौतिकपरीपाकसामर्थ्यं सा "कालशक्तिः" । "सर्वरूपा" प्राणिनामन्तर्गतत्वात् । "शिवा" कल्याणरूपिणी । श्रूयते गुरुमुखान्न केनचिदपि क्रियत इति "श्रुतिः" ऋग्यजुःसामाख्या । न विद्यते उत्तरः श्रेष्ठो यस्याः सा "अनुत्तरा" अनुत्तमा । एवं द्वितीयश्लोके एकादशनामानि, मिलित्वा चतुर्विंशतिर्भवन्ति ।

१–इदमिति–यदि शब्दाह्वयं वाङ्मयं ज्योतिरिव ज्योतिः अर्थप्रकाशकत्वसाम्यात् आसंसारं संसारमभिव्याप्य न दीप्यते=न प्रकाशते नैव प्रकाशेतेत्यर्थः तदा कृत्स्नं समग्रं भुवनत्रयम् अन्धन्तमः=गाढमन्धकारस्वरूपं जायेत=भवेत् । वाग्रूपज्योतिषोऽभावे व्यवहाराभाव एव स्यादित्यभ्यर्हितत्वं वाग्देव्या इति भावः अधिकं मत्प्रणीतायां "काव्यादर्शकुसुमप्रतिमायां" द्रष्टव्यम् ।

कीदृशीम्—"सदा स्वार्थेन"=सदैव स्वेन निजेनार्थेन प्रत्याख्येन (गोत्वादिपदार्थेन) स्वर्गादिपदार्थेन सदा "सम्बद्धाम्=" नित्यसम्बन्धवतीम्, औत्पत्तिक एव शब्दस्यार्थेन सह सम्बन्धो वेदस्यापौरुषेयत्वात् । नहि वेदस्यानित्येनार्थेन सम्बन्धो भवितुमर्हति । "वेदांश्चैके[1] सन्निकर्षं पुरुषाख्या" (पू० मी० १।१।२७) इत्यत्राधिकरणेऽनित्यसम्बन्धस्य व्युदस्तत्वादिति भावः ।

ननु—कस्तावच्छब्दार्थयोः सम्बन्धः ? । संश्लेष इतिचेन्नानुपलब्धेः । जतुकाष्ठवच्छब्दार्थौ संश्लिष्टौ—यथा जतुना काष्ठं संश्लिष्यते एवमेव शब्देनार्थः, अर्थेन वा शब्दः संश्लिष्ट इति चेन्नेति ब्रूमः प्रत्यक्षानुपलम्भात् । यदि भवेत्तयोः संश्लेषस्तदा जतुकाष्ठसंश्लेषवत्प्रत्यक्षेणैवोपलभ्येत,न चोपलभ्यते तस्मात्प्रतीमो नानयोः संश्लेष इति ।

तादात्म्यमिति चेद्व्याहतोपलब्धिः । अथ ब्रूषे तन्तुपटयोरिव शब्दार्थयोस्तादात्म्यं वदामः, यथा पटस्तन्तुभ्यो नात्यन्तं भिद्यते,तथा सति घट इव पटोऽप्यतदात्मा स्यात् । नापि चात्यन्तमभिन्नः अत्यन्ताभेदे यावदुक्तं भवति पट इति तावदुक्तं भवति तन्तव इत्येवं समानाभिधानाभिधेयार्थक्रियाकारितादिप्रसङ्गो दुरुद्धरः । कारकव्यापारवैयर्थ्यञ्च । तन्तुपटयोरत्यन्ताभेदे पटसिद्धये व्याप्रियमाणानि कारकाणि कदापि नालोकयेरन् । तस्मादस्ति भेदसहिष्णुरभेदस्तन्तुपटयोरिति मन्तव्यम । एवमग्निशब्दतदर्थयोरपि तादात्म्यम् । न च—अग्निपदमङ्गाररूपादर्थादत्यन्तं भिन्नम् । यद्यग्निपदमङ्गाररूपादर्थादत्यन्तं भिद्येत तर्हि ततोऽङ्गारा-

---

१—एके शब्दाऽनित्यत्ववादिनः यतः काठकं कौथुममित्यादिरूपेण पुरुषघटिता आख्या नामानि सन्ति अतो वेदान् सन्निकर्षं सादीन् पुरुषरचितानाहुरिति शेषः ।

द्यर्थप्रतीतिर्न स्यात्, नह्यग्निपदादत्यन्तं भिन्नानां जलाद्यर्थानामग्निपदात्प्रत्ययो दृष्टचरः। नापि च—शब्दादर्थस्यात्यन्ताऽभेदः तथा सति अन्नाग्न्यसिशब्दोच्चारणे मुखपूरणप्रदाहपाटनानि गृह्येरन् नच गृह्यन्ते, तस्मान्न शब्दार्थयोरत्यन्ताभेदः। भेदाऽभेदरूपतादात्म्यसम्बन्धपक्षे तु सकलदोषपरिहार इति भवितव्यं शब्दार्थयोस्तादात्म्यसम्बन्धेनैवेति चेत् ? न विरोधात्=भेदो नाम वैधर्म्यं वाऽन्योन्याभावो वा ? अभेदश्च तत्प्रतिषेधः। तौ चेदेकस्मिन्नेवाधिकरणे स्यातां कामं विरोधकथैव दत्तजलाञ्जलितामापद्येत। अस्ति च विरोधस्तस्माद्यत्किञ्चिदेतत्। एतद्विषये—"गौडब्रह्मानन्द्यां" बहु पराक्रान्तमितीह ग्रन्थगौरवभयात् प्रकृतविषयबहुव्यवधानाच्च नोक्तम्।

नच शब्दार्थयोरैक्यं प्रतीतिविरोधात्। प्रातिस्विककरणगम्यत्वाच्च। नापि तयोः कार्यकारणभावो द्वयोर्नित्यत्वात्, नवा—निमित्तनैमित्तिकत्वहेतुक आश्रयाश्रयिभावः, प्रत्यक्षविरोधेनाऽनुपपन्नत्वात्, किन्तु—" प्रत्याय्यप्रत्यायकभावः" सम्बन्धः, स चापौरुषेयः तत्तच्छब्दश्रवणेन तत्तदर्थावगमस्यानादिपरम्परासिद्धत्वात्। उक्तञ्च महर्षिणा—"औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्[1]" (पू० मी० १।१।५) इति। अस्यायमर्थः—"शब्दस्य"=

१—यथा देवदत्तादिव्यक्तिविशेषे उत्पन्ने पिता "देवदत्तोऽयम्" इति सङ्केतयति नैवं व्रीह्याद्याः शब्दास्तेषु तेष्वर्थेषु केनचित्सङ्केतिताः। अतः सङ्केतार्थे बुद्धयपेक्षाभावात् सापेक्षतालक्षणमप्रामाण्यं न प्रसज्यत इति तदिदमुक्तमनपेक्षत्वादिति। "अर्थेऽनुपलब्धे" इत्यनेन ज्ञातार्थज्ञापकत्वं प्रामाण्यपरिपन्थि नास्तीत्युक्तम्। "ज्ञानम्" इत्यनेन अज्ञापकत्वं प्रामाण्यपरिपन्थि परिहृतम्। "अव्यतिरेक" पदेन भ्रमसंशयरूपज्ञानजनकत्वं प्रामाण्यपरिपन्थि निवारितम्।

नित्यवेदघटकपदस्य "अग्निहोत्रञ्जुहुयात् स्वर्गकाम" इत्यादेर्वाचकस्य प्रत्यायकस्य शब्दस्येत्यर्थः "अर्थेन"=तत्प्रतिपाद्येन प्रत्याय्येन पदार्थेन स्वर्गादिना "सम्बन्धः" शक्तिरूपः बोधकत्वरूपः 'औत्पत्तिकः"= स्वाभाविकः, नित्य इति यावत् (अतो हेतोः) "तस्य"=धर्मस्य "ज्ञानम्"=ज्ञानसाधनं प्रमाकरणम् "उपदेशः"=उपदिश्यतेऽनेनेति उपदेशो विधिवाक्यम्।

"अव्यतिरेकश्च"=तादृशवैदिकशब्दोत्थस्य ज्ञानस्य स्वविषयीक्रियमाणेऽर्थे व्यभिचाराभावः, नह्यपौरुषेयोक्तिजन्यं ज्ञानं जातु विपर्यैति। "तत्"=तस्माद्धेतोः "अनुपलब्धेऽर्थे"=प्रत्यक्षादिप्रमाणैर्ज्ञातुमशक्ये धर्माख्येऽर्थे तदेवोपदेशशब्दितं विधिवाक्यं "प्रमाणम्"=स्वतः प्रमाणम्, "अनपेक्षत्वात्"=ज्ञानान्तरे पुरुषान्तरे वा तस्यापेक्षाशून्यत्वादिति "बादरायणस्य" अपि भगवतः सम्मतमेतत्। बादरायणस्य=व्यासस्य जैमिनिगुरोरपि सम्मतं मतमिति गुरुशिष्ययोः संवादः प्रदर्शितः।

नच वाच्यं प्रत्याय्यप्रत्यायकभावो नाम सञ्ज्ञासञ्ज्ञिभावस्तस्य स्वाभाविकत्वे प्रथमतया श्रवणेऽप्यर्थप्रत्ययापत्तिप्रसङ्ग इति, चक्षुष आलोकसंयोगस्येव शब्दस्य शब्दार्थसम्बन्धग्रहस्यापि सहकारित्वात्। यथाऽऽलोकसंयोगो रूपोपलब्धौ चक्षुषः सहकारी, तदभावे तदभावादिति नित्येऽपि शब्दार्थयोः सम्बन्धे सङ्केतग्रहस्तत्प्रकाशकः, सच वृद्धव्यवहारादिनेत्यन्यदेतत्। नन्वेवं सम्बन्धग्रहो नाम यदि शक्तिग्रहः, तदा पुरुषान्तरकृतबोधनाधीनत्वात्पौरुषेयत्वं सम्बन्धस्य प्राप्तम्? नैष दोषः। तद्ग्रहणमात्रस्यैव पुरुषाधीनत्वेन ग्राह्यस्य सम्बन्धस्य तदनधीनत्वात्।

ननु—भूमावर्थो मुखे शब्दः, गौरिति शब्दः सास्नादिमानर्थः, शब्दोऽयं नार्थः, अर्थोऽयं न शब्द इत्याश्रयभेदरूपप्रतीति-

भेदैः रज्जुघटवत् शब्दार्थयोः पृथग्भूतत्वात्ताहशयोश्च रज्जुघट-सम्बन्धवत्कृतकसम्बन्धस्यैव दृष्टत्वान्न नित्यसम्बन्धसिद्धिः, सिद्धे चैवमनित्यत्वे कश्चिच्चेतनः पुरुषविशेष एव तत्सम्बन्धी वाच्यः, सच नास्मदादिरसर्वज्ञत्वात्, किन्तु परमेश्वर एव। तेन परमेश्वरेण सर्गादिकाले सम्बन्धः क्रियते ततो रूपद्वयं कृत्वा व्यवहार्येते इति चेत् ? नेति ब्रूमः सर्गादौ मानाभावात्। आदि-काले सर्वाभावेनोपादानुपादानाभावेन सृष्ट्यभावप्रसक्तेः, वैचि-त्र्यानुपपत्तेश्च।

जीवादृष्टवैचित्र्यात्कार्यवैचित्र्यमित्यसाम्प्रतम्, दृष्टं विना केवलादृष्टेन तदसिद्धेः, अन्यथा बीजं विनाऽपि वृक्षोत्पत्ति-प्रसङ्गात्। ईश्वरेच्छादिना नित्यद्रव्यैश्च तत्सिद्धिरिति न युक्तम्, केवलानुमानशतैरपीश्वराऽसिद्धेः। बीजाङ्कुरवद् विनापीश्वरं

---

(१) केवलानुमानशतैरपीति—अयमभिसान्धिः—सावयवत्त्वेन सर्वं जगत्कार्यमित्यत्र नो नो विवादः। किन्तु—यद्यत्कार्यं तत्तदुपादानाद्युचितकारण-कलापाभिज्ञकर्त्तृविशेषपूर्वकं दृष्टं कुलालादिवदिति व्याप्तेर्निखिलजगन्निर्माण-तदुपादानदेशकालाद्युपयुक्तकारणकलापविज्ञानवाननुमेय इति न मृष्यामहे। मही-महार्णवाद्या एकदैव एकेन कर्त्रा निर्मिता इत्यत्र प्रमाणाभावात्। घटादि-दृष्टान्तानुरोधेन विजातीयानि मह्यादीनि कार्याणि विजातीयैरेव कर्त्तृभी रचितानि मन्तव्यानि कार्यत्वाऽविशेषादिति नानेश्वरवादापत्तिः।

अथ—क्षेत्रज्ञा विचित्रजगन्निर्माणाऽसमर्था इति कार्यत्वहेतुबलेनैव क्षेत्रज्ञ-भिन्नकर्त्तृकल्पनायां बहूनां तेषां कल्पनापेक्षया एक एव सकलजगन्निर्माणसमर्थोऽ-वश्यं मन्तव्य इति—ब्रूषे ? तदा क्षेत्रज्ञनिष्ठपुण्याऽपुण्यविशेषोपचितशक्तिविशेष-वैचित्र्यद्वारा तत्तद्विलक्षणकार्यसम्भवाद् व्यर्था तदतिरिक्तात्यन्तादृष्टाश्रुतपुरुष-विशेषकल्पनेति युक्तमुत्पश्यामः।

इत्थञ्च बुद्धिमदेककर्त्तृकत्वे साध्ये कार्यत्वं हेतुरनैकान्तिकः। महीमहार्ण-

प्रवाहादेव सृष्टिसिद्धावीश्वराङ्गीकारस्य प्रायिकाऽयुक्तत्वात्। ईश्वरकर्तृकत्वेन वेदानामनित्यत्वेन पौरुषेयत्वापाते शाक्यादिग्रन्थवदतीन्द्रियार्थग्राहकत्वाऽभावप्रसङ्गेनाप्रामाण्यापाताच्च। नच मन्त्रार्थवादेतिहासपुराणादिकमेव सृष्ट्यारम्भे प्रमाणमिति वदितुमपि शक्यम्, तेषां तत्र तात्पर्याभावात्, तस्मादनादिनि संसारे पदपदार्थसम्बन्धकर्त्रभावान्नित्य एव तयोः सम्बन्धः स्वीकार्य इति श्लिष्यते। नचार्थस्याऽनित्यत्वात्कथं तयोः सम्बन्धस्य नित्यत्वमिति वाच्यम् यतो नह्यस्माकं मते व्यक्तिरूपेणाऽनित्येनार्थेन शब्दस्य सम्बन्धो येनैवं पर्यनुयुज्येमहि, किन्तु नित्येनाकृतिरूपेण। आकृतिरेव सामान्यमनुगताकारप्रतीतिजननात् सैव च जातिर्नतु तदभिव्यङ्ग्या मानाभावात्, नचाकृतेरनित्यत्वम्, एकव्यक्तिनाशेऽपि व्यक्त्यन्तरे दर्शनात्। तस्माद्युक्तमुक्तं "सदा स्वार्थेन सम्बद्धाम्" इत्याहुः। शिष्टं पूर्ववत्।

( इति द्वितीयं वर्णकम् )

---

वादिकश्चेति पक्षोऽप्रसिद्धविशेषणश्च सकलरचनाचतुरस्यैकस्याऽसिद्धेः। बुद्धिमत्कर्तृकत्वमात्रं साध्यश्चेत्तदा सिद्धसाधनम् अदृष्टद्वारा क्षेत्रज्ञाणामेव तथात्वात्। क्षेत्रज्ञादृष्टसापेक्षरचनाया भवतापि स्वीकारात्।

किञ्चेश्वरः सशरीरो वाऽशरीरो वा जगन्निर्मिमीते ? नान्त्यः—अशरीरस्य कर्तृत्वादर्शनात्। मानसानामपि कार्याणां शरीरवत्तया दर्शनात्। मनसो नित्यत्वेऽपि अशरीरेषु मुक्तात्मसु कस्यापि कार्यस्याभावात्। नाद्यः—विकल्पग्रस्तत्वात्। तथाहि—तच्छरीरं नित्यमनित्यं वा ? आद्ये—सावयवेश्वरनित्यशरीरवत् जगतोऽपि नित्यत्वाऽविरोधेनेश्वरासिद्धेः। अन्त्ये—तद्व्यतिरिक्तस्तच्छरीरहेतुर्वाच्यस्तदानीं तस्याऽभावात्। स्वयमेव स्वशरीरहेतुरिति चेन्न अशरीरस्य तथात्वाऽसिद्धेरित्येवञ्जातीयका अनेके तर्का "न्यायकणिका" दावीश्वरवादनिराकरणपरा द्रष्टव्याः।

ये[1] तु—आकृतिर्न व्यक्तेर्भिन्ना व्यक्तिव्यतिरेकेण तस्या अनुपलब्धेः, नाप्यभिन्ना आधाराधेयभावप्रतीतिबाधापत्तेः, एकस्यामेकरूपायामेकानेकभेदानुपपत्तेश्च । नच भिन्नाऽभिन्ना भेदाऽभेदयोः परस्परं विरुद्धस्वभावयोः सहावस्थानाऽसम्भवात् । किञ्च—भेदपक्षे सा सर्वगता चेत् ? अन्तराऽप्युपलब्धिः स्यात् ? तत्तद् व्यक्तिमात्रगता चेत् ?एकस्यां व्यक्तौ कार्त्स्न्येन वर्त्तमानत्वे व्यक्त्यन्तरे तस्या उपलम्भ एव न स्यात् । अनुत्पन्नायां व्यक्तौ तस्मिन्देशे सत्त्वेऽप्यनुपलम्भे उत्पन्नायामपि अनुपलब्धिप्रसङ्गः, सहोत्पत्तौ तु नित्यत्वं न स्यात् । व्यक्त्यन्तरादायास्यतीति चेत् ? रिक्तं वचः अमूर्त्तायां तस्यां क्रियाऽसम्भवात् । अंशेनायास्यतीति चेन्न निरंशत्वादित्याद्यनेकप्रगाढयुक्तिव्रातैः खण्डितत्वाद् विकल्पाकारमात्रमिदं नतु सामान्यं नाम कश्चिदस्ति पदार्थः । नचैवं गवाश्वादिवैचित्र्यानुपपत्तिः विचित्रस्वभावैस्वलक्षण[2]दर्शनवशादेव तदुपपत्तेः । ननु सामान्यरूपस्यार्थस्याभावे कथं सामान्यविकल्प इति चेन्न अर्थशून्यस्यापि विकल्पस्य शुक्तिरजतादौ दर्शनात् । नचैवं सति विसंवादापत्त्या सर्वलोकव्यवहारबाधापत्तिरिति वाच्यम्, मण्यर्थिनो मणिप्रभायां मणिबुद्ध्यैव प्रवृत्त्युपपत्तेः । तादृशबुद्धेः परम्परया मणिप्रभवत्वेन मणिप्रापकतया संवादाद्व्यवहारसिद्धिस्तद्वत् विचित्रार्थक्रियासमर्थस्वल-

---

(१) सौगतमतमुत्थाप्य प्रतिक्षिपति—ये त्विति । अस्याऽऽहुरित्यग्रेऽभिसम्बन्धः ।

(२) स्वेन लक्ष्यते न तु सामान्येन तत्स्वलक्षणमित्यर्थः । नैयायिकादयस्तु—पूर्वदृष्टोऽपि घटो घटत्वसामान्येन हेतुभूतेन "अयं घट" इत्येवं लक्ष्यत इत्याहुः । वस्तुतस्तु न किमपि सामान्यलक्षणं सामान्यस्यैवाभावादिति सौगताशयः ।

क्षणाऽभिमानिनो जायमानस्यार्थशून्यस्यापि जातिविकल्पस्य परम्परया तत्प्रभवतया संवादात्तादृशव्यवहारार्थिप्रवृत्तेरपि सम्भवात्। अपि च-केशोण्ड्रकन्यायेन स्थूलावभासोपपत्तौ सञ्चितानेकपरमाणुपुञ्जातिरिक्तस्यावयविनो व्यक्तिरूपस्याऽभावाद् दूरापास्त निराधारं सामान्यम्। नच–सामान्याभावे गौर्गौरित्यनुगताकारप्रतीतिर्न स्यादिति शङ्क्यम् विलक्षणरूपस्वलक्षणस्वभावादेव तत्सिद्धेः । सामान्यवादिनापि नानाविधानां गोत्वाश्वत्वादीनां सामान्यत्वाऽविशेषेऽपि तेन तेन रूपेण तत्तद्व्यक्तिषु तत्तत्प्रतीतिजनने स्वभावस्यैव शरणीकरणीयत्वाद् । तस्माद् विकल्पमात्रमेव सामान्यं न वस्तुसदिति---आहुः,तेषां मतेऽपि पदपदार्थव्यवस्थां विना तत्तदर्थक्रियाकारितादिविषयको व्यवहारोऽन्यथाऽनुपपद्यमानः सदैव वाग्देव्याऽर्थेन सह सम्बन्धं कल्पयतीत्यकामेनापि शब्दार्थयोर्नित्य एव सम्बन्धोऽभ्युपेयः।

भट्टपादमतानुयायि"पार्थसारथिमिश्र"प्रभृतयस्त्वेवमाचक्षते—प्रत्यक्षबलसिद्धतया सामान्यं कदाप्यपह्नोतुं न शक्यम्। 'अयं गौः, अयं गौः'' "अयं वृक्षोऽयं वृक्षः''इत्याकारस्य प्रत्यक्षस्य देशकालाऽवस्थान्तरेषु विपर्यासं विनैव सार्वजनीनत्वात्, सर्वप्रमाणोपजीव्येन प्रत्यक्षेणैव वस्तुनो भेदाभेदसिद्धौ कुतर्काभासानां भ्रान्तिपरिकल्पितत्वेनाऽनादरणीयत्वाच्च । नचोक्तानुमानेन सामान्यबाधः कर्त्तुं शक्यः, उपजीव्यविरोधात्। भेदाऽभेदविकल्पेन सामान्यं निराकुर्वता भवतापि यद्वस्तु तद्भिन्नमभिन्नं वा भवतीति तद् भङ्ग्यन्तरेण स्वीकृतमेव, अन्यथाऽनुमानानुत्थानात्। उक्ताऽनुमानेन सामान्यस्य पक्षत्वे सति भेदाऽभेदशून्यत्वरूपहेत्वाधारत्वेनाङ्गीकृतत्वादित्यर्थः । अथाचक्षीथाः सामान्ये औपाधिको वस्तुभेदो न जातिनिमित्तक इति ?

(१) "आकृतिर्न व्यक्तेर्भिन्ना" इत्याद्यनुमानेन ।

तत्रोच्यते—जातिसिद्ध्यभावेऽप्युपाधिरूपसामान्यस्य सिद्ध्याऽनुगताकारस्य सामान्यस्य स्वतःसिद्धेर्यत्किञ्चिदेतत् ।

अयमभिसन्धिः—इह यावन्त औपाधिकाः प्रयोगा व्यवहाराश्च ते सर्वेऽप्यनुगताकारात्मकमूलं विनोपपद्यमाना न कदापि कुत्रापि दृष्टिपथमवतरन्ति, सर्वं स्वलक्षणं स्वलक्षणं व्यावृत्तैकरसमित्यभ्युपगच्छतः सौगतस्याऽनुवृत्तप्रत्ययाभावादौपाधिकव्यवहारस्यापि दुर्घटतया मूकीभावप्रसङ्गः । मूकीभावप्रसङ्गभङ्गेऽङ्गीक्रियमाणे त्वनुवृत्ताकारे सिद्धे बाधकाभावान्निष्प्रत्यूहं सर्वप्रमाणसिद्धं जातिरूपं सामान्यं नैवापह्नोतुं शक्यम् ।

केचित्तु—भिन्नमव सामान्यं व्यक्तिभ्यः । नचैवं तस्य पृथगप्युपलब्धिप्रसङ्गः व्यक्तिसमवेतत्वेनान्यत्र तदभावात् । नच व्यतिरेकाऽदर्शनादभेदः शङ्कनीयः "खण्डो गौर्मुण्डो गौ" रितिखण्डमुण्डाकारस्यापि व्यावृत्तिरूपस्य प्रतीतेः । अभेदपक्षे तु गवाकारवदुक्ताकारस्याप्यनुवृत्तिप्रसङ्गः, गवाकारस्य वा व्यावृत्तिप्रसङ्गः । एकस्यामपि व्यक्तावियं गौरिति प्रत्यये गौर्गौरितिवदिदंबुद्धिगोबुद्ध्योः पर्यायतापत्तेः । नच व्यक्तेर्जातिसमानाकारताप्रत्ययानुत्पत्तिप्रसङ्गः समवायसम्बन्धसामर्थ्यादेव तत्सिद्धेः तस्माद्भेदपक्षेऽपि न दोषः—इत्याहुः ।

वस्तुतस्तु दर्शितन्यायेन भदस्य, तादात्म्यप्रतीत्या चाऽभेदस्य सिद्धत्वाद्भिन्नाऽभिन्नत्वमेव युक्तमाभाति । नच भेदाभेदे विरोधशङ्कापि कर्त्तव्या गवाकारेणाऽभेदस्य खण्डाद्याकारेण च भेदस्यैकस्यामेव व्यक्तौ समसमयावगाहित्वात् । अतिप्रसङ्गस्तु न शङ्कनीयः, इदं रजतं नेदं रजतमितिवत्परस्परमुपमर्द्योपमर्दकभावाभावात् । "वाचस्पतिमिश्रै" रप्युक्तम्—

> कार्यरूपेण नानात्वमभेदः कारणात्मना ।
> हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा ॥ इति ॥

---

( १ ) भामत्यामध्यासभाष्ये ।

इत्थञ्च—"इयं गौ" रितिबुद्धिद्वयं सामानाधिकरण्यापर्यायत्वाभ्याममेदं भेदञ्च जातिव्यक्त्योर्व्यवस्थापयतीति प्रतीतिबलादेवात्र भेदाऽभेदविरोधाभावः।

अयमाशयः—गोरूपेण निरूपणीये गोपदार्थे गोजात्या व्यक्तेरभेदः प्रतीयते, गौरयं शाबलेय इति व्यक्त्यन्तरात्मना निरूपणीये जातिभेदेन तत्प्रत्ययः। नहि भवति योऽयं शाबलेयः स एव बाहुलेय इति,नापि च भवति शाबलेय एव गौर्न बाहुलेय इत्युभयथाऽपेक्षाभेदेनापि विरोधपरिहारो बोध्यः। अत एव पुरतो द्वौ गावावुपलभ्यमानस्य उभयत्र गोप्रत्ययाद् अयमस्मादन्य इति प्रत्ययाच्च भिन्नाभिन्नत्वे बाधकाभावः। तस्माद् व्यक्त्यात्मरूपत्वाद् व्यक्तिगतैव जातिः,या हि स्वकारणादुत्पद्यमानायां व्यक्तौ कारणवशात्सम्बध्यते।

ननु—पुरोवर्त्तिनि प्रदेशे प्रागविद्यमानाया जातेः कथमेतद्देशसम्बन्ध इति चेत्? नैष दोषः। अस्मिन्देशे प्रागविद्यमानस्यैव कारणवशादेव संयोगदर्शनात्। इयांस्तु विशेषः यत्संयोगो देशान्तरस्थस्य पदार्थस्यैतद्देशेन क्रमिको भवति, तादात्म्यसमवाययोस्त्वनन्तरदेशमनपेक्ष्यैव साहजिक इति। नहि संयोगस्य तादात्म्यसमवाययोश्च समानस्वभावाग्रहो येनोभयत्रापि क्रमिकप्रत्ययेनानुयुज्येमहि। नित्याया जातेरनित्यानां व्यक्तीनाञ्चाऽभेदो युक्तिपराहत इति चेन्न वस्तुनो नानाकारत्वरूपाया युक्तेरपराहतत्वात्। एकस्यैव वस्तुन आकारान्तरेण नित्यत्वमाकारान्तरेण चाऽनित्यत्वमित्यत्र बाधकाऽभावात्, कुण्डलाकारेण सुवर्णस्याऽनित्यत्वेऽपि सुवर्णाकारेण तस्याऽतथात्वात्।

यदि तु सर्वगतमपि सामान्यमित्यभ्युपगम्येत तदापि न नः किञ्चिच्छिद्यते। अभिव्यञ्जिका हि व्यक्तयः, तासां संयुक्त-

समवायस्य सामान्यग्राहकसन्निकर्षस्य व्यक्तिदेश एव सत्त्वान्न सर्वत्रोपलब्धिप्रसङ्गः। एवमभेदपक्षेऽपि नित्यत्वाऽनित्यत्वादिवत्सर्वगतत्वाऽसर्वगतत्वादिकमपि नाऽनुपपन्नं भवति। आधाराधेयत्वमपि प्रमाणसम्प्रतिपन्नम्। नच—व्यक्तिः पुञ्जरूपा येन केशोण्डूकवत्पुञ्जप्रतीतिरभ्युपगम्येत। तस्मादतिरिक्ता आकृतिर्नित्येति तयैव शब्दस्य सम्बन्धोऽपि नित्यः, वेदवागपि सदैवार्थेन सम्बद्धेति युक्तमुक्तं 'सदा स्वार्थेन सम्बद्धाम्" इति।

( इति द्वितीयवर्णकाक्षेपपरिहारः )

अपरे तु—सम्बन्धनित्यत्वसाधनप्रयासो व्यर्थ एव, सम्बन्धिनः शब्दस्यैव तावदनित्यत्वेनोक्तदोषाणां तदवस्थितेः। नहि पुरुषप्रयत्नोपलभ्यमानस्य शब्दस्य घटादिवदुत्पत्तिविनाशशालिता प्रजापतिनाप्यपह्नोतुं शक्या। नच—"स एवायं गकार" इति प्रत्यभिज्ञाबलात्तन्नित्यत्वं शक्यसमाधानम् "मा शब्दं कुरु शब्दकार्ययं माणवकः" इत्यादिसार्वजनीनव्यवहारोपलब्धेरपलपितुमशक्यत्वात्। नचाऽयं व्यवहार उच्चारणात्मकध्वनिविषय इति वाच्यम्, नित्यस्य परिच्छिन्नस्यैकदेशस्थत्वेन नानादेशावस्थितैर्वक्तृभिरुच्चारणद्वाराऽभिव्यक्त्ययोगात्। किञ्च—नित्यस्य शब्दस्याभिव्यक्तिः संयोगादिनेति चेत्? स यावानस्ति स तावानेव तत्रैवाभिव्यज्येत नतु तारतारतरत्वादिना दूरदूरतरदेशस्थितैरप्यनुभूयेत। तस्माद् "उत्पन्नो गकारो नष्टो गकार" इत्यादिप्रतीतिबलात् "तदेवौषधमिदं मया भुज्यते यत्त्वया भुक्तमासीदितिवत्" प्रत्यभिज्ञायाः साजात्येऽपि सम्भवादनित्यत्वे सिद्धे तत्सम्बन्धस्याप्यनित्यत्वं सिद्धमेव सम्बन्ध्यधीनत्वात् सम्बन्धस्येत्युत्पन्नस्यैव शब्दस्यार्थेन सह कश्चन सङ्केताख्यः सम्बन्धो-

(१) नैयायिकाः।

ऽभ्युपगन्तव्यः । नह्यनित्यस्य शब्दस्यार्थसम्बन्धो नित्य इति कोऽप्यनुन्मत्त उत्प्रेक्षेत । स च सङ्केतो भगवदिच्छारूप एव ।

ये तु—रूपरसगन्धस्पर्शशब्दसमुदायो वीणावेणुशङ्खादिद्रव्यं, तस्मिन्नेव समुदाये स्थितः शब्दोऽभिव्यज्यते इति—आहुः तेषामपि मते षड्जधैवतगान्धारादिभेदेन विभागान्तरं, षड्जजातीयस्यैव तारमन्द्रादिरूपेण च विशेषान्तरं नोपपद्येत यदि समुदायेऽभिव्यज्येत शब्दः, अन्यथा समानाश्रयतया वीणावेण्वादिगतगन्धादीनामपि प्रतिक्षणं भिद्यमानं स्वरूपमवालोकयेत, तस्मात् समुदायेऽभिव्यज्यते शब्द इत्यपि रिक्तं वचः ।

अयमभिसन्धिः—अनित्यस्य शब्दस्यार्थेन सह न कोऽपि सम्बन्धः, न संयोग, न समवायः नाप्येकार्थसमवायः तथा सति मोदकाग्निच्छुरिकाशब्दोच्चारणेन मुखपूरण-मुखप्रदाह-मुखपाटनानि दृश्येरन्नित्यवोचाम । ननु—कथं तर्हि शब्दादर्थप्रत्ययो यद्यसम्बद्धः शब्दोऽर्थेनेति चेत् ? अविनाभावलक्षणं सम्बन्धं ब्रूमः, व्यवस्थादर्शनात् । दृश्यते हि प्रयुज्यमाने वाक्ये शब्दादेवार्थप्रत्ययस्य व्यवस्था । तया चानुमीयतेऽस्ति शब्दार्थयोः सम्बन्धो

(१) अत्रायमाशयः—न्यायमते सङ्केतस्येच्छारूपत्वेन "इदम्पदमिममर्थं बोधयतु" इति पदविशेष्यकः सङ्केतः । अर्थात् गोत्वाद्यवच्छिन्नविषयतानिरूपकबोधजनकताश्रयो गवादिपदम् । "अस्माच्छब्दादयमर्थो बोद्धव्यः" इत्यर्थविशेष्यकः सङ्केतः । तथाच गवादिपदजन्यबोधनिष्ठविषयितानिरूपितविषयताश्रयत्वं गवादौ स्पष्टम् । बोधविशेष्यकः सङ्केतस्तु "गोत्वाद्यवच्छिन्नविषयको बोधो गवादिपदजन्यो भवतु" इत्याकारक इति त्रिधा सङ्केतः ।

(२) तथाच—पारमर्षं सूत्रम्—**विभक्त्यन्तरोपपत्तेश्च समासे** (न्या० २ । २ । ३९. ) इति । **समासे**=स्पर्शादिसमुदाये साहित्येन शब्दो वर्त्तत इति न युक्तम् **विभक्त्यन्तरोपपत्तेः**=विभक्त्यन्तरस्य विभागान्तरस्य तारमन्द्रत्वादेरुपपत्तेरिति सूत्रार्थः ।

(३) शब्दोऽर्थाऽविनाभावी तज्ज्ञापकत्वाद् वह्न्यविनाभाविधूमवत् ।

व्यवस्थाकारणम्। सम्बन्धाभावे सति शब्दमात्रादर्थमात्रप्रत्यय-प्रसङ्गः। तस्मादप्रतिषेधः सम्बन्धस्य सच व्याप्तिरूप एवेति चेत्? तत्प्रत्युच्यते—नहि व्याप्तिसम्बन्धकारिता शब्दादर्थव्यवस्था तस्या अपि वृत्तिनियामकसम्बन्धाधीनत्वाद्। तदनङ्गीकारे तु पूर्वोक्त एव दोषः शब्दमात्रादर्थमात्रप्रत्ययप्रसङ्ग इति। तस्माच्छब्द-स्यार्थेन सह वृत्तिरूपः सम्बन्धः। का सा वृत्तिरिति चेत्? वाच्य-वाचकभावसम्बन्धलक्षणेति ब्रूमः। सैव "शक्ति" रिति "सङ्केत" इति चोच्यते। "अस्यार्थस्येदं वाचकम्" इत्येवञ्जातीयकस्य वाक्यस्यार्थविशेषेऽनुज्ञायते सम्बन्धः। सच भगवदिच्छारूपः समयपदाऽभिलप्यः। एतमेव समयमालङ्कारिकाः "अभिधे"त्या-चक्षते। एवंविध उपयुक्ते[1] समये शब्दादर्थप्रत्ययो भवति, विप-र्यये तु शब्दश्रवणेऽपि प्रत्ययाभावः। स्वाभाविकसम्बन्धेऽभ्यु-गम्यमाने जातिविशेषे नियमविशेषाऽनुपपत्तिः=यदि शब्दार्थयोः स्वाभाविकः सम्बन्धोऽभ्युपगम्येत तदा आर्या यव-शब्दाद्दीर्घशूकविशेषं, म्लेच्छास्तत एव कङ्गुं वा न प्रतिपद्येरन्। सति तु नियमे सर्वः सर्वं सम्बन्धात्तस्मात् प्रतीयात् तस्माद् "अभिधानाऽभिधेयनियमनियोग एव तयोः सम्बन्ध" इति तादृशेन सम्बन्धेन सदा=सदैव स्वार्थेन=गोत्वादिना सम्बद्धामिति युक्तमुक्तं "सदा स्वार्थेन सम्बद्धाम्"—इत्याहुः।

( इति तृतीयं वर्णकम् )

अन्ये[2] तु—"स्वार्थेन सम्बद्धाम्" इत्यस्यायमर्थः—स्वार्थेन= निजेनाभिधेयेन सम्बद्धां=तादात्म्यसम्बन्धवतीम्। तादात्म्यश्च

---

(१) उपयुक्ते=ज्ञाते।

(२) पातञ्जलानां मतमाह—"अन्ये त्वि"ति।

तद्भिन्नत्वे सत्यभेदेन प्रतीयमानत्वम् । तत्र तावद् वागिन्द्रियं वर्णमात्रव्यञ्जकमष्टस्थानम् । तदुक्तम्—

अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलञ्च दन्ताश्च नासिकौष्ठौ च तालु च ॥ इति ।

एवमियं वाग् वर्णमात्रमभिव्यञ्जयन्ती लोकप्रसिद्धा नार्थवाचिका । श्रोत्रमपि "हृदयदेशादागत्य वागिन्द्रियाभिहतस्य उदानवायोर्यो वर्णाकारः परिणामविशेषः" तन्मात्रविषयं नतु ध्वन्यपरिणामभूतवाचकपदविषयम् । पदं पुनर्नादानुसंहारबुद्धि-निर्ग्राह्यमिति=यथाप्रतीतिसिद्धान् नादान्=वर्णान् प्रत्येकं गृहीत्वाऽनु=पश्चाद् या संहरति=एकत्वमापादयति "गौरित्येतदेकं पदम्" इति बुद्धिः तया बुद्ध्या यद्वर्णातिरिक्तं पदं गृह्यते तद्वाचकमित्यर्थः ।

एतदुक्तं भवति—वर्णव्यतिरिक्त एकप्रयत्नजन्यो नादाभिव्यङ्ग्योऽन्तःकरणग्राह्यो ध्वनिविशेषः शब्द एव वाचकः । एनमेव—"स्फुटत्यर्थो ऽस्मादिति व्युत्पत्त्या स्फुटयतेऽभिव्यज्यते वर्णैरिति वा व्युत्पत्त्या स्फोट" इति स्फोटमाचक्षते वैयाकरणाः । यद्यपि पूर्वपूर्ववर्णविषयिण्योऽपि बुद्ध्यो वर्णाकारं पदमेव प्रत्येकं गोचरयन्ति तथापि न तत्तासु विशदं प्रथते, अन्तिमे तु बोधे तदत्यन्तवैशद्यमाप्नोतीति नादानुसंहारबुद्धिनिर्ग्राह्यत्वं पदस्योक्तम् ।

ये पुनर्वर्णानेव वाचकानातिष्ठन्ते त एव एवं प्रष्टव्याः किममी प्रत्येकं वाच्यविषयां बुद्धिमादधीरन् ? मिलिता वा ? । आद्ये-एकस्मादेवार्थप्रत्ययोत्पत्तेः शिष्टवर्णोच्चारणानर्थक्यप्रसङ्गः । उक्तञ्च मिश्रैः—"निष्पादितक्रिये कर्मणि विशेषानाधायिनः

(१) उक्तमर्थं योगवाचस्पत्याशयेन स्फुटयति-"तत्र तावदि"त्यादिना ।

साधनस्य साधनन्यायातिपातात्" इति। द्वितीये तु—उच्चरित-प्रध्वंसिनां तेषामेकसमयभावित्वाभावान्मेलनासम्भव एव। एवं परस्परानुग्राह्यानुग्राहकभावेनाप्येतेऽर्थविषयिणीं बुद्धिमाधातुं न पारयन्ते इत्यकामेनाऽपि "एकं पदस्वरूपं तादात्म्येन संस्पृशन्ति वर्णाः" इत्यभ्युपेयम्। एवं सति नोक्तदोषः। उक्तञ्च महर्षिणा व्यासेन[1]—"वर्णः पुनरैकैकः पदात्मा सर्वाभिधानशक्तिप्रचितः सहकारिवर्णान्तरप्रतियोगित्वाद्वैश्वरूप्यमिवापन्नः पूर्वश्चोत्तरेण, उत्तरश्च पूर्वेण विशेषेऽवस्थापित इत्येवं बहवो वर्णाः क्रमानुरोधिनोऽर्थसङ्केतेनावच्छिन्ना इयन्त एते सर्वाभिधानशक्तिपरिवृत्ता गकारौकारविसर्जनीयाः सास्नादिमन्तमर्थं द्योतयन्तीति, तदेतेषामर्थसङ्केतेनावच्छिन्नानामुपसंहृतध्वनिक्रमाणां य एको बुद्धिनिर्भासस्तत्पदं वाचकं वाच्यस्य सङ्केत्यते" इति।

सोऽयं सङ्केतः पदपदार्थयोरितरेतराध्यासरूपः। "घटः" इत्ययं शब्दो "घटः" इत्ययमर्थः "घटः" इति ज्ञानमित्येवं प्रयोगकर्तृसम्बन्ध्युच्चारणविषयकघटादिशब्दैः कृत्वा श्रोतृस्त्रितयभिन्नं प्रतीयते तस्मात्सङ्केतकृत एव वाच्यवाचकभावः। शक्तिविशेषरूप ईश्वरस्य सङ्केतस्तु—अनादिवासनासिद्धमेव तं (इतरेतराध्यासरूपं) प्रकाशयति। विद्यमान एव पितापुत्रयोः सम्बन्धोऽयमस्य पिताऽयमस्य पुत्र इति सङ्केतेनावद्योत्यते इत्येवंरूपेण सङ्केतेन सहितां सदा स्वार्थेन=स्वस्वरूपाऽभिन्नेनार्थेन सम्बद्धां

---

(१) पातञ्जलभाष्ये।

(२) एकैको वर्णः पुनः **पदात्मा**=पदतादात्म्योपेततया पदस्वरूपम्। **सर्वाभिधानशक्तिप्रचितः**=गौः गणः, गौरम्, नगः (नागः) इत्यादिषु हि गकारो गोत्वाद्यर्थाभिधायिषु दृष्ट इति तत्तदभिधानशक्तिः, एवं सोमः, शोचिरित्यादीश्वराद्यर्थाभिधायिषु पदेष्वोत्वर्णो दृष्टः सोऽपि तत्तदभिधानशक्तिरितीयं रीतिः सर्वत्रोहनीया।

  

गवादिव्यक्त्यादिना सह ईश्वरसङ्केतावद्योतितवाच्यवाचकभावसम्बन्धोपेतामर्थतादात्म्यवतीं वाचमालम्बे इति निर्गलितोऽर्थः—इत्याचक्षते ।

( इति चतुर्थं वर्णकम् )

अपरे[1] तु—सर्वार्थदीपिकाम्=सर्वशक्तिमत्परमेश्वरोपादानकतया अशेषवस्तुप्रकाशनहेतुभूताम् अर्थात् यदीया निरवशेषवस्तुप्रतिपादने औत्पत्तिकी शक्तिः कार्यवशेन शक्यते ज्ञातुम्, अथवा—अलौकिकदेवताधर्मस्वर्गपरब्रह्मप्रत्ययोत्पादनात्मककार्यलिङ्गेन यदीया उत्पत्तिसिद्धैव स्वाभाविकी शक्तिःसामर्थ्यं=प्रतिपादकत्वरूपः सम्बन्धः[2] शक्तिलक्षणान्यतरवृत्त्याख्यो विज्ञायते तां तादृशीं "सर्वार्थदीपिकाम्" सदा=नित्यं[3] स्वार्थेन=यथासम्भवं शक्यलक्ष्यात्मकेनार्थेन सम्बद्धाम्=बोध्यबोधकभावात्मकसम्बन्धोपेतां देवीम्=देवस्य ब्रह्मण इयं देवी तां स्वयम्प्रकाशात्मकब्रह्मणो विवर्त्तभूताम्, सङ्केतसचिवाम्=सङ्केतोऽत्र वृद्धव्यवहारः=ऋषिपरम्परात्मकः सः सचिवः सम्प्रदायप्रवर्त्तको यस्याः तां नित्यां वाचम्=वेदलक्षणां वाणीम्, अभीष्ट-

(१) 'अपरे' इति । न परे अपरे स्वीया मायावादिनो वेदान्तिन इत्यर्थः ।

(२) अत्राहुर्वृद्धाः—

गौण्या लक्षणया वापि वाक्यशेषेण वा पुनः ।
वेदो यमाश्रयत्यर्थं को नु तं प्रतिकूलयेत् ॥ इति ॥

(३) इदञ्च—"समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च" ( ब्र० सू० १।३।३० ) इत्येतत्सूत्रमूलकम् ।

(४) इदञ्च—"अत एव च नित्यत्वम्" ( ब्र०सू० १।३।२९ ) इत्येतत्सूत्रमूलकम् । अत्राहुर्भामतीकाराः—"नह्यनित्याज्जगदुत्पत्तुमर्हति, तस्याप्युत्पत्तिमत्त्वेन सापेक्षत्वात् । तस्मान्नित्यो वेदः जगदुत्पत्तिहेतुत्वात् ईश्वरवदिति

सिद्धये=ब्रह्मसाक्षात्काराय, आलम्बे=आश्रये श्रद्धया तदनुगुणीभवामि, श्रद्धाया जिज्ञासुविशेषणत्वात् "श्रद्धाभक्तिध्यानयोगादवेहि" (कैव० १।२) "नैषा मतिस्तर्केणापनेया" (कठ० १।२।९) इति, "श्रद्धत्स्व सौम्य !" छां० ६।१२।३) इति च श्रुतेः। "श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः" (भ० गी० ४।३९) इति स्मृतेश्च। वेदस्यैव ब्रह्मप्रमाम्प्रति करणत्वात्तदाश्रयणमत्यावश्यकमिति भावः-इति व्याकुर्वते। तेषामयमाशयः —

नित्यो हि गवादीन्द्रादिशब्दार्थसम्बन्धः। शब्दानां तदर्थानां जातीनां च नित्यत्वात्तत्सम्बन्धेनापि नित्येन भवितव्यम्। नहि व्यक्तय उत्पद्यन्त इत्याकृतिभिरप्युत्पत्तिमतीभिर्भाव्यम्, अन्यस्योत्पत्त्या अन्योत्पत्तेरदर्शनात्। गोत्वादिवद्वसुत्वादीनां वाच्यत्वाच्च। किञ्च-यथा गोत्वादयो गवादिशब्दवाच्यास्तथेन्द्रवसुत्वाद्याकृतयोपि वस्वादिशब्दवाच्या न वस्वादिव्यक्तयः, व्यक्तीनामानन्त्यात्सम्बन्धग्रहणानुपपत्तेः। नच गोत्वावच्छेदेन व्यक्तिषु शक्तिः सुग्रहेति वदितुमपि शक्यम्, [1]सामान्यस्य प्रत्यासत्तित्वाभावेन व्यक्तिमात्रस्या-

---

सिद्धमेव नित्यत्वमनेन दृढीकृतम्" इति। एवञ्च नात्र त्रैकालबाध्यत्वरूपं नित्यत्वमभिप्रेतं किन्त्वाकाशादिवत्प्रलयपर्यन्तावस्थायित्वाऽभिप्रायकं व्यावहारिकं तदिति विरोधं मा शङ्कीः। तथाचाहुर्ब्रह्मानन्दसरस्वत्यो वेदान्तसूत्रमुक्तावल्याम्— "शब्दस्य हि वेदान्तमते सर्गाद्युत्पत्तिः सर्गान्त एव नाश" इति॥

(१) यदि सामान्यं प्रत्यासत्तिः स्यात्तदा भ्रमस्थले प्रमेयत्वेनापि रजतग्रहः रजतज्ञानस्य प्रमेयत्वप्रकारकत्वापत्तेः। नच—रजतत्वेन=रजतत्वाऽभिन्नसामान्येन रजतग्रहे सामान्यं प्रत्यासत्तिरिति वाच्यम्, इन्द्रियसंयुक्ते पुरोवर्तिनि तस्याभावेनासन्निकृष्टत्वात् सन्निकृष्टसामान्यस्यैव प्रत्यासत्तित्वाऽभ्युपगमात्। ननु सामान्यलक्षणाप्रत्यासत्त्यनङ्गीकारे महानसादौ धूमत्वेन सकलधूमानां वह्नित्वेन सकलवह्नीनां ज्ञानाभावेन निखिलधूमेषु निखिलवह्निनिरूपितज्ञान-

ऽनुपस्थितेः, गोत्वं शक्यतावच्छेदकमिति ग्रहापेक्षया "गोत्वं शक्यम्" इति लाघवान्निरूढजहल्लक्षणया व्यक्तेरपि भानादनन्यलभ्यत्वाभावाच्च । किंवा मा भूत् केवलायां व्यक्तौ शक्तिरानन्त्यव्यभिचारभीतेः परन्त्वनुपपत्तिज्ञानं विनैव व्यक्तेः शब्दशक्त्यायत्तजातिज्ञानविषयत्वेनोभयत्रैव भवतु शक्तिरिति नित्यायाः आकृतेः(जातेः) तादात्म्येन व्यक्तेरनादित्वात्तत्सम्बन्धोऽप्यनादिरेव सत्कार्यवादाभ्युपगमात् । गवादिशब्दास्तु व्यक्तिप्रभवहेतुत्वे व्यक्तेः प्रागपि सन्तीति न केवलं व्यक्तिवचनाः, ये तु तथा ते डित्थाद्याः शब्दाः अर्थानन्तरभाविनः साङ्केतिका व्यवह्रियन्ते किन्तु गवादिशब्दा वस्वादिशब्दाश्च स्थूलसूक्ष्मभावेनानुस्यूतव्यक्त्यविनाभूतसामान्यवचना इत्यवश्यमन्तव्यम् । नचेन्द्रवस्वादिव्यक्तेरेकत्वेन जात्यभावादाकाशशब्दवदिन्द्रचन्द्रादिशब्दा अपि केवलव्यक्तिवचना एव मन्तव्या इति वक्तुं शक्यम्, अतीतानागतव्यक्तिभेदेनेन्द्रादिशब्दानां केवलव्यक्तिवचनत्वस्य दौःस्थ्यात् । तथाच—"शब्द इति चेन्नातःप्रभवात्प्रत्यक्षानुमानाभ्याम्"

---

मेव न स्यात् (धूमो वह्निव्याप्यो न वेति संशयोऽपि न स्यात्) अतः सामान्यलक्षणा प्रत्यासत्तिः कल्पनीयेति चेन्न सिद्धान्ते व्याप्तिग्रहस्य सन्निकृष्टधूमादिविषयकत्वेन सर्वधूमाऽविषयतया तस्य सामान्यप्रत्यासत्तिकल्पकत्वाऽयोगात् । "धूमो वह्निव्यभिचारी नवेति संशयस्य महानसीयधूमाद्यवच्छिन्नत्वेन वह्निनिरूपितव्याप्तिनिश्चयेऽपि पर्वतीयधूमे महानसीयधूम एव वा सम्भवेनाऽप्रसिद्धधूमाऽविषयत्वात, समानप्रकारकनिश्चयस्यैव संशयविरोधित्वात् । अत एव घटत्वेन इतरभेदनिश्चयेऽपि पृथिवीत्वेन घटे तत्संशय इति तवापि सिद्धान्तः सङ्गच्छते, तस्मान्न सामान्यं प्रत्यासत्तिरित्याशयेनाह—"**सामान्यस्य प्रत्यासत्तित्वाभावेन**" इति ।

(१) केवलव्यक्तिवचनत्वपक्षे आनन्त्यव्यभिचारादिदोषभीतेरिति भावः ।

(ब्र० सू० १। ३। २८) इत्यादित्रिसूत्र्या व्यासचरणैः शब्दार्थयोरौत्पत्तिक एव सम्बन्धः समर्थितः। भगवत्पूज्यपादैश्चात्रैव—"नचेदं शब्दप्रभवत्वं ब्रह्मप्रभवत्ववदुपादानकारणत्वाभिप्रायेणोच्यते। कथं तर्हि? स्थिते वाचकात्मना नित्ये शब्दे नित्यार्थसम्बन्धिनि शब्दव्यवहारयोग्यार्थव्यक्तिनिष्पत्तिः, अतः प्रभव इत्युच्यते" इत्येवं भाषमाणैश्च नित्यः शब्दो नित्यार्थसम्बन्धाभिधायीति शब्दार्थयोर्नित्यः सम्बन्धो दर्शितः। शब्दपूर्वामेव च सृष्टिं श्रुतिस्मृती दर्शयतः। तथाच मन्त्रवर्णः—"एतेऽसृग्रमिन्दवस्तिरःपवित्रमाशवः। विश्वान्यभिसौभगाः। (ऋ० सं० अ० ७। अ० १ वर्ग० २४) इति। ब्राह्मणं चास्य पठ्यते—"एत इति वै प्रजापतिर्देवानसृजतासृग्रमिति मनुष्यानिन्दव इति पितॄंस्तिरःपवित्रमिति ग्रहानाशव इति स्तोत्रं विश्वानीति शस्त्रमभिसौभगेत्यन्याः प्रजाः" इति। अन्यत्र—"स मनसा वाचं मिथुनं समभवत्" (बृ० १। २। ४) इति शब्दपूर्विकैव सृष्टिः श्राव्यते, या चाऽनित्यशब्दार्थसम्बन्धपक्षे कथमपि न घटते। स्मृतिरपि—

अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः॥
(महा०भा०। १२। २३३। २४)

---

(२) सोऽयं व्यासशिष्यस्य जैमिनेरप्यभिमत इत्यधस्तादवातीतरमिति गुरुशिष्ययोर्वैमत्यं न शङ्कनीयम्। उक्तश्च मिश्रैर्भामत्याम्—'नचैतावता शब्दार्थसम्बन्धस्याऽनित्यत्वम्, वसुत्वादिजातेर्वा तदुपाधेर्वा यया कयाचिदाकृत्यावच्छिन्नस्य नित्यत्वादिति"

(३) वेदमय्या वाचो दिव्यत्वञ्चेदमेव यदपौरुषेयत्वेन स्वतःप्रामाण्यं सर्वार्थावभासकत्वञ्चेति। एतेनैवाभिप्रायेण मूले "सर्वार्थदीपिका" मित्युक्तम्। अतएवोक्तं शास्त्रयोनित्वाधिकरणे "रत्नप्रभायाम्"—"वेदोपादानत्वेन ब्रह्मणः स्वसम्बद्धाशेषार्थप्रकाशनसामर्थ्यरूपं सर्वसाक्षित्वं सिद्ध्यति। यद्वा—यथाऽध्येतारः।

तथा—

नामरूपञ्च भूतानां कर्मणाञ्च प्रवर्त्तनम् ।
वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः ॥ इति ॥

तथा—

सर्वेषाञ्च स नामानि कर्माणि च पृथक् पृथक् ।
वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ॥
(मनु० १ । २१ ) ।

इति चैवमादिश्रुतिस्मृतिषु सर्गादौ वैदिकशब्दादेव जगदुत्पत्ति-कथनाद्देवाद्याकृतिविशेषं विग्रहवत्त्वबोधकमन्त्रार्थवादादिभ्यो-ऽवगत्य "स भूरिति व्याहरन् भूमिमसृजत्" इत्यादिश्रुतेर्लोकानामा-कृतिश्चिकीर्षितां बुद्धावालिख्य तत्तदाकारजगत्कारणात्सृष्ट्याद्य-ङ्गीकारेऽप्याकृतावेव सम्बन्धो युज्यते न व्यक्तौ । एष एव च न्यायः "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" ( नारा० १ । १४ ) इत्यादिष्वपि योजनीयः ।

किञ्च—"यज्ञेन वाचः पदवीयमायन्तामन्वविन्दन्नृषिषु प्रविष्टाम्" (ऋ०सं०१०।७१।३)इत्ययं मन्त्रवर्णोऽपि स्थितामेव वेदलक्षणां वाच-मृषिषु अनुविन्नां याज्ञिका विदितवन्त इत्याचष्टे । सर्वैरेव वैदिकै-र्याज्ञिक एष सम्प्रदाय आदरणीयो वेदार्थाऽभ्युपगमे तस्य प्रधान-त्वात् । एवमेव—"तस्मै नूनमभिद्यवे वाचा विरूप नित्यया । वृष्णे चोदस्व

---

पूर्वक्रमं ज्ञात्वा वेदं कुर्वन्ति तथा विचित्रगुणमायासहायोऽनावृतानन्तप्रकाश-चिन्मात्रः परमेश्वरः स्वकृतपूर्वकल्पीयक्रमसजातीयक्रमवन्तं वेदराशिं तदर्थांश्च युगपज्जानन्नेव करोतीति न वेदस्य पौरुषेयता" इत्यादि ।

(१) हे ! विरूप ! विशिष्टस्वरूप विद्वन् नूनम्=निश्चयेन त्वं अभिद्यवे=सर्वतो व्यापकाय वृष्णे=कर्मफलप्रदाय तस्मै=लोकवेदप्रसिद्धाय प्रकाशस्वरूपाय परमात्मने नित्यया=नामरूपप्रवाहविच्छेदरहितयाऽनादिनिधनया वाचा=वेद-वाण्या सुष्टुतिम्=प्रियां स्तुतिं चोदस्व=कुरुष्वेत्यर्थः ।

सुष्टुतिम्" । (ऋ० ६।५।२५।६) इत्येवञ्जातीयको मन्त्रवर्णोऽप्य स्मिन्नर्थ उदाहार्यः ।

अत्राह—वाचकाच्छब्दाद्वाच्यानां वस्त्रादीनामुत्पत्तिरिति वक्षि, अवाचकेन बुद्धावुल्लेखाभावात् । तत्र यदि वस्त्रिन्द्रादीनां शब्दानां वकारेकारादयो वर्णा वाचका मन्येरन् ? तन्नोपपद्यते—प्रत्युच्चारणं वर्णानामन्यत्वेन सङ्गतिग्रहस्याशक्यतयाऽवाचकत्वात् । अथागृहीतसङ्गतिरपि वाचकः किन्न स्यादिति ? तदातिप्रसङ्गोऽनिवार्यः ।

किञ्च—प्रत्येकं वर्णानां वाक्यार्थधीहेतुत्वे वर्णान्तरोच्चारणानर्थक्यम् । मिलितानामर्थप्रत्ययाधायकत्वे प्रतिक्षणमपवर्गिणां तेषां साहित्याभाव इति पक्षद्वयेपि वाक्यार्थप्रत्ययानाश्वासः । नचोभाभ्यामतिरिक्तः कश्चन प्रकारः। यदि स्वरूपसाहित्याभावेऽपि यथाग्नेयादीनां फलकरणान्यथाऽनुपपत्त्याऽवसेयोऽपूर्वाख्यः संस्कारः,एवमेव वर्णानामर्थप्रत्ययान्यथाऽनुपपत्तिसिद्धः संस्कारः साहित्यद्वारं कल्प्यत इत्याचक्षीथाः ? तत्र पृच्छामः—अर्थधीप्रसवावसेयः संस्कारः किमज्ञातः शब्दार्थबोधे शब्दस्य सहकारी उत ज्ञातः ? नाद्यः उक्तातिप्रसङ्गात्, यथाज्ञातसङ्गतेः शब्दस्यार्थप्रत्ययेऽतिप्रसङ्गस्तथा संस्कारपक्षेऽपि । नापि द्वितीयः अन्योन्याश्रयप्रसङ्गात्, ज्ञाते संस्कारे शब्दस्यार्थधीहेतुत्वम्, सिद्धे च अर्थधीहेतुत्वे संस्कारस्य ज्ञातत्वमिति । आग्नेयादिवदितिचेन्न दृष्टान्तवैषम्यात्=आग्नेयादीनान्त्वनारब्धफलानामेव वेदेन फलकरणभावावगमाच्छक्यमर्थापत्त्याऽपूर्वावधारणं, वर्णानान्तु नार्थधीहेतुत्वे मानमिति विषमो दृष्टान्तः । एवं सति कथमपि वर्णा नार्थधीहेतवः; नापि तदभिव्यङ्ग्यः स्फोटात्मा कश्चित् तस्यापि बुद्धावनुल्लेखात् । अर्थधीरूपकार्यात्तदवगमे त्वन्योन्या

श्रयप्रसङ्गमवोचाम । स्वरूपमात्रेण नित्यस्य तस्यार्थधीहेतुत्वे सततार्थप्रत्ययोत्पत्तिप्रसङ्गो निरपेक्षहेतोः सनातनत्वात् । इत्थं वाचकाच्छब्दाद्वाच्योत्पत्तेरनुपपत्तेर्नित्यशब्दार्थसम्बन्धाभिधानं दुरुपपादमिति युक्तमुत्पश्यामः ।

अत्रोच्यते—मा भूद्वर्णानां वाचकत्वं स्फोटस्य तन्नास्तीति न मृष्यामहे। स्फोटो नाम तावद्वर्णाभिव्यङ्ग्योऽन्तिमवर्णसंस्कारसध्री-चीनः स्फुटत्यर्थोऽस्मादितिव्युत्पत्तेर्नित्यः शब्दात्मा । "स चैकैक-वर्णप्रत्ययाऽऽहितसंस्कारबीजेऽन्त्यवर्णप्रत्ययजनितपरीपाके प्रत्य-यिन्येकप्रत्ययविषयतया झगिति प्रत्यवभासते" इति । अयम-माशयः—"उत्पन्नो गकारो नष्टो गकार" इति प्रतीतेः सर्वजन-सिद्धतया वर्णानां तावदनित्यत्वमास्थेयम । "सोऽयं गकारः" इत्यादिप्रत्यभिज्ञाऽपि "सैवेयं दीपकलिके"तिवत् साजात्यनि-बन्धना । तस्माद्वर्णानां प्रत्येकं वाचकत्वे वर्णान्तरवैयर्थ्यापत्ति-भिया मिलितानां वाचकत्वमास्थेयम् । तदपि उच्चरितप्रध्वंसिनां क्रमिकाणां मेलनासम्भवादनुपपन्नम् । एकस्मृत्युपारूढानां वाचकत्वे तु "नदीरस" इत्यादौ "दीनसर" इत्येकस्मृतिविषयत्वे-नाविशेषापत्तौ समानार्थप्रत्ययप्रसङ्ग इत्यादिदोषगणग्रस्तत्वाद्व-र्णातिरिक्तः "स्फोटात्मा" वर्णपदवाक्यादिभेदेन नानाविधो यद्यपि,तथापि सिद्धान्ते वाक्यस्फोटस्य मुख्यत्वं,तस्यैव लोकेऽर्थ-

---

१—उक्तं हि स्फोटतत्त्वनिरूपणे—

न प्रत्येकं न मिलिता नचैकस्मृतिगोचराः ।
अर्थस्य वाचका वर्णाः किन्तु स्फोटः स च द्विधा ॥

२—"वर्ण-पद-वाक्य भेदेन स्फोटस्त्रिधा, पुनरसौ जातिव्यक्तिभेदेन षोढा । अखण्डपदस्फोटोऽखण्डवाक्यस्फोटश्चेति सङ्कलनया अष्टौ स्फोटाः" इति परमलघुमञ्जूषा ।

बोधकत्वात् तेनैवार्थसमाप्तेः । उक्तञ्च वात्स्यायनेनापि "पदसमूहो वाक्यमर्थसमाप्तौ" (न्या०भा०२।१।५५) इति । तममुं नित्यं स्फोटाख्यं शब्दं मत्वा वेदशब्दप्रभवत्वमिन्द्रादिसर्गस्येत्येव नित्याः शब्दार्थसम्बन्धा इति श्लिष्यते । उक्तञ्च हरिणा वाक्यपदीये—

नित्याः शब्दार्थसम्बन्धाः समाम्नाता महर्षिभिः ।
सूत्राणां सानुतन्त्राणां भाष्याणाञ्च प्रणेतृभिः ॥ इति ॥
( कां०१। का०२३ )

इदन्तु बोध्यम्—स्फोटवादिमतेऽपि न स्फोटमात्रं नित्यं वेदः, अपितु—क्रमविशेषविशिष्टं स्वरविशेषविशिष्टञ्च स्फोटस्वरूपम् । नापि च—नित्यानां विभूनामेकरूपाणां स्फोटानां स्वत एव क्रमो वा स्वरो वोपपद्यते, किन्तु ध्वन्युपाधिक एव सः । तथाचाऽभिव्यञ्जकध्वनिविशेषविशिष्ट एव वेद इति ध्वन्युपाधिकत्वं स्फोटस्य वाक्यपदीयेऽपि हरिणोक्तम्—

स्फोटस्याऽभिन्नकालस्य ध्वनिकालानुपातिनः ।
ग्रहणोपाधिभेदेन वृत्तिभेदं प्रचक्षते ॥
स्वभावभेदान्नित्यत्वे ह्रस्वदीर्घप्लुतादिषु ।
प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्यते ॥
वर्णस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते ।
वृत्तिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते ॥
शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदे तु वैकृताः ।
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते॥इति॥(कां०१।का०७५-७८)

एवञ्च—ध्वनीनामनित्यतयाऽपि तुल्यस्वरानुपूर्वीकतया वेदस्य नित्यत्वं विवक्षणीयम् । साचेयं विवक्षा वर्णवाचकत्ववादिनो मते नोपपद्यते, एकवर्णोच्चारणे वर्णान्तरवैयर्थ्यादित्युक्तम् ।

अत्र सिद्धान्तानुयायिनः—वर्णातिरिक्तस्फोटात्मकशब्दस्यानुभवानारोहाद् गौरित्युक्ते गकारौकारविसर्जनीयातिरिक्त-

स्यान्यस्य कस्यचिच्छब्दात्मनोऽश्रूयमाणत्वाच्च वर्णा एव शब्दः, तेषामेव च वाचकत्वमित्यातिष्ठन्ते। नचोत्पन्नप्रध्वंसिनां वर्णानां कथं नित्यत्वं घटत इति शङ्क्यम्। "त एवेमे वर्णा" इति प्रत्यभिज्ञायमानत्वात्। नच वपनोत्तरं "त एवेमे केशा" इति धीर्यथा सादृश्यनिबन्धना भ्रान्तिस्तद्वद् वर्णेष्वप्यैक्यप्रत्ययः सादृश्यप्रयुक्त एवेति साम्प्रतम्, बाधकाभावत्वेन वर्णेपूक्तप्रत्ययस्य प्रमात्वात्। केशेषु तु भेदधीविरोधाद्बाधकत्वम्। नापीयं प्रत्यभिज्ञाऽऽकृतिनिमित्ता वर्णव्यक्तिभेदाभावात् जातिप्रत्यभिज्ञाया व्यक्तिभेदहेतुकत्वात्। प्रकृते व्यक्तिभेदाभावान्न जातिनिबन्धनं वर्णेषु प्रत्यभिज्ञानमपि तु व्यक्तिनिबन्धनमेवेति युक्तमुत्पश्यामः।

अयमाशयः—यदि तादृशप्रत्यभिज्ञायां गव्यक्तिभेदाङ्गीकारेण एकस्यैव गत्वस्य पदद्वारा भेदकल्पनाप्रयासोऽभीष्टः स गव्यक्तावेवास्तामिति मुधैव गत्वाद्यभ्युपगम इति। अतएवोद्धार्षुर्भामतीकाराः—

तेन यत्प्रार्थ्यते जातेस्तद्वर्णादेव लभ्यते।
व्यक्तिलभ्यन्तु नादेभ्य इति गत्वादिधीर्वृथा ॥इति॥(ब्र०सू०१।३।२८)

ननु—उच्चारणभेदेन वर्णानामपि भेदः, यथा चैत्रमैत्रयोः पाठध्वनिना भेदप्रतीतिरिति चेन्न अभिव्यञ्जकध्वनिवैचित्रीसमुत्थेयं वर्णेषु विचित्रा प्रतीतिरिति सन्तुष्यताम्।

अपिच वर्णानामनित्यत्वेन पूर्वपूर्वनिवृत्त्याऽर्थप्रत्यायकत्वेनाऽभिमतस्य स्फोटात्मकशब्दस्याप्यभिव्यक्त्ययोगात्तदाहितसंस्कारकल्पनायाः स्फोटपक्षेऽप्यावश्यकत्वेन गौरवाधिक्याच्च वर्णा एव शब्दः। तेषां नित्यत्वेऽपि तज्जनिताऽनुभवस्याऽनित्यत्वेन अर्थप्रतीतिस्तु पूर्वपूर्ववर्णानुभवजनितसंस्कारसहकृतान्तिमवर्णाद्वा स्वारोपितस्वाभिव्यञ्जकध्वनिक्रमशालित्वेन स्मर्यमाणवर्णेभ्य एव

जायत इति सर्वमनवद्यम् । एवं नित्यो वर्णात्मकः शब्दस्ततएव देवादिव्यक्तीनां प्रभव इत्येवं नित्ये शब्दार्थसम्बन्धे स्थिते युक्तमुक्तं 'सदा स्वार्थेन सम्बद्धाम्' इति । अधिकन्त्वाकरग्रन्थेभ्योऽवसेयम्, गौरवभयान्नेहोक्तमिति शिवम् ॥ २ ॥

सं०—ब्रह्मतत्त्व के अनुसन्धानद्वारा निर्गुणवस्तुनिर्देशरूप मङ्गल कर के वेदान्तशास्त्रसम्बन्धी अनुबन्धचतुष्टय का निर्देश किया गया, अब ब्रह्मतत्त्वरूप परमार्थ वस्तु में वेदांतवाक्यों की प्रमाणता दिखलाने के व्याज से ब्रह्म की विवर्त्तभूत जो वाग्देवी, उस की स्तुति करते हुए सगुणवस्तुनिर्देशरूप मङ्गल करते हैं—

भाषार्थ—"सदा"=जो सर्वदा ही स्वार्थेन="भक्तजनों की जड़ता को दूर करने में "सम्बद्धाम्="सम्बद्ध=समर्थ वा उद्यत रहती है और "सर्वार्थदीपिकाम्="धर्म, अर्थ, काम, मोक्ष रूप चारों पुरुषार्थों का प्रकाश करने वाली अर्थात भक्तों के प्रति चार प्रकार के पुरुषार्थ को देने वाली तथा "सङ्केतसाचिवाम्="गुरुकृत उपदेश द्वारा प्राप्त होने योग्य, "देवीम्=" दिव्यस्वरूप, "वाचम्="सरस्वती, शास्त्र की अधिष्ठात्री वाग्देवी का ('अहम्='मैं शास्त्रज्ञान का अर्थी) "अभीष्टसिद्धये=" अज्ञाननिवृत्तिरूप इष्टफल की सिद्धि=प्राप्ति के लिये "आलम्बे=" आश्रयण करता हूं ।

अथवा—("अहम्=" मैं) "अभीष्टसिद्धये=" ब्रह्मसाक्षात्काररूप प्रयोजन की सिद्धि के लिये स्वार्थेन=अपने अर्थ

के साथ सदा=नित्य सम्बद्धां=सम्बन्धवाली, "सर्वार्थदीपिकाम्=" सर्वशक्तिमान् मायानियन्ता परमेश्वर से उत्पन्न होनेके कारण धर्माऽधर्म, स्वर्गनरक, बन्धमोक्षादि अशेष अर्थों का प्रकाश करने वाली, 'देवीम्=" स्वयम्प्रकाशस्वरूप ब्रह्म की विवर्त्त-भूत, "सङ्केतसचिवाम्=" वृद्धव्यवहाररूप सम्प्रदाय से प्राप्त "वाचम्=" वेदरूप वाणी का "आलम्बे=" आश्रयण करता हूं ।

सार यह कि—जैसे प्रपञ्चमात्र का विवर्त्त उपदान होने के कारण ब्रह्म सब पदार्थों का अवभासक=सत्ता स्फूर्ति देने वाला है वैसे ब्रह्म से उत्पन्न होने के कारण वेदवाणी भी सब विद्याओं का प्रकाश करने वाली है, ऋगादिरूप ऐसी वेदवाणी का परमात्मा के विना अन्य किसी से उत्पन्न होना सम्भव नहीं । आचार्यों ने भी शास्त्रयोनित्वाधिकरण में स्पष्ट कथन किया है—

"नहीदृशस्य शास्त्रस्यर्ग्वेदादिलक्षणस्य सर्वज्ञगुणान्वितस्य सर्वज्ञादन्यतः सम्भवोऽस्ति"=प्रदीपवत् सर्व अर्थों के प्रकाशक ऋग्वेदादिशास्त्ररूप वेद की उत्पत्ति सर्वज्ञ ईश्वर के बिना अन्य किसी से नहीं हो सक्ती । अतएव चारों वेद

१—इस कथन से यह भी तात्पर्य जतलाया है कि ग्रन्थकर्ता ने इस ग्रन्थ में वेदशास्त्र-अविरोधी युक्तियों के द्वारा वैदिक तत्त्व का ही निरूपण किया है ।

भ्रम, प्रमाद, विप्रलिप्सा आदि दोषों से सर्वथा वर्जित और धर्म, ब्रह्म आदि अर्थों के बोध कराने में स्वतःप्रमाण हैं क्योंकि धर्मादिक पदार्थ किसी लौकिक प्रमाण के विषय नहीं, इस लिये जिज्ञासु पुरुष को अपौरुषेय वेद अथवा वेदार्थ के उपबृंहण करने वाले ऋषि प्रणीत स्मृति पुराणादि ग्रन्थों का अवश्य आश्रयण करना चाहिये ॥ २ ॥

ननु[२]—यत् सन्दिग्धं यच्च सप्रयोजनं तदेव प्रेक्षावतां जिज्ञासाविषयो भवति नाऽसन्दिग्धं न वाऽप्रयोजनम्, नहि कोऽपि प्रेक्षावान् स्फीतालोकमध्यवर्त्तिनो घटादीन् करटदन्तान् वा जिज्ञासितुं प्रयतते। सन्दिग्धत्वसप्रयोजनत्वे हि जिज्ञास्य-

१—जिस प्रकार अध्ययन करने वाले याज्ञिक वा अन्य पूर्व २ क्रम के अनुसार ही उत्तरोत्तर वेद का अध्ययन करते चले आते हैं ऐसे ही विचित्र गुणवाली माया के नियन्ता परमेश्वर ने पूर्वकृत कल्प में होने वाले क्रम के समानजातीयक्रम वाले वेदों का प्रकाश किया है। वेद और वेदार्थ का ज्ञान भगवान् को युगपत् काल में ही रहता है। किसी अन्य प्रमाणद्वारा अर्थ को जान कर भगवान् वेदवाक्य की रचना नहीं करते। यही वेदों का "अपौरुषेयत्व" है। पौरुषेय वाक्यों के रचियता प्रत्यक्षादि प्रमाणों द्वारा अर्थ को जानकर ही वाक्य रचना करते हैं। परन्तु ईश्वरीय वेदवाक्य का ऐसा स्वभाव नहीं, अतएव वेदों में भ्रमादि दोषों का भी सम्भव नहीं। वेदान्त के आकर ग्रन्थों में इस अर्थ का विस्तार से वर्णन किया गया है, अधिक के जिज्ञासु उन का अवलोकन करें।

२—भामतीकाराशयेन शास्त्रारम्भप्रतिक्षेपकं पूर्वपक्षमुत्थापयति—"ननु" इति।

त्वव्यापके । आत्मा च जिज्ञास्य इत्युक्तम्, स च सर्वेषामहमाकारात्मकप्रतीतिविषयत्वादपरोक्षाऽनुभवसिद्ध इति कथं जिज्ञासागोचरः ? नहि कस्यापि भवति सन्देहो "ऽहमस्मि नवेति", नवा विपर्ययो "नाहमस्मी"ति । प्रयोजनमपि चाऽऽत्मज्ञाने न पश्यामः । इदं हि अद्वैतिनये आत्मज्ञानस्य प्रयोजनं स्यात् यत्सकलस्यास्यानर्थात्मकस्य प्रपञ्चस्य आत्माऽज्ञानसमुत्थत्त्वादात्मज्ञानेन विनिवृत्तिरिति । दर्शितरीत्यात्वनादिनाऽत्मनो यथार्थज्ञानेन अद्यावधि अनर्थात्मकः प्रपञ्चो न निवृत्त इति चेत्का नामाग्रेऽपि तस्य तन्निवर्त्यत्वं प्रत्याशा । आत्मनो यथार्थज्ञानश्चाऽहमकारात्मकप्रत्ययं विना नान्यदस्तीत्यवोचाम । स एवच बृहत्त्वाद् ब्रह्मेति,अनया रीत्या ज्ञातस्य तस्य ज्ञापने उपनिषदां प्रामाण्यमपि न सम्भवीत्यज्ञातार्थज्ञापकत्वात्प्रमाणानाम्, अतस्तादृशाद्वैतब्रह्मसाक्षात्काराय वेदान्तशास्त्रमिदमनारम्भणीयम् । अद्वैतात्मप्रतिपादनपराणि श्रुतिस्मृतिवचांसि तु बाधितमुख्यार्थान्युपचरितार्थनयापि नेतुं शक्यानि । भवतश्चात्र प्रयोगौ—"मुमुक्षुणा ब्रह्म न विचार्यं तत्प्रत्यसन्दिग्धत्वात् तथाविधकुम्भवत् । मुमुक्षुणा ब्रह्म न विचार्यं तत्प्रत्यप्रयोजनत्वात् करटदन्तवद्" इति ।

अथवा—जगन्मिथ्यात्ववादिनये ब्रह्मैव नास्तीति तज्जिज्ञास्यत्वाऽनुपपत्तिरेव । कथमिति चेद् ? निर्विशेषत्वादेवेति जानीहि । नहि निर्विशेषवस्तुनः खपुष्पादतिरेकोस्ति । अस्ति चेद्ब्रह्म तदा अस्तित्वरूपविशेषवत्त्वप्रसङ्गादपसिद्धान्तः । एवं स्वसम्प्रदायसिद्धनिर्गुणत्वेनाऽभिमतस्य ब्रह्मणः तदनुभवितुमु-

१—विशिष्टाद्वैतिनयेन शास्त्रारम्भं प्रतिक्षिपति—"अथवे"ति ।

कस्य चाऽवाङ्मनसगोचरानवधिकातिशयानन्दवत्त्वं श्रुतिभिर्जोघुष्यमाणं कथमुपपद्येत ? न खलु पाषाणकल्पस्य केवलस्य तदनुभवितुर्वाऽवाङ्मनसगोचरानवधिकातिशयानन्दवत्त्वं सुमन्दधियाऽपि केनचित्सुवचम्, तस्मान्मायावादिसिद्धान्ते जिज्ञासानुपपत्तौ विचारशास्त्रारम्भणं व्यर्थम् ।

किञ्च[1]—सविलासाज्ञाननिवृत्तिरित्युच्यते तत्र सकलप्रपञ्चोपमर्दकामो जिज्ञासुरधिकारीति स्थाप्यते, तच्च न सम्भवति । नहि प्रपञ्चोपमर्दकामनया कोऽपि प्रेक्षावान् प्रवर्त्तमानः सम्भाव्यते दृश्यते वा । अपि तु दुःखत्रयजिहासयेष्टं समीहमानः सकलोऽपि प्राणिवर्गस्तत्र तत्रोपाये सावधानो वोभवीति । विचारशास्त्रसाध्यतत्त्वज्ञानस्य त्वनेकजन्माभ्यासपरम्परायाससाध्यतयाऽत्यन्तं दुष्करत्वमिति दृष्टैरेवोपायैर्दुःखत्रयनिवृत्तिदर्शनात् स्वगोष्ठीमात्राऽभ्यूहितालौकिकोपायस्य सर्वथैव विचारकुशलैरनादरणीयत्वमास्थेयमिति सुतरामधिकारिणोऽसम्भवः ।

अयमभिसन्धिः—दुःखं तावत् त्रिविधं प्राणिनां निवर्त्तनीयम् आध्यात्मिकम्[2], आधिभौतिकम्, आधिदैविकञ्चेति । तत्राध्यात्मिकं द्विविधं शारीरं मानसञ्चेति । आद्यं ज्वराद्यनेकविधव्याधिरूपम् । तन्निवृत्तये वैद्यकविद्भिरायैर्धन्वन्तरिप्रमुखैरनेक उपायास्तत्त्वज्ञानापेक्षयेषत्कराः=अनायाससम्पाद्या उपदिष्टाः

---

१—एकभविकवादिनयेनानुबन्धचतुष्टयं प्रतिक्षिपन् शास्त्रारम्भानुपपत्तिं दर्शयति—"किञ्चे"ति ।

२—"अध्यात्मादेष्ठञिष्यते" ( वा० ४।३।६० ) इति वार्त्तिकेन एषु ठञ्, उभयपदवृद्धौ च अध्यात्मं भवम् "आध्यात्मिकम्" इत्येवमादि प्रयोगसाधनं ज्ञेयम् ।

सन्तीति शारीरदुःखप्रतिकारकरणं सुकरमेव। द्वितीयो मानसोऽपि सन्तापो रम्भादम्भप्रतिस्पर्धिसौन्दर्यमदमत्ताङ्गनालिङ्गनाङ्ग-विलेपनमणिमाणिक्यादिजटितविविधालङ्कारभारपरिधानादिना यथेष्टं शक्यते दूरीकर्त्तुम्। आधिभौतिकन्तु नानाविधकला-कौशलविज्ञानंशास्त्राभ्यासादिना नवनवैश्च वैद्युतैराविष्कारैः शक्यसमुच्छेदम्। आधिदैविकमपि—मणिमन्त्रौषधाद्युपयोग-प्रकारैर्निबर्हणीयम्। एवमिदं दुःखत्रयं लौकिकोपायसमुच्छेदं यत्कामो यथाविधि तदनुष्ठानेन निवृत्तदुःखः स्वस्थीभवितुमर्हति। तत्र यत्सविलासाज्ञाननिवृत्तिरूपो मोक्षस्यांशो मायावादिभि-रिष्यते, तस्येच्छाभावादेव तत्कामनावतोऽधिकारिणोऽप्यसम्भव इति भूयोऽपि विचारशास्त्रारम्भणं व्यर्थम्।

यच्च—परानन्दावाप्तिरूपा ब्रह्मप्राप्तिर्मुक्तिरिति वेदान्त-डिण्डिमः। तत्र पृच्छ्यते एवम्भूते मोक्षे मुमुक्षोरिच्छा वर्त्तते न वा? अन्त्यश्चेत्तस्याः प्रयोजनत्त्वमेव न सिद्ध्यति। आद्ये—किं तद् ब्रह्म ज्ञातमज्ञातं वा? ज्ञातस्य ज्ञापने वेदान्तानामप्रामाण्य-मित्यवोचाम। अज्ञातश्चेन्न तत्र मुमुक्षोरिच्छा, अज्ञाते इच्छाया एवाभावात्। एवञ्च—वैराग्यविवेकशमदमादिसाधनोपदेश-वैयर्थ्यमपि, ऐहिकामुष्मिकसुखविषयककामनयैव मनुष्य-मात्रस्य व्याप्तत्वात्तदर्थमेव प्रवृत्तिदर्शनाच्च नास्ति कोपि वेदान्त-शास्त्राधिकारी।

अथ—ब्रह्मात्मनोरैक्यं शास्त्रप्रमेयमित्यपि न सम्भवति। अविद्यास्मितादिक्लेशातीतनित्यशुद्धबुद्धमुक्तस्वभावं ब्रह्म, प्रत्य-गात्मा च ततो विपरीतः कर्त्ता भोक्ता परिच्छिन्न इति तयोः परस्परमत्यन्त विविक्तस्वभावयोर्ब्रह्मात्मनोः कथमैक्यम्?

भवति च प्रयोगः "ब्रह्मात्मानौ भिन्नौ विरुद्धधर्माक्रान्तत्वाद् घटपटवद्" इति ।

प्रयोजनञ्च न सिद्ध्यति । अज्ञाननिवृत्तिरिति प्रयोजनमुच्यते औपनिषदैः, तत्तदा स्याद् यदि प्रपञ्चोऽध्यस्तः स्यात्, नहि सत्यस्य ज्ञानेन निवृत्तिः क्वापि दृष्टचरी । नच प्रकृतेऽध्यासः सम्भाव्यते कारणाभावात् । तथाहि—नह्यवस्तुनो निरात्मकस्यारोपो यावता पूर्वदृष्टस्य सत एव क्वचिदारोपो दृश्यते । उक्तञ्च भट्टकुमारिलैस्तन्त्रवार्त्तिके—

अध्यस्यते खपुष्पत्वमसत्कथमवस्तुनि ।
प्रज्ञातगुणसत्ताकमध्यारोप्येत वा न वा ॥ ( तन्त्रवा० १।४।२२)

इति ॥ तस्मात्सत्यपदार्थीयज्ञानजन्यसंस्कारः, भयलोभाद्याश्च प्रमातृनिष्ठाः, सादृश्यादयः प्रमेयनिष्ठाः पित्ताद्याः प्रमाणनिष्ठाश्च दोषाः, अधिष्ठानस्य सामान्यरूपेण ज्ञानं विशेषरूपेण चाज्ञानमिति सर्वमिदमुपकरणजातमध्यासस्य दण्डचक्रन्यायानुगतकारणतया सर्ववादिसम्मतं वेदनीयम्, रज्जुसर्पादौ शुक्तिरजतादौ च तथादर्शनात् । वेदान्तसिद्धान्ते तु सत्यस्य कस्यचित् प्रपञ्चस्याद्याप्यभावादध्यासहेतुभूताना तज्जन्यसंस्काराणां सुतरामसम्भवः । नह्यद्वैतिनये ब्रह्मातमातिरिक्तं किमपि परमार्थस्वरूपं वस्तु वेविद्यते यज्जनिताः संस्काराः प्रपञ्चाध्यासमुपाददीरन् ।

---

१—उक्तञ्च सङ्क्षेपशारीरकस्य प्रथमाध्याये—

अत्राह सद्वयमिदं मम रूपमीक्षे,
तत्त्वाद्वयं विगणयामि परोक्षमेव ।
पारोक्ष्यसद्वयविभागयुजोर्विरोधाद्,
वाक्यार्थबोधमतिदुर्लभमेव मन्ये ॥ इति ।
( सं० शा० १।९५ )

प्रमेयदोषाऽसम्भवश्च=यथाऽध्यासहेतुसंस्कारानुपपत्तिस्तथा प्रमेयदोषस्य सादृश्यस्याऽप्यनुपपत्तेरेव, कथं तेजस्तिमिरवदत्यन्तं विविक्तस्वरूपयोः प्रपञ्चात्मनोः सादृश्यं सम्भवेत् ? उक्तञ्च भवतामेवाचार्यैः 'युष्मदस्मत्प्रत्ययगोचरयोस्तमःप्रकाशवद्विरुद्धस्वभावयोः' इत्यादि (शारीरकभाष्ये १।१।१)। प्रमातृदोषश्चाऽनुपपन्नः=प्रपञ्चाध्यासे प्रमातृदोषोऽपिनोपपद्यते, प्रमातुः प्रपञ्चपदार्थान्तःपातित्वेनाध्यासात्पूर्वं तत्स्वरूपाऽसिद्धेः । अधिष्ठानस्य विशेषरूपेणाज्ञानमित्यपि न घटते एकस्मिन्नाद्वितीये निर्विशेषे सामान्यविशेषभावानभ्युपगमात् । अध्यासलोभादभ्युपगमे तु सकलविशेषातीतं निर्विशेषमेव परम्ब्रह्मेति सिद्धान्तो भज्येत मायावादिनाम् । अपि च —ब्रह्म स्वयम्प्रकाशमज्ञानविरोधि चेत् कथं तत्राज्ञानं तिष्ठेद् रवाविवान्धतमसम् ?

उक्तञ्च—

ज्ञानरूपं परम्ब्रह्म तन्निवर्त्यं मृषात्मकम् ।
अज्ञानञ्चेत्तिरस्कुर्यात्कः प्रभुस्तन्निवर्त्तने ॥
ज्ञानम्ब्रह्मेति चेद्ज्ञानमज्ञानस्य निवर्त्तकम् ।
ब्रह्मवत्तत्प्रकाशत्वात्तदपि ह्यनिवर्त्तकम् ॥
ज्ञानम्ब्रह्मेति विज्ञानमस्ति चेत्स्यात्प्रमेयता ।
ब्रह्मणोऽननुभूतित्वं त्वदुक्त्यैव प्रसज्यते ॥ इति ॥

(श्रीभाष्ये १।१।१)

---

१—"आत्मा प्रत्यक्, बन्धः पराक्; आत्मा विषयी, बन्धो विषयः; आत्मा दृक्, बन्धो दृश्यम्; इत्येवमत्यन्तविलक्षणयोरेतयोः कथमपि न सादृश्यम्, यथाच शुक्तिरजतयोश्चाकचक्यादिकम् । अत आत्मनि प्रपञ्चः, प्रपञ्चे वा आत्मा नाध्यस्त इत्याक्षेप्तुराशयः ।

किञ्च—"संहितमेतच्छारीरकं जैमनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिरिति" द्वयोः शास्त्रयोरैक्यं ब्रुवता केषाञ्चिदाचार्याणां वेदान्तशास्त्रस्य पृथगनुबन्धादिकल्पना व्यर्था, तावतैव गतार्थत्वान्मोक्षस्य कर्मभ्योऽपि शक्यप्राप्तेः। उक्तञ्च वार्त्तिकसारे—

निषिद्धस्य निरस्तत्वान्नारकीं नैत्यधोगतिम्।
नित्यानुष्ठानतश्चेमं प्रत्यवायो न संस्पृशेत्॥
शरीरारम्भकं कर्म भोगेन क्षीयते ततः।
विनाप्येकात्मसम्बोधान्मुक्तिः सिद्धाऽन्तरात्मनः॥

एवं काम्यानां निषिद्धानाञ्च परिवर्जनात्स्वर्गनिरयाद्यप्राप्ते, नित्यनैमित्तिकानुष्ठानाच्च प्रत्यवायानुत्पत्तेः शरीरारम्भकस्य कर्मणो भोगेन क्षयादनायाससिद्धैव मुक्तिरिति सत्यस्य प्रपञ्चात्मकस्य बन्धस्य ज्ञानान्निवृत्तिरूपं प्रयोजनं न घटत इति ऐकभविकवादनयेन मोक्षसिद्धौ शास्त्रारम्भानुपपत्तिरिति प्राप्ते पूर्वपक्षे मङ्गलश्लोकेन सूचितस्याप्यनुबन्धचतुष्टयस्य तद्विशिष्टस्वरूपप्रतिपत्तये ग्रन्थारम्भं सार्थकयन् साक्षाद्विषयप्रयोजनप्रतिपत्तिं प्रतिजानीते—"योऽज्ञातोऽनर्थसार्थाय" इति।

---

(१) यद्यप्ययं ग्रन्थः—"अविद्यानिवृत्तिरेव मोक्षः, सा च ब्रह्मविज्ञानादेव भवति, तज्ज्ञानञ्चोपासनात्मकमेव नतु वेदान्तमहावाक्यजन्यम्" इति विशिष्टाद्वैतिनां मतेन द्वयोः शास्त्रयोरैक्यघटकोऽस्ति, तथापि ज्ञाननैरपेक्ष्यमोक्षवादिनोऽपि ज्ञानकाण्डस्य कर्मशेषत्वमभ्युपगच्छन्त उपनिषद उपचरितार्थयन्ति, अतोऽयमनुबन्धपूर्वपक्षे फलतः साम्यं धत्ते इति तदर्थत्वेनाप्युपात्तः। स्पष्टीभविष्यति चैतदग्रे समाधानग्रन्थेऽपि।

(२) मोक्षसाधनीभूतकर्ममात्रवादः "एकभविकवादः"।

**योऽज्ञातोऽनर्थसार्थाय ज्ञातो मोक्षाय चेश्वरः ।**
**स सर्वैः सर्वथा सम्यग् जिज्ञास्योऽस्ति मुमुक्षुभिः ॥३॥**

"य ईश्वरः"=परमात्मा "अज्ञातः" अज्ञानविषयतानिरूपिता-ऽज्ञाततावान् असाक्षात्कृत इत्यर्थः, अनर्थसार्थाय"=अनर्थो रागद्वेषात्मकःकर्तृत्वभोक्तृत्वलक्षणः संसारप्रवाहः तस्य सार्थः सङ्घः अज्ञानसमुत्थः अह कर्त्ता,अहं भोक्ता, अहं सुखी,अहं दुःखी,ममेदं कर्तव्यं, ममेदं भोक्तव्यं चेत्येवमात्मकोऽनादिरनन्तो नानाविधो नैसर्गिकोऽध्यासकलापः तस्मै "भवती"ति शेषः । यस्याऽज्ञान-विलसितमेवैतन्निखिलं महादुःखं जगद्बिम्बमिति निर्गलितोऽर्थः। यः"च ज्ञातः"=तत्त्वमस्यादिमहावाक्यजन्याखण्डब्रह्मात्माकारवृत्ति-विषयीकृतः "मोक्षाय"=मुक्तये सकलदुःखनिवृत्त्यात्मकपरानन्दावाप्तिरूपाय परमप्रयोजनाय भवति । सर्वोऽपि प्राणिवर्गो "निरतिशयं सुखं मे स्यात् दुःखं मात्रयाऽपि मा भूद्" इति परमसुखार्थी यतोऽतः परानन्दस्वरूप आत्मैव ज्ञातो मुख्यं प्रयोजनम् । यत्साक्षात्कारः सकलदुःखनिबर्हण इत्यर्थः"सः"स एव"सर्वैः"=सकलैः "मुमुक्षुभिः"=मोक्षेच्छावद्भिः दुःखात्मकापारसंसारपारावारसन्तरणकामनया विह्वलीभूतैः "सर्वथा"=सर्वप्रकारेण वेदाऽनुवचनेन, यज्ञेन, दानेन, अनाशकेन तपसा वा "तमेतं वेदाऽनुवचनेन ब्राह्मणा विविदिषन्ति" इति श्रुतेः ( बृ० ४ । ४ । २२ ) एवमिहामुत्रफल-भोगवितृष्णैः सद्भिर्गुरूपसत्तिं कुर्वाणैरधिकारिभिः, "सम्यक्"= असम्भावनाविपरीतभावनानिवृत्तिपूर्वकं यथा स्यात्तथा 'जिज्ञास्यः' विचार्योऽस्ति ।

(१) "सर्वं वाक्यं सावधारण"मिति न्यायेन व्याख्याति "स एवे"ति ।
(२) तथा विचार्यो येनाऽसम्भावनादिनिवृत्तिः स्यादित्यत्र तात्पर्यम् ।

यावत्कालपर्यन्तं ब्रह्मात्मनोरभेदसाक्षात्कारात्मकं फलं न जायेत तावत्कालपर्यन्तं वेदान्ताऽविरोधितर्कोपकरणा ब्रह्ममीमांसाऽपरित्याज्यैवेति भावः । उक्तञ्च परमर्षिणा—'आवृत्तिरसकृदुपदेशात्' (ब्र० ४।१।१) इति । प्रयाजादिवददृष्टफलकत्वाभावात् षड्जादिस्वरसाक्षात्कारवत् दुर्विज्ञेयात्मतत्त्वसाक्षात्कारस्याऽऽवृत्तिविशिष्टश्रवणादिसाध्यतया तदावृत्तिरेव कर्त्तव्या, कुतः—"श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" (बृहदा० २।४।५) इत्याद्यसकृदुपदेशादिति सूत्रार्थः । तस्माद्युक्तमुक्तं 'सम्यग् जिज्ञास्यः" इति ।

यत्तूक्तं—सन्दिग्धं सप्रयोजनञ्च जिज्ञास्यत इति, प्रकृते चाहमाकारास्पदप्रतीतिविषयत्वादात्मा न सन्दिग्धः, नचोक्ताकारप्रत्ययालम्बनतां विहायान्यदात्मतत्त्वं कथमपि प्रसिद्धं, नापि च तज्ज्ञाने किञ्चित्प्रयोजनं पश्यामः, अनाद्यनन्ताबाध्यसंसारस्य तादृशात्मज्ञानेन सहैवानुवृत्तिदर्शनादनिवृत्तेरिति व्यापकविरुद्धोपलब्धिरिति-तदुरुक्तम्।भवेदेतदेवं यद्यहमित्यनुभवे स्पष्टमात्मतत्त्वं प्रथेत । निखिलोपाध्यतीतानन्दानुभवैकरसनित्यशुद्धबुद्धमुक्तस्वभावमद्वैतमात्मतत्त्वं सहस्रशः श्रुतिस्मृतीतिहासपुराणैर्जेगीयमानं न नास्तीति शक्यं वदितुम् । नचोपक्रमोपसंहारादिवाक्यतात्पर्यावबोधहेतुन्याये विद्यमाने तानि श्रुतिस्मृतीतिहासपुराणवचांसि कथमपि गौणार्थतया व्याख्यातुं शक्यानि । तथाहि—छान्दोग्यस्य षष्ठे प्रपाठके उद्दालकः श्वेतकेतुं पुत्रमुवाच "सदेव सौम्येदमग्र आसीत्" "एकमेवाद्वितीयम्" (६।२।१) अर्थात् हे ! सौम्य ! प्रियदर्शन ! इदं=सर्वं जगद् अग्रे=उत्पत्तेः प्राक्काले सद्=

(१) जिज्ञास्यत्वव्यापके सन्दिग्धत्वसप्रयोजनत्वे तद्विरुद्धे चाऽसन्दिग्धत्वनिष्प्रयोजनत्वे तयोरुपलब्धिस्ततश्च व्यापकाभावे व्याप्यजिज्ञास्यत्वाभाव इत्यर्थः ।

अबाधितं ब्रह्मैवासीत्, एवकारेण जगतः पृथक्सत्ता निषिध्यते। सजातीयविजातीयस्वगतभेदनिरासार्थं तु—'एकमेवाद्वितीयम्" इति पदत्रयम्। एवमद्वितीयं ब्रह्मोपक्रम्य "ऐतदात्म्यमिदꣳ सर्वम्' (छां० ६।८।७,६।१६।३) इत्युपसंहरति, इदमुपक्रमोपसंहारयोरैक्यं तात्पर्यलिङ्गम् (१)॥ तथा—"तत्त्वमसि" ( छां ६।८।७—६।१६।३ ) इति नवकृत्वोऽभ्यासः (२) रूपादिविहीनस्याद्वितीयस्य ब्रह्मणो मानान्तरायोग्यत्वादपूर्वत्वमुक्तम् (३)॥ "अत्र वाव किल सत्सौम्य! न निभालयसे"(छां०६।१३।२)इति सङ्घाते स्थितं प्रत्यग्ब्रह्म न जानासि—"तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये (छां० ६।१४।२) इति ब्रह्मज्ञानाद् विदुषो ब्रह्मात्मभावापत्तिरूपं फलमुक्तम्।(४)॥"अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" ( छां० ६।३।२ ) इत्याद्यद्वितीयब्रह्मज्ञानाऽर्थोऽर्थवाद उक्तः (५)॥ मृदादिदृष्टान्तैश्च प्रकृतिव्यतिरेकेण विकारो नाम न कश्चिदस्तीति उपपत्तिरभिहिता (६)॥ एवं प्रतिवेदान्तं दृश्यमानैः षड्विधैर्व्यस्तैः समस्तैर्वा तात्पर्यलिङ्गैरद्वितीयब्रह्मात्मतत्त्वमबाधितं ज्ञातं भवतीति कथं तान्युपचरितार्थानि मन्येरन्। उक्तञ्च—भामतीकारैः"अभ्यासे हि भूयस्त्वमर्थस्य भवति यथाऽहो दर्शनीयाहो दर्शनीयेति न न्यूनत्वम्, प्रागेवोपचरितत्वम्" इति (ब्र०सू०१।१।१)। नच तेजोबादिसृष्टिक्रमोऽपि तत्र कथित इति कथं निर्विशेषाद्वैत एव तासां तात्पर्यमिति शक्येत वदितुम्, "यत्परः शब्दः स शब्दार्थः" इति न्यायेन तादृशात्मतत्त्वस्यैव

---

(१) तस्याचार्यवतो मुक्ताऽविद्यावन्धनस्य तावानेव कालश्चिरं क्षेपः सदात्मस्वरूपसम्पत्तेर्यावन्न विमोक्ष्यते, येन कर्मणा शरीरमारब्धं तस्योपभोगेन देहपातो यावदित्यर्थः। अथ=तदैव सम्पत्स्यते, देहमोक्षस्य सत्सम्पत्तेश्च कालभेदो नास्तीति श्रुतेराशयः॥

(२) उपनिषद्वाक्यानि। "ताः" इति पाठे तु "उपनिषदः" इत्यर्थः।

प्रतिपिपादयिषितत्वात्। "फलवत्सन्निधावफलं तदङ्गम्" इति नियमेनापि निष्प्रपञ्चब्रह्मात्मावतारायैव तेषां संसर्गत्वमास्थेयं नतु तद्विवक्षितम्। उक्तञ्च कैवल्यरत्ने—

विकारजातं सकलं वाचारम्भणमात्रतः।
अमृतं नैव तत्सत्यं कारणं तस्य केवलम्॥
मृत्तिकैवेति सत्यत्वं कारणं तस्य केवला।
श्रुत्या निर्धारितं तस्मात्सत्यं कारणमेव हि॥
अतः सृष्ट्यादिवाक्यानि समस्तानि मुनीश्वराः।
स्रष्टृमात्राऽभिधानेन द्वारेणैव तु वस्तुतः।
एकब्रह्मपराण्येव सदा नान्यपराणि वै॥ इति। (मान०उप०अ० ४)

अथ—ज्येष्ठप्रत्यक्षप्रमाणविरोधादागमस्यैव प्रत्यक्षप्रमाणसिद्धार्थाऽनुवादकतया स्वप्रामाण्यसिद्धौ प्रत्यक्षमुखनिरीक्षकत्वमेव युक्तं वेदान्तानाम्, अतस्तत्र तत्र वेदे तेषां तेषामद्वैतवचसाम्—"अद्वितीयोऽयमस्मिन्ग्रामे भद्रसेनः" इतिवत् गौणार्थत्वमेवाऽध्यवसितव्यम्, (अभेदे प्रत्यक्षविरोधात्)। नहि भद्रसेनभिन्नं ग्रामे किमपि नास्त्येवेति वक्तुर्विवक्षितम्, अथवा कोऽपि प्रेक्षावांस्तथाविवक्षाया अध्यवसाये साहसिक्यमुद्भावयेत्। किन्तु तत्सदृशशौर्यक्रौर्यादिगुणसम्पन्नोऽन्यो नास्तीत्येवंरूपे निषेधे तत्तात्पर्यम्। तस्मात् "कर्त्ता भोक्ता सुखी दुःखी मनुष्योऽहम्" इति प्रत्यक्षानुभवस्य ज्येष्ठस्य प्रबलत्वादागमज्ञानस्यैव तादृशस्य बाधः साम्प्रतमिति—ब्रूषे? तदा तदप्यसाम्प्रतमिति मन्यामहे, तथा सति मनुष्योऽहमिति प्रत्यक्षविरोधेन "अथाऽयमशरीरः" (बृह० ४।४।७) इत्यादिश्रुतिशतवचोभिर्देहान्यात्माऽसिद्धिप्रसङ्गाद्, वैदिकानामत्यन्ताऽनिष्टापाताच्च। इत्थम्—"इदं रजतम्" इति प्रत्ययवद् उक्तसामानाधिकरण्यप्रत्यक्षप्रत्ययस्य भ्रमत्वशङ्का-

  

कलङ्कितत्वेन भ्रमप्रमादविप्रलिप्सादिदोषलेशशून्यतया स्वतोऽपौरुषेयत्वादागमस्यैव प्रत्यक्षापेक्षया प्राबल्यमिति श्लिष्यते ।

यदपि भट्टसेनदृष्टान्तेनाभेदवचसां गौणत्वमुक्तं तदप्यपेशलम् । लक्ष्यमाणगुणयोगेन परत्र प्रवर्त्तमानस्य परशब्दस्य भेदप्रत्ययपुरःसरतयैवाऽभेदप्रत्यायकत्वात् । नत्वेवं प्रकृतेऽहमर्थो देहादिभ्यो विविक्ततयाऽनुभूयते येनान्यशब्दोऽन्यत्र देहादौ प्रयुज्यमानो गौणोऽभ्युपगम्येत, अन्यथा वादिविवादाऽनुपपत्तेः । इह च—गौणत्वव्यापकं विवेकविज्ञानं व्यावर्त्तमानं स्वव्याप्यं गौणत्वमपि व्यावर्त्तयतीत्यात्मैक्यवचसां गौणताऽभिधानं महासाहसमात्रं भेदवादिनाम् ।

अत्रेदं रहस्यम्—"एकमेवाऽद्वितीयम्" ( छान्दो० ६।२।१ ) "नतु तद्द्वितीयमस्ति" (बृ० ४।३।२३) इत्याद्यागमानां प्रपञ्चमिथ्यात्व एव पर्यवसानमिति सिद्धान्तानुयायिनः । तत्राऽद्वितीयशब्दस्य सजातीयवस्त्वन्तरनिषेधपरत्वेनाप्युपपत्तेर्वेदान्त्यभिमताद्वैतबुद्ध्यभावात् प्रपञ्चो न मिथ्येति भेदवादिनो मन्यन्ते । परं तदयुक्तमेव – अद्वितीयादिशब्दानां सजातीयवस्त्वन्तरनिषेधपरतया सङ्कोचे कारणाभावात् "एकम्" इति विशेषणेनैव सजातीयवस्तुनोऽपि निषेधात् । सजातीयवस्तुनिषेधमात्रपरतायाञ्चैकविज्ञानेन सर्वविज्ञानप्रतिज्ञानस्य, वाचारम्भणशब्दस्य, 'ऐतदात्म्यमिदꣳ सर्वम्" इत्याद्युपसंहारस्य च बाधप्रसङ्गात् । एवं

---

(१) अधिकन्तु मत्प्रणीतायाम्—" अद्वैततत्त्वमीमांसायां " द्रष्टव्यम् ।

(२) "अद्वितीयम्" इत्यत्र द्वितीयमात्रवाचिनो द्वितीयशब्दस्य द्वितीयविशेषे तन्निष्ठनिषेधकनञस्तद्विशेषनिषेधे वा सङ्कोचे प्रमाणाभावादित्यर्थः ।

"नेह नानास्ति किञ्चन", बृ०४।४।१९) इत्यादिश्रुतावपि लोकतः श्रुतितः वादिप्रसिद्धितोऽपि वा ब्रह्मणि प्रसक्तं नानात्वं न नो निषेधविषयो येन द्वैतनिषेधो न स्यात्, नच नानाशब्दो भावप्रत्ययान्तो येनेश्वर-नानात्वनिषेधे तात्पर्यमभ्युपगम्येत, किन्तु सजातीयविजातीय-स्वगतनानात्वनिषेधतात्पर्यक एव "अनन्तम्ब्रह्म" ( तै० २।१ ) इति श्रुतिसामर्थ्यात्। इत्थञ्च प्रपञ्चमिथ्यात्व एव शास्त्रतात्पर्य-मिति वृद्धानामाशयः ।

किञ्च—प्रत्यक्षस्य ज्येष्ठत्वमागमज्ञानम्प्रति पूर्वभावित्वेन वा ? उपजीव्यत्वेन वा ? । आद्ये नैव प्राबल्यम्, ज्येष्ठस्यापि रज-तभ्रमस्य पश्चाद्भाविना शुक्तिज्ञानेन बाधदर्शनात् । न द्वितीयः आगमज्ञानोत्पत्तौ प्रत्यक्षादिवृद्धव्यवहारे च सङ्गतिग्रहद्वारा शब्दोपलब्धिद्वारा च प्रत्यक्षादेर्व्यावहारिकप्रामाण्यस्योपजीव्य-त्वेऽपि तात्त्विकप्रामाण्यस्याऽनपेक्षितत्वात् । अनपेक्षितांशस्या-गमेन बाधसम्भवात् अन्यथा तवापि आगमज्ञानस्य ज्ञप्तौ परत-स्त्वप्रसङ्गेन स्वतःप्रामाण्यव्याघातप्रसङ्गात् । तथाचाध्यासभाष्ये भामतीकारैरुक्तम्—"प्रमितावनपेक्षत्वेऽप्युत्पत्तौ प्रत्यक्षापेक्षत्वात्तद्विरोधादनुत्प-त्तिलक्षणमप्रामाण्यमिति चेत् ? न, उत्पादकाप्रतिद्वन्द्वित्वाद्" इति । पराक्रा-

(१) अत्रायमभिसन्धिः—"प्रसक्तमेव सर्वत्र निषिध्यते नाऽप्रसक्तम्" इति नियमः । यत्र क्वचनाप्रसक्तस्यापि निषेधः यथा—"नान्तरिक्षे न दिवि" इत्यादौ तत्र गत्यन्तराभावात्तथाऽस्तु तादृशार्थवादस्य रुक्मोपधानस्तुतावेव तात्पर्यवत्त्वात् । प्रकृते तु तात्पर्यनिर्णायकषड्विधलिङ्गबलेन द्वैतनिषेधपरतैवेति सहृदैर्दृष्यम् । देशतः कालतो वस्तुतश्च परिच्छिन्ने वस्तुनि "अन्त" शब्दस्य व्युत्पन्नतया, तस्य नञ्समासे त्रिविधस्याप्यन्तस्य निषेधकत्वेन पृथग्व्युत्पत्त्य-नपेक्षत्वादपि प्रसक्तद्वैतनिषेधपरत्वं युक्तं नाऽप्रसक्तेश्वरनानात्वनिषेधपरत्व-मिति बोध्यम् ।

न्तश्चायमर्थोऽद्वैतसिद्धौ सामान्येन मिथ्यात्वश्रुत्युपपत्तिप्रकरणे–"अतो यद्बाध्यते तात्त्विकत्वं तन्नोपजीव्यम् यच्चोपजीव्यमर्थक्रियासामर्थ्यलक्षणं व्यावहारिकप्रामाण्यं तच्च न बाध्यत इति किं केन सङ्गतम्" इत्यादिना श्रीमधुसूदनसरस्वतीभिरपि । अपिच प्रक्रमादिना सिद्धस्यान्यपरवाक्यस्य स्वार्थे गौणार्थतालापनमेवाऽयुक्तम् । तदुक्तं[2]–"न विधौ परः शब्दार्थः" इति। विधायके शब्दे परो लक्ष्यः शब्दार्थो न भवतीति शबरस्वामिनोक्तमित्यर्थः । तत्तुल्यश्च वेदान्तेष्वपि अनधिगतार्थबोधकत्वेन तत्परत्वसाम्यादिति मन्तव्यम् । नचै[3]—"सोमेन यजेत" इति विधिवाक्ये सोमवता यागेनेति मत्वर्थलक्षणाङ्गीकारादयुक्तमिदम्, तत्तुल्यमित्येतदप्ययुक्तम्–"तत्त्वमसि" इति वाक्ये वेदान्तेष्वपि भागत्यागलक्षणाङ्गीकारादिति वाच्यम्, तात्पर्याज्ञानात् । विधिवाक्यं तत्तुल्यं वा तात्पर्यवद्वाक्यं यत्किञ्चिदनुग्रहार्थमन्यमर्थं नेतुमयुक्तमिति शबरस्वामिनोऽभिप्रायः ।

(१)एवमप्रामाण्यं निराकृत्योपचरितार्थत्वं निरस्यति—"अपिचे" ति ।
(२) स्वपक्षे आचार्यसंवादं दर्शयति—"तदुक्त" मिति । अत्रेदं रहस्यं बोध्यम्—" न विधा "विति शावरं वाक्यं हि—विधौ=तात्पर्यवति वाक्ये प्रतीयमानवाक्यार्थातिरिक्तोऽन्यः शेषी नास्तीत्येवम्परम्, प्रमाणान्तराविरोधार्थमन्यार्थं वा तात्पर्यविषयीभूतार्थान्यार्थपरत्वं तात्पर्यवतो वाक्यस्य नास्तीत्येवम्परमिति यावत् । अश्वप्रतिग्रहेष्ट्यधिकरणे, "वेदो वा प्रायदर्शनात्" (पू०मी० ३।३।२) इत्युक्ताऽसञ्जातविरोधाधिकरणे च अर्थवादमुख्यार्थत्वाय विधावपि लक्षणाया अङ्गीकारेण "नह्यर्थवादमुख्यार्थत्वाय विधौ न लक्षणा"इत्येवंपरं योजनं सहते इति सिद्धमद्वैतागमस्य लाक्षणिकत्वेऽपि मुख्यार्थत्वात्प्रत्यक्षबाधकत्वमिति । ब्रह्मगीताटीकायां विद्यारण्यैरपि स्फुटीकृतोऽयमर्थः ।
(३) विधावपि लक्षणा दृष्टेत्याशङ्क्य आचार्योक्तितात्पर्यं दर्शयितुमग्रिमं ग्रन्थमवतारयति–"नचे"ति ।

एवञ्च—[1]विशिष्टविधिपरे सोमवाक्ये सोमद्रव्यतादात्म्यविशिष्टयागविध्यभ्युपगमे तस्य विशिष्टस्य दध्यादिवल्लोकसिद्धत्वाभावेन विधिवाक्यादेव विना तात्पर्यं सिद्धिरेष्टव्या । नच तात्पर्यरहितादागमाद् यागसोमलताभेदग्राहिप्रत्यक्षविरुद्धार्थः सिद्ध्यतीति तत्र तदविरोधाय मत्वर्थलक्षणाश्रयणम् । अद्वैतश्रुतेस्तु तात्पर्यविषयादन्यत्र नयनमेव नास्तीति न कश्चिद्दोष इत्यलं बहुप्रसक्तानुप्रसक्त्या । प्रकृतमनुसरामः—

इत्थञ्चाज्ञातम्ब्रह्मात्मतत्त्वम् अहमाकारात्मकप्रत्ययस्योपप्लवत्वात् । नहि चिद्भास्यलक्षणत्वेनेदङ्कारास्पदानामपि देहेन्द्रियमनसां प्रतिभासतोऽहङ्कारास्पदत्वेनाऽविवेकात् शुद्धमात्मतत्त्वं भाति । एवमनुपप्लवत्वाभावे[2] चोपनिषदां प्रामाण्यमपि नासिद्धम्, अज्ञातार्थज्ञापकत्वरूपप्रमाणलक्षणस्य तत्राऽव्यभिचारात् । इत्थं—दुःखित्वाद्यभिमानदर्शनाच्छास्त्रीयेण ब्रह्मात्मैक्यज्ञानेन समूलस्य तस्य निवृत्तेः 'तरति शोकमात्मवित्"(छां० ७।१।३)इति, "तमेव विदित्वाऽतिमृत्युमेति ( श्वे० ३।८) इति च श्रुतेः अज्ञातज्ञापकत्वात्[3] सप्रयोजनत्वाद्वेदान्तशास्त्रमिदमारम्भणीयम् । प्रतिप्रयोगौ च भवतः "मुमुक्षुणा ब्रह्म विचार्यं तम्प्रति सन्दिग्धत्वात्, सप्रयोजनत्वाच्च[4], यन्नैवं तन्नैवं यथा स्वर्गादिसुखम् ।

(१) उक्तेऽर्थे परिमलकाराणां गूढाभिसन्धिमुद्घाटयति—"एवञ्चे" त्यादिग्रन्थेन । (२) आत्मतत्त्वस्य विपर्यासशून्यत्वाभावे ।

( ३ ) अज्ञातज्ञापकत्वात्=अज्ञानविषयतावद्विषयकत्वादित्यर्थः । तथाच—अहम्प्रत्ययस्य केवलात्मविषयत्वाभावादात्मनः सन्दिग्धत्वापूर्वत्वादिसम्भवात्तत्र प्रमाणं सच्छास्त्रं सार्थकमेवेति भावः ।

(४) सप्रयोजनेति—भ्रमनिवृत्तिरूपप्रयोजनसद्भावाच्च न शास्त्रारम्भणं पुरुषार्थरहितमित्याशयः ।

यत्तु—जगन्मिथ्यात्ववादिनये निर्विशेषब्रह्मणः खपुष्पानतिरिक्तत्वात्तस्यैव नास्तीति जिज्ञास्यत्वानुपपत्तिः, अस्ति चेत्तत् तदा ब्रह्मणोऽस्तित्वरूपविशेषवत्तया तवापसिद्धान्तापात इति सेयमुभयतःपाशारज्जुरित्याशयः पूर्वपक्षिणः तत्त्वगोष्ठीजनमनःसम्मोहनमन्त्रमात्रमनादेयम्, ब्रह्मणो निर्विशेषत्वादेव जिज्ञास्यत्वोपपत्तेः। विशेषाणां प्रमाणान्तरसिद्धत्वेन तद्विशिष्टस्यापि शास्त्रतात्पर्याऽविषयत्वात्। निर्विशेषस्यास्तितास्वीकारे सविशेषत्वापत्त्याऽपसिद्धान्त इति तु वादिनोऽनधिगततर्कमर्मतामावेदयति। तथाहि—"यो यो विशेषः स स सामान्यप्रकृतिको दृष्टो यथा घटशरावादयस्तत्तत्सामान्यभूतमृत्प्रकृतिकाः" इति व्याप्तिमूलकेनानुमानेनापि निर्विशेषमेव सामान्यं सिद्धयति। तदुक्तं व्यासपादैः—"सामान्यमात्रोपसंहारे च कृतोपक्षयमनुमानं न विशेषप्रतिपत्तौ समर्थम्" (योगभाष्ये पा० १। सू० २५) इति।

निर्विशेषं न सामान्यमित्युक्तिस्तु विशेषाणां सामान्यसत्तानतिरिक्ततामेव द्रढयन्तो सामान्यस्य निर्विशेषत्वमेव गमयति न तु स्वतन्त्रसत्ताम्। अपि च वैशेषिकाणां विशेषा निर्विशेषा एवेति निर्विशेषस्य खपुष्पतां ब्रुवाणस्तीर्थकरसम्प्रदायानभिज्ञ एव। अत एव "वाक्यपदीय"—

"सत्यं वस्तु तदाकारैरसत्यैरवधार्यते।
असत्योपाधिभिः शब्दैः सत्यमेवाभिधीयते" ॥

इत्यस्याः कारिकाया व्याख्याने—"यथाप्रत्ययं भेदावसायस्या बाध्यमानत्वादनुयाय्यभिन्नमेव रूपं परमार्थतः तदेव ब्रह्मरूपं सत्यम्" इत्युक्तं "हेलाराजेन"।

---

(१) विशिष्टाद्वैतिन उत्थापितं पूर्वपक्षं प्रतिक्षिपति—"यत्तु" इत्यादिना "विचारशास्त्रस्य" इत्यन्तेन।

निर्विशेषब्रह्माङ्गीकारादेव च—"यतो वाचो निवर्त्तन्त अप्राप्य मनसा सह" ( तै०२।४ ) इति श्रुतेरपि सङ्गतिर्भवितुमर्हति, अन्यथा सविशेषब्रह्मणः सगुणत्वेन वाग्विषयताया विशिष्टाद्वैतिभिरपि स्वीकारात् तदसङ्गतिः स्पष्टैव । नच गुणानामसङ्ख्यत्वेनेयत्ताया अनवधारणात् कार्त्स्न्येन वाग्विषयत्वाभाव इत्येतत्तात्पर्यकं तच्छ्रुतिवाक्यमिति भणनीयम्, श्रुतिस्था'ऽप्राप्य' पदस्वारस्यभङ्गापत्तेः ।

ननु—सविशेषवस्तुविषयत्वात्सर्वप्रमाणानां निर्विशेषे प्रमाणमेव न सम्भवितुमर्हतीति चेत् ? अत्रोच्यते—प्रमाणानां प्रमाणान्तरविषयत्वेऽनवस्था । प्रमाणान्तराऽविषयत्वे तेषामप्यप्रमाणत्वं स्यादिति सकलव्यवहारोच्छेदप्रसङ्गः । अथ प्रदीपप्रकाशन्यायेन प्रमाणानां स्वयम्प्रमाणत्वमिष्यते, यथा प्रदीपप्रकाशः प्रकाश्यं घटपटादिकं प्रकाशयन् स्वमपि प्रकाशयति, न प्रदीपप्रकाशान्तरमपेक्षते इत्याचक्षीथाः ? हन्त ! तर्हि सर्वप्रमाणोपजीव्यस्य परब्रह्मणोऽपि स्वप्रकाशत्वं कुतो नेष्यते ।'तमेव भान्तमनुभाति सर्वम्' (क० २।२।१५)इति श्रुतेः । नहि प्रमाणानि इदंविषयतया स्वविषयत्वेन ब्रह्म बोधयन्ति,तथा वाऽभीष्टं ब्रह्मविदाम्। उक्तञ्च विष्णुपुराणे—(६।८।५९)

"यस्मिन् ब्रह्मणि सर्वशक्तिनिलये मानानि नो मानिनां
निष्ठायै प्रभवन्ति हन्ति कलुषं श्रोत्रं स यातो हरिः" इति ।

अस्यायमाशयः–सर्वशक्तिनिलये=सर्वशक्त्यधिष्ठानभूते यस्मिन् ब्रह्मणि मानिनां=प्रामाणिकानां मानानि=प्रमाणानि निष्ठायै=परिच्छेदाय

(१) अप्रमाणं निर्विशेषमित्याशयो वादिनाम् ।
(२)उक्तञ्च व्यासपादैः—"सर्वोपेता च तद्दर्शनात्"(ब्र०सू० २।१।३०) इत्यत्र ब्रह्मणः सर्वशक्तिमत्त्वम । विवृतञ्च तथैव पूज्यपादैः—"सर्वशक्तियुक्ता च परा देवतेत्यभ्युपगन्तव्यम" इत्यादिना ।

नो=न प्रभवन्ति=समर्थानि भवन्ति स्वप्रकाशत्वात्, किन्तु यतः प्रमाणान्यस्तित्वं प्राप्तानि, ततः प्रमाणप्रमेयादिसर्वव्यवहारोपजीव्यं किञ्चित्स्यादित्येवं दूरमेवाऽऽस्थित्वा तत्स्वमूलकारणत्वेन सूचयन्ति। स हरिः=विष्णुर्व्यापनशीलो परो देवः श्रोत्रं=कर्णं कर्णविषयत्वमिति यावत् यातः=प्राप्तः कलुषं=अज्ञानादिसकलं पाप्मानं हन्ति तस्मात्स एव श्रोतव्य इत्यर्थः। न ह्येतावताऽप्रमाणत्वं तस्य, नापि च सविशेषत्वम्, यथा रूपवद्वस्तुप्रकाशने समर्थः प्रदीपो रूपवन्तमप्यन्धकारं स्वयं दूरत एव सूचयति तद्वद्ब्रह्मण्यपि प्रमाणव्यवहारः। उक्तञ्च श्रुतौ—"तमसः परस्तात्" ( श्वे० ३।८ ) इति, "त्रिपादूर्ध्व उदैत्पुरुष."(सा०सं०आर०प०अ० ६। खं० ४। मं० ४) इति च। यथा वा खद्योतस्थं तेज आदित्यं प्रकाशयितुमसमर्थं तथा सर्वप्रकाशक आदित्योऽपि परं ब्रह्म प्रकाशयितुमसमर्थ इति। श्रुतिरप्यमुमर्थं वदति "ज्योतिषां ज्योतिः" ( बृ०४।४।१६) इति अतएवोक्त सर्वज्ञात्ममुनिभिः—

मानेन मेयावगतिश्च युक्ता
धर्मस्य जाड्याद्विधिनिष्ठकाण्डे।
मेयेन मानावगतिस्तु युक्ता
वेदान्तवाक्येष्वजडं हि मेयम् ॥ इति।(सं०शा०१।४८७)

सूतसंहितायां यज्ञवैभवखण्डस्य तृतीये चतुर्थे चाध्याये—

---

(१) श्रुतिप्रमाणागम्यत्वमित्याशयः। अत्र विशिष्टाद्वैतिनोऽपि अभेदवादमन्यथयितुं मुग्धा इति तद्व्याख्यातोऽवसीयते। (२) "यथा" इत्यारभ्य "व्यवहार" इत्यन्तो ग्रन्थः—अद्वैतामोदस्य निर्विशेषवादस्थः। यथा प्रकाशस्वरूपः प्रदीपस्तमसः परोऽपि तमःप्रकाशकोऽपि न कञ्चिद् विशेषं भजते, एवम्ब्रह्म सत्तास्फुरतिं ददपि निर्विशेषमेव तिष्ठतीत्यस्मिन् विवक्षितेऽर्थे दृष्टान्तः। अन्धकारस्य दृष्टान्तीकरणं च श्रौततमःपरस्तोक्तिमूलकम्।

यतो वाचो निवर्त्तन्ते निमित्तानामभावतः ।
निर्विशेषे शिवे शब्दः कथं देवाः प्रवर्त्तते ॥
विशेषं कञ्चिदाश्रित्य खलु शब्दः प्रवर्त्तते ।
यस्मादेतन्मनः सूक्ष्मं व्यावृत्तं सर्वगोचरम् ॥

इत्यादिना ( सू० सं० यज्ञ० अ० ३ । ६४, ६५ )

अद्वैतमितिचोक्तिश्च प्रकाशाव्यभिचारतः ।
प्रकाश एव सततं तस्मान्मौनं हि युज्यते ॥ ( अ० ४ । ३२ )

इत्यादिना च महत्यारभट्या ब्रह्मणाऽप्यनिवार्या ब्रह्मणो निर्विशेषताऽवधारिताऽपि न विस्मरणीया । वासिष्ठमहारामायणेऽपि—

"शान्तं समं समुदयास्तमयैर्विहीन-
साकारमुक्तमजमम्बरमच्छमेकम् ।
सर्वं सदा सदसदेकतयोदितात्म-
निर्वाणमाद्यमिदमुत्तमबोधरूपम्" ॥

( यो० वा० निर्वा० उत्तरार्धे० अ० ५३ श्लो० २१)

इत्यादिना बहुषु ब्रह्मणो निर्विशेषत्वं न विचारशास्त्रारम्भप्रतिकूलमित्यपि निर्मत्सराणां परं श्रद्धेयं नोपेक्षणीयम् ।

तस्मान्मायवादिनामप्यस्माकं प्रमाणप्रमेयव्यवहारे निर्विशेषस्य ब्रह्मणो जिज्ञास्यत्वे न काप्यनुपपत्तिः । नापि च पाषाणकल्पता निर्विशेषसामान्यस्यापि भवन्नये पाषाणकल्पत्वाभावात्। ब्रह्मणस्तु नित्यनिरतिशयानन्दघनस्य स्वमात्रयाऽपि सर्वानानन्दयतः कथं (मुक्तौ) पाषाणकल्पतां ब्रुवाणो ब्रह्मद्विण्नजिह्रेति । एवमवाङ्मनसगोचरानवधिकातिशयानन्दघनब्रह्मजिज्ञासार्थं शास्त्रमिदमारम्भणीयामिति न व्यर्थत्वं विचारशास्त्रस्य ।

यच्च—सविलासाज्ञाननिवृत्तिपरानन्दावाप्तिरूपं मोक्षाख्यं परं प्रयोजनमुक्तम्, तत्राज्ञाननिवृत्त्या प्रपञ्चोपमर्दकामोऽधिकारीति रिक्तं वचः, दुःखमात्रजिहासयेष्टं समीहमानानां प्रवृत्ति-

दर्शनात्, सत्संसारनिवृत्तेः प्रेक्षावद्भिरकाम्यमानत्वाद्, दुःखत्रयनिवृत्तिप्रवृत्तिरेव सकलप्राणिवर्गस्याऽभीष्टा दृष्टा च । सापि लौकिकोपायसाध्यत्वादीषत्करेति किमर्थमनेकजन्माभ्यासपरम्परासाधनीयतत्त्वज्ञानप्रयासाश्रयणमित्येवंरूपेण सविलासाज्ञाननिवृत्त्यात्मकमोक्षांशस्यासम्भवपराहतत्वात् तत्कामनापरिप्लुतो नैव कोऽप्यधिकारीति व्यर्थं शास्त्रारम्भणम् इत्युक्तम्, तत्रोच्यते—"आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्" ( बृ० ४।५।६ ) इत्युपक्रम्य "एतावदरे ! खल्वमृतत्वम्' ( बृ०४।५।१५ ) इत्युपसंहारदर्शनात्परमपुरुषार्थभूतस्यामृतत्वस्य प्राप्त्यै आत्मदर्शनमेव परात्परमुपायमुद्घोषयति श्रुतिर्भगवती । सर्वस्य चास्यात्मशेषतयैव प्रतीयमानत्वात्, आत्मनश्च परानन्दरूपत्वात् "आत्मनस्तु कामाय सर्वमिदं प्रियं भवति" ( बृ० ४।५।६ ) इत्यादिश्रुतेरात्मन एव सुखस्वरूपत्वं, सुखमेव चाभीष्टं नः सर्वेषां प्राणिनाम् । "रसो वै सः" ( तै० २।७ ) 'आनन्दो ब्रह्मेति व्यजानात् आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" ( तै० ३।६ ) "यो वै भूमा तत्सुखम्, नाल्पे सुखमस्ति" ( छां० ७।२३।१ ) इति भूमानं विनाऽन्यस्य अल्पत्वेन दुःखरूपत्वात्, "तरति शोकमात्मवित् सोऽहं भगवः शोचामि तं मां भगवान् शोकस्य पारं तारयतु" ( छां० ७।१।३ ) "देवं मत्वा धीरो हर्षशोकौ जहाति" ( कठ०१।२।१२ ) "ज्ञात्वा देवं सर्वपाशापहानिः" (श्वेता०१।११) "स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति" ( मुं० ३।८।९ ) 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्, तथर्षीणां तथा मनुष्याणाम्", बृ०१।४।१०) "यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति" ( श्वे० ६।२० ) "यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः । स तु तत्पदमाप्नोति" (कठ० १।३।८) "किं प्रजया करिष्यामो येषां

(१) दुःखत्रयनिवृत्त्यर्थं प्रवृत्तिरित्यर्थः ।

नोऽयमात्मा" (बृ० ४।४।२२) इत्याद्यनेकश्रुतिशतप्रतिपादितात्मज्ञानस्यैव सकलशोकसन्तरणहेतुत्वात्—

"ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्" ॥ (भ०गी०५ १६)
"सर्वं कर्माखिलं पार्थ ! ज्ञाने परिसमाप्यते"॥(भ०गी०४।३३)
प्रत्यग्रूपे शिवे साक्षात्प्रमाणं भवति द्विजाः ।
वेदान्तानां महावाक्यं प्रत्यग्ब्रह्मैकतार्थगम् ॥
भूमानन्दशिवप्राप्तिसाधनं परिकीर्त्तितम् ।
तदेव भ्रान्तिसिद्धस्य संसारस्य निवर्त्तकम् ॥
आत्मा स्वभावतो बद्धो यदि स्याद्वेदवित्तमाः ।
नैव मुच्येत संसाराज्जन्मान्तरशतैरपि ॥
( सू० सं० यज्ञवै० अ० १० श्लो० ३७, ३८, ३९)

इति स्मृतिभ्यश्च सविलासाज्ञाननिवृत्तिमन्तरा त्रिविधदुःखनिवृत्तेरदर्शनात्, लौकिकोपायसाध्यतयाऽपि तेषां निवृत्तानां पुनरावृत्तिदर्शनादेकान्तात्यन्ताऽनिवृत्तेः सकलदुःखनिवृत्तिकाम एव सविलासाज्ञाननिवृत्तिकामोऽधिकारी भवितुमर्हतीति युज्यते शास्त्रारम्भणम् ।

यदपि—दुःखत्रयनिवृत्तेरलौकिकोपायसाध्यता, दुःखत्रयश्च ब्रह्मात्माज्ञानसमुत्थितत्वात्तन्निवृत्तिनिवर्त्यम,परं परानन्दावाप्तिरूपप्रयोजनांशस्याऽघटितत्वात्पुनरपि वेदान्तमीमांसाया नाधिकारसम्भावना, परानन्दस्य ब्रह्मणोऽज्ञातत्वे तद्विषयिण्या इच्छाया एवाभावात्,ज्ञातत्वे च तत्प्रयोजनाऽसिद्धेः । ऐहिकाऽऽमुष्मिकसम्भोगेच्छापरिप्लुतत्वान्मनुष्यमात्रस्य वैराग्यविवेकादि साधनसम्पत्त्यनुपपत्तेः—इत्युक्तम । तत्र ब्रूमः—यद्यपि निर्दुःखानन्दघनं ब्रह्म पूर्वं न ज्ञातमिति तदभीप्सा न कस्यापि सम्भवेत्

तथापि—सर्वैः प्राणिभिः प्रत्यात्मवेदनीयं सुखमात्रन्त्वनुभूयते, तदिच्छापि च प्रत्यात्मवेदनीयैवेत्यविवादम् । नच—एतावता विषयसुखमात्रमेवेष्यते जनैरिति वाच्यम् "सुखं मे निरतिशयं भूयात् दुःखलेशोऽपि मा भूत्" इत्याकारेच्छाया एव सकलाऽनुभवासिद्धत्वात् । निरतिशयं सुखञ्च ब्रह्मैवेति—"यो वै भूमा तत्सुखं नाल्पे सुखमस्ति" ( छां० ७।२३।१ ) इति, "तदेतत्प्रेयः पुत्रात् प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा,स योऽन्यमात्मनः सर्वं प्रियं ब्रूयात् प्रियं रोत्स्यति (बृह० १।४।८) इति च श्रुतेः । प्रयोगश्च भवति-"आत्मा सुखस्वरूपः परमप्रेमास्पदत्वात् यन्नैवं तन्नैवं यथा घटादि, नायं तथा, तस्मान्न तथा, किन्तु [1]सुखस्वरूप एवेति परानन्दरूप

---

(१) इदमत्राकूतकम्—नहि सुखं नाम स्वसत्तायां चैतन्यमात्रं व्यभिचरति, येन द्रव्यमात्रस्य चेतनस्य गुणः स्यात् । ननु—चेतनया प्रकाश्यमानत्वात्तदव्यभिचारो न चेतनात्मकत्वादिति चेन्न समानाश्रययोरसमानकालयोः प्रकाश्यप्रकाशकभावाऽनुपपत्तेः। नहि सुखचैतन्ययोराश्रयभेदोऽस्ति अणुपरिमाणमनःसंयोगविशिष्टात्मप्रदेशमात्रत्वादुभयोः ।

तथाचैकेन मनःसंयोगेन जातं सुखमुत्पत्तित एव प्रकाशमानं स्वात्मचैतन्यव्याप्तं सत्प्रकाशते स्वयमेव वा प्रकाशते इति विवेके कारणाभावान्न सुखचैतन्यप्रकाश्यत्वनिश्चयः । तथा–सुखचैतन्ययोर्भेदे सति कार्ययोस्तयोरेकस्मिन्नात्मनि यौगपद्यमपि न सम्भाव्यते मनःसंयोगरूपस्याऽसमवायिकारणस्य क्रममन्तरेण तत्र कार्यक्रमायोगात् । अन्यथा ज्ञानेच्छाप्रयत्नादीनामपि यौगपद्यापत्तेः । एवं सति भिन्नकालयोरेतयोर्विनष्टाऽविनष्टयोर्न साक्षात्प्रकाश्यप्रकाशकभावः । एकाश्रयत्वमात्रेण त्वात्मगतधर्मादेः परिमाणस्य ज्ञानादेश्च प्रत्यक्षता युगपत्स्यात्, अतो न चैतन्यभास्यं सुखमिति चैतन्यस्वरूपमेव तत्परिशेषात्सिद्धम् । चैतन्यञ्चात्मैव न तद्गुणश्चेतनभिन्नस्य जडत्वादनात्मत्वादिति रामतीर्थस्वामिनः । (सं०शा०अ० १ । श्लो० २५ टी०)

एवात्मा निश्चीयते। तद्यद्यप्यज्ञानदशायामहमेव स इति नास्ति प्रत्ययः सुखमात्रानुभवस्तु न वारयितुं शक्यते, अतः सुखेऽभिलाषदर्शनात् तथाविधस्याऽधिकारिणो नाऽसम्भवः।

नचैतादृशसुखकामो न कोऽपि दृश्यते ऐहिकाऽऽमुष्मिकविषयसुखस्यैव काम्यमानत्वादिति शङ्क्यम्। तादृशस्य पुंसो दौर्लभ्ये सत्यप्यत्यन्ताभावाऽभावात् श्रौतेषु नाचिकेतोपाख्यानादिषु तथादर्शनात्। तथाहि—"यथा पुरस्ताद् भविता प्रतीतः" (कठ० १।१।११) "तवैव नाम्ना भविताऽयमग्निः सृङ्काञ्चेमामनेकरूपां गृहाण" (कठ० १।१।१६) इत्यादिना यमाल्लब्धवरद्वयो नाचिकेताः संसाररूपत्वात्तस्य वरद्वयस्यानित्यरूपतां निश्चित्य ततो विरक्तो मुमुक्षुः सन्—'येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके' (कठ० १।१।२०) इत्यादिनात्मज्ञानरूपमेव तृतीयं वरं ययाचे। यमश्च नचिकेतसोऽधिकारं परीक्षितुं "देवैरत्रापि विचिकित्सतम्" (कठ० १।१।२१) इति "शतायुषः पुत्रपौत्रान् वृणीष्व बहून् पशून् हस्तिहिरण्यमश्वान्" (कठ० १।१।२३) "इमा रामाः सरथाः सतूर्या नहीदृशा लम्भनीया मनुष्यैः" (कठ० १।१।२५) इति चैवंरूपेण ऐहिकामुष्मिकभोगप्रदानभारेण बहु प्रलोभयामास। तदेतदनास्थमिव भोगानामस्थिरत्वनश्वरत्वेन्द्रियजर्जरत्वादिविविधदोषजातं पर्यालोचयन्नचिकेता यमम्प्रति—'श्वो भावा" "न वित्तेन तर्पणीयः" "अजीर्यताममृतानाम्" (कठ० १।१।२६-२८) इत्यादिप्रकारेण सर्वमैहिकमामुष्मिकञ्च सुखं न्यक्कारयामास, "नान्यं तस्मान्नचिकेता वृणीते" (कठ० १।१।२९) इत्यन्तेनात्मज्ञानाभ्यर्थनमेव च द्रढयामास। तद्यदि ऐहिकं वा पारलौकिकं वा विषयसुखमात्र-

(१) शब्दवतीं रत्नमयीमिमां मालामनेकरूपाम्। वस्तुतस्तु सृङ्कामकुत्सितां कर्ममयीं गतिं स्वर्गादिरूपाम्।

मेवाभीष्टमभाविष्यत् तदेव चावैकल्येन श्रुतितात्पर्यविषयतयोपादेयतामवाप्स्यत्, तदा नचिकेताः कदापि न तत् प्रत्यषेधयिष्यत्, नवाऽऽत्मज्ञानपरतयैव निजाऽऽग्रहमदर्शयिष्यत् । किन्त्वैहिकामुष्मिकसकलभोगदुरवस्थानुसन्धानैकचिन्तनपरचेता नचिकेता किमपि स्थिरमनश्वरमेकरसमजर्जरं सुखं कामयमानस्तत्साधनमात्मज्ञानमेवान्ततो वरयाम्बभूव, तस्माद् दृष्टानुश्राविकविषयवितृष्णस्याधिकारिणोऽसम्भवाक्तिराकाशमुष्टिहननकल्पैवेति जानीमहे । एवं विवेकवैराग्यशमदमादिसाधनोपपत्तिरपि व्याख्याता वेदितव्याऽनात्मसुखस्य क्षयातिशयादिदोषग्रस्तत्वात् । एतादृशालौकिकानन्दस्वरूपमोक्षस्याधिकारिदौर्लभ्यन्तु भूषणमेव न दूषणम् । अत एव—

"श्रवणायापि बहुभिर्यो न लभ्यो शृण्वन्तोऽपि बहवो यं न विद्युः ।
आश्चर्यो वक्ता कुशलोऽस्य लब्धाऽऽश्चर्यो ज्ञाता कुशलानुशिष्टः" ॥

(कठ० २ । १ । ७)

आश्चर्यवत्पश्यति कश्चिदेन-
　　माश्चर्यवद्वदति तथैव चान्यः ।
आश्चर्यवच्चैनमन्यः शृणोति
　　श्रुत्वाप्येनं वेद न चैव कश्चित् ॥

(भ० गी० २ । २९)

इति श्रुतिस्मृती ज्ञातारं श्रोतारञ्च प्रविरलमेवाचक्षाते । खण्डनकारेणाप्यधिकारिवैरल्यं भूषणाऽभिप्रायेणैवाभ्यधायि—

ईश्वराऽनुग्रहादेषा पुंसामद्वैतवासना ।
महाभयकृतत्राणा द्वित्राणां यदि जायते ॥ इति ॥

सन्त्येवंविधान्यनेकान्युपाख्यानानीतिहासपुराणादिषु प्रसिद्धानि श्रौतार्थोपबृंहितानि यान्यत्र ग्रन्थगौरवभयान्नोदाह्रियन्ते ।

अशेषं जगदुद्दिधीर्षया समये समये कृतावतारेण कृपालुतरेण भगवता विष्णुनाप्ययमर्थो नाटितः, उपनिबद्धश्च महारामायणे वाल्मीकिनाऽऽदिमहाकविना । तस्माद्विवेकवैराग्यादिसाधनसम्पत्त्यनन्तरं सुस्थोऽधिकारी वेदान्तमीमांसाशास्त्रस्येत्यधिकारार्थभावेऽधिकाराभावे वा तदनारम्भणोक्तिर्दुर्वादिभटानां साहसमात्रम् ।

श्रुतयश्च भवन्त्यस्यार्थस्य प्रतिपादिकाः । तथाहि—"तद्यथेह कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयते" (छां० ८।१।६) इति श्रुत्या "यत्कृतकं तदनित्यम्" इति न्यायवत्या, 'न जायते म्रियते वा विपश्चित्" (कठ० १।२।१८) "यो वै भूमा तदमृतम्" (छां० ७।२४।१) "अतोऽन्यदार्त्तम्" (बृ० ३।४।२) इत्यादिश्रुतिभिश्च भूमात्मा नित्यस्ततोऽन्यदनित्यमिति "विवेकस्य" लाभः । "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन" (मुण्ड० १।२।१२) "आत्मनस्तु कामाय सर्वं प्रियं भवति" (बृ० २।४।५) इत्यादिश्रुत्या च "वैराग्यस्य" लाभः । "शान्तो दान्त उपरतस्तितिक्षुः समाहितः श्रद्धावित्तो भूत्वाऽऽत्मन्येवात्मानं पश्येत्" (बृ० ४।४।२३) इति "शमादिषट्कसम्पत्ते"र्लाभः । "न स पुनरावर्त्तते" (कालाग्निरुद्रोपनिषत्) इति श्रुत्या स्वयञ्ज्योतिरानन्दात्मकमोक्षस्य नित्यतां बोधयन्त्या "मुमुक्षायाः" लाभः । एवं विवेकादिविशेषणसम्पन्नोऽधिकारीति सर्वं चतुरस्रम् ।

नन्वेवमधिकारे सम्पन्नेऽपि ब्रह्मात्मनोरैक्यं शास्त्रप्रमेयं तु भवितुं नार्हति, चैतन्यसाम्येऽपि तयोः सर्वज्ञत्वाल्पज्ञत्वादिविरुद्धधर्माक्रान्तत्वात् । श्रुतिश्च भवति तयोर्भेदग्राहिणी—"द्वा सुपर्णा सयुजा सखाया" (मुं० ३।१।१ श्वे० ४।६) इति चेद् ? अत्र ब्रूमः—कार्यकारणात्मकोपाधिभेदप्रयुक्तौपाधिकभेदवत्त्वेऽपि तयोः पार-

मार्थिकधर्माभावाद् ब्रह्मात्मनोर्विरुद्धधर्माक्रान्तत्वमेवाऽसिद्धम् । "जीवो ब्रह्माऽभिन्नः सच्चिदानन्दरूपत्वात् ब्रह्मवदिति" सत्प्रतिपक्षितत्वाच्च । नचोक्ताऽनुमाने हेत्वसिद्धिरिति वाच्यम्, पूर्वजन्मकृतेन पुण्येन पापेन मयेदं सुखं दुःखं वेदानीमनुभूयते, तथेदानीं क्रियमाणेन कर्मणा मम जन्मान्तरे किम्भविष्यति किन्न भविष्यतीति कालत्रयानुसन्धातृत्वेन कालत्रयाबाध्यत्वरूपं सत्यत्वम्, ईश्वरादिसकलप्रपञ्चीयसद्भावाऽसद्भावसाक्षितया चिद्रूपत्वञ्च तावज्जीवस्य भेदाऽभेदवादिनोर्द्वयोर्निर्विवादमेव । आनन्दरूपत्वमपि च धनपुत्रपिण्डेन्द्रियप्राणापेक्षया स्वस्य निरतिशयप्रेमास्पदत्वेन केन वारयितुं शक्येत, आ च ब्रह्म आ च स्तम्बं सर्वैरपि स्वस्मिन् प्राणिभिरनुभूयमानत्वादित्यवोचामापि । सर्वज्ञात्ममुनिभिः सङ्क्षेपशारीरके—

प्रेमाऽनुपाधिरसुखात्मनि नोपलब्धः
सं प्रत्यगात्मनि कृमेरपि नित्यसिद्धः ।
प्रेयःश्रुतेरपि ततः सुखताऽनुमानं
नैयायिकोऽपि न दृगात्मनि निह्नुवीत ॥ ( १।२५ )

---

(१) "दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्" ( न्या० ३।२।१ ) "पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसम्प्रतिपत्तेः" (न्या० ३।१।१९ ) इत्यादीनि न्यायतृतीयाध्यायस्थानि सूत्राण्यपि देहाद्यतिरिक्तचेतनात्मास्तित्वसाधकानि द्रष्टव्यानि । तत्र **हर्षः**=अभिप्रेतविषयकप्रार्थनासिद्धौ सुखानुभवः । **भयम्**=अनिष्टविषयसाधनोपनिपाते तज्जिहासोर्हानाशक्यता । **शोकः**=इष्टविषयावियोगे सति तत्प्राप्त्यशक्यप्रार्थना । **सम्प्रतिपत्तिः**=तदनुभवः ।

योगशास्त्रेऽपि—"**तासामनादित्वञ्चाशिषो नित्यत्वात्**" (यो० ४।१० ) इति वासनानामनादित्वं पुरुषाऽनादित्वं विना न सिद्ध्यतीति सूक्ष्मभीक्षणीयम् ।

इत्युक्तम् । अत्र चायं प्रयोगः—"आत्मा सुखस्वरूपः परमप्रेमास्पदत्वाद्यन्नैवं तन्नैवं यथा घटादिकम् नायं तथा, तस्मान्न तथा किन्तु सुखस्वरूप एवेति । श्रुतयश्च भवन्ति—"अविनाशी वा अरेऽयमात्मा" ( बृ० ४।५।१४ ) "अजो नित्यः" ( कठ० १।२।१८ ) "आत्मनैवाऽयं ज्योतिषाऽऽस्ते" (बृ० ४।३।६) "अत्रायं पुरुषः स्वयञ्ज्योतिः" (बृ० ४।३।१४) "हृद्यन्तर्ज्योतिः पुरुषः" (बृ० ४ ३।७) "तदेतत्प्रेयः पुत्रात्" (बृ० १।४।८) इत्याद्याः शतशो जीवस्य सच्चिदानन्दस्वरूपप्रतिपादनपराः, तस्मात्तयोरौपाधिकस्वरूपयोः क्षीरनीरवत्परस्परविभिन्नयोरपि सतोः अनुपाधिशुद्धलक्ष्यात्मना ऐक्यं शास्त्रप्रमेयं नासङ्गतम् । तथाच "उपदेशसाहस्र्यां" नान्यदन्यत्प्रकरणे आचार्यपादाः

सत्तामात्रे प्रकाशस्य कर्त्ताऽदित्यादिरिष्यते ।
घटादिव्यक्तितो यद्वत्तद्बोधात्मनीष्यताम् ॥४५॥
विलात्सर्पस्य निर्याणे सूर्यो यद्वत्प्रकाशकः ।
प्रयत्नेन विना तद्वज्ज्ञाताऽऽत्मा बोधरूपतः ॥४६॥

इत्यादिनाऽऽत्मनि कर्तृत्वज्ञातृत्वादिकमौपाधिकमभिधाय

स्वरूपेण स्वयं नात्मा ज्ञेयोऽज्ञेयोऽथवा ततः ॥४८॥
विदिताऽविदिताभ्यां तदन्यदेवेति शासनात् ॥४९॥

इत्येवमादिना स्वतस्तस्य निर्विशेषतामेवाकलयाम्बभूवुः । नच वाच्यं कथं शुद्धचैतन्यस्य विचारविषयत्वं यावता प्रागपि विचारात् तत्स्वप्रकाशं स्वयमेवाऽवभासते, भासमानस्वभावस्य कुतोऽभानं सम्भवेदिति ? स्वरूपेणावभासमानत्वेऽपि तस्य परिपूर्णसच्चिदानन्दप्रत्यगभिन्नरूपतयाऽभासमानत्वात् । दृश्यते च स्वरूपतो भानेऽपि विशेषतोऽभातिः पुत्राध्ययनशब्दवत् । तदुक्तं "तत्त्वविवेके"—

अध्येतृवर्गमध्यस्थपुत्राध्ययनशब्दवत् ।
भानेऽप्यभानं भानस्य प्रतिबन्धेन युज्यते ॥१२॥
प्रतिबन्धोऽस्तिभातीतिव्यवहारार्हवस्तुनि ।
तं निरस्य विरुद्धस्य तस्योत्पादनमुच्यते ॥१३॥
तस्य हेतुः समानाभिहारः पुत्रध्वनिश्रुतौ ।
इहानादिरविद्यैव व्यामोहैकनिवन्धनम् ॥१४॥ इति ॥

एतच्चानुपदमेवाध्यासवादे स्फुटीभविष्यति ।

यच्च "द्वा सुपर्णे"त्यादिश्रुत्या जीवेशयोर्वस्तुतो भेद इति भेदवादिनां दुराग्रहः तत् तत्प्रकरणानुगतश्रुतितात्पर्याज्ञानमूलक एव। लोकप्रसिद्धे स्वर्गापवर्गशून्ये "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" (बृ० ४।४।१९, कठ० २।१।१०) "अथोदरमन्तरं कुरुतेऽथ तस्य भयं भवति" (तै० २।७) "न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येत्" (बृ० ४।३।२३) "यत्र त्वस्य सर्वमात्मैवाऽभूत्तत् केन कं पश्येत्" (बृ० ४।५।१५) इत्याद्यनेकश्रुत्युक्तानर्थफलके शुक्तिरजतादिवदनुभवमात्रसिद्धे जीवेशभेदे निरस्तसमस्तदोषशङ्कापङ्ककलङ्कायाः स्वतःप्रमाणभूतायाः श्रुतेस्तात्पर्यस्य कथमपि सम्भावयितुमशक्यत्वात् । "येन वाक्येन यत्र प्रतीत्युत्पादनेन मानाऽभावप्रयुक्ताऽसत्त्वशङ्का निवर्त्तते तस्य तत्र तात्पर्यम् अन्यथा तस्य तदर्थत्वमेव न स्यात् यत्परः शब्दः स शब्दार्थ" इति न्यायात् नास्याः श्रुतेरपूर्वभेदरूपेऽर्थे तात्पर्यम् ।

---

(१) स्वच्छन्दागमिनोऽपि—

निजबोधजठरहुतभुजि भावाः सर्वे समर्पिता हठतः ।
विजहति भेदविभागं निजशक्त्या तं समिन्धानाः ॥

( श्रीतन्त्रालोके आ० ३ । का० २६२ )

इत्येवमादिप्रतिपादनेन भेदमात्रमपह्नुते ।

किञ्च—अस्याः श्रुतेः पूर्वोदाहृतकाल्पनिकभेदप्रतिपादकवराहरुद्रहृदयनृसिंहतापिन्यादिश्रुत्यन्तरानुसारित्वेन पारमार्थिकभेदबोधकत्वासम्भवादौपाधिकभेदप्रतिपादकत्वमेवाङ्गीकर्त्तव्यम् । अन्यथा तासां श्रुतीना निर्विषयत्वमेव स्यात् । एषैव च गतिः "नेतरोऽनुपपत्तेः" (ब्र० सू० १।१।१६) "भेदव्यपदेशाच्चान्यः" ( ब्र० सू० १ । १ । २१ ) इत्यादिब्रह्मसूत्रेष्वनुसन्धेया । स्मृतिरपि—

मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव (भ०गी०७।७)

इत्याद्या भेदभावमपनुदति । यदि च—"तत्त्वमसि" (छां० ६।८।७) "अहम्ब्रह्मास्मि" (बृ० १।४।१० ) इत्यादिषु अनन्यार्थबोधकमध्यमोत्तमपुरुषपदप्रयोगघटितजीवेशाऽभेदबोधकप्रसिद्धभेदानुवादकत्वं नास्थीयेत तदाऽपूर्वत्वाभावात्प्रामाण्यमेव न घटेत ।

अपि च—अभ्युपगमरीत्याऽस्य मन्त्रस्य जीवेशभेदपरत्वमास्थाय भेदे तात्पर्याभाव इत्यब्रूम, वस्तुतस्तु—कर्मफलभोक्त्र्या बुद्धेः सकाशात्पुरुषं विविच्य " अनश्नन्नन्यो अभिचाकशीति " ( मुं० ३।१।१ श्वे० ४ । ६ ) इत्यनेन पुरुषस्य सुखदुःखभोक्तृत्वलक्षणसंसाराभावमेवाऽबूबुधदयं मन्त्रः । "तयोरन्यः पिप्पलं स्वाद्वत्ति इति सत्त्वमनश्नन्नन्यो अभिपश्यतीति ज्ञस्तावेतौ सत्त्वक्षेत्रज्ञौ" इति पैङ्गिरहस्यब्राह्मणेनैव तथा व्याख्यातत्वात् । प्रपञ्चितश्चायमर्थो मया स्वप्रणीते "अनादितत्त्वे" । पूज्यपादैश्च गुहाप्रविष्टाधिकरणे (ब्र० सू० १।२।११) इत्यत्र ।

इदमत्राकूतकम्—अविद्यादिसकलक्लेशातीतं ब्रह्म, जीवास्तु सर्वक्लेशोपेता नाना परिच्छिन्नाश्च । प्रतिक्षेत्रं क्षेत्रज्ञभेदाभावे वैभवे च तेषामेकस्मिन् सुखिनि सर्वे सुखिनः स्युर्दुःखिनि

च दुःखिनः सम्भवेयुः । तथाचाह परमर्षिः—"व्यवस्थातो नाना" (वै० ३।२।२०) इति। साङ्ख्या अपि जगदुः "पुरुषबहुत्वं व्यवस्थातः" (सां० ६। ४५) इति। प्रयोगोऽपि भवति पुरुषबहुत्व-साधकः "विवादपदानि शरीराणि स्वसङ्ख्यासङ्ख्येयात्मवन्ति शरीरत्वात् सम्प्रतिपन्नशरीरवद्" इति। यदि चाचक्षीथाः सुखदुःखाद्याः सर्वेऽन्तःकरणधर्माः, प्रत्यन्तःकरणं तेषां भेदः; नह्येकस्मिन् सुखिनि सर्वे सुखिनो दुःखिनि च दुःखिनः, साक्षिचैतन्यन्त्वेकमेवाद्वितीयं सकलप्रियाऽप्रियाऽसंस्पर्शि, तेन सह ब्रह्माभेदे सिद्धे न किञ्चिद्बाधकमुत्पश्याम इति; तदप्यपेशलम् सर्वग्राह्यग्राहिणः कर्त्तुर्भोक्तुः स्वरूपाद्भिन्नस्य साक्षिचैतन्यस्याभ्युपगमो यः स प्रमाणशून्यो यतः। नह्यहञ्जानामि सुखी दुःखी वेत्यनुसन्धानादन्यत् किमपि चैतन्यं घनस्वरूपं देहादि-सङ्घातिरिक्तं कस्यापि बुद्धिमार्गमधिरोहत्यास्तिकस्य। साधयन्ति चैवमेव तार्किका अपि "आत्मा देहाद्यतिरिक्तः इच्छादिमत्त्वात् यन्नैव तन्नैवं यथा देहादिः" इति।

किञ्चौपनिषदाना दुराग्रहग्रहवशादङ्गीक्रियमाणेऽपि तादृशे साक्षिणि तस्याऽपि नानात्वाद् ब्रह्मात्मैक्यं न घटते, प्रत्यन्तःकरणं साक्षिचैतन्यभेदात् [1]अभेदे च सकलक्षेत्रीयसुखदुःखा-

(१) अत्रायं पूर्वपक्षिणोऽभिप्रायः—अन्तःकरणतद्धर्माः साक्षिवेद्या नत्विन्द्रियवृत्तिवेद्याः इन्द्रियाणामपञ्चीकृतपञ्चमहाभूतकार्येषु सञ्चारसामर्थ्याभावात्, बाह्येष्वेव च पदार्थेषु तेषां सामर्थ्यावधारणात्, अन्तःकरणस्य तद्धर्माणाञ्चान्तरत्वात्। नाप्यन्तःकरणं स्ववृत्तिवेद्यं, नहि नाम वह्निर्दाहाश्रयोऽपि दाहविषयो भवितुमर्हति तद्वत् प्रकृतेऽपि समानम्। अतोऽन्तःकरणतद्धर्मादिकं सर्वं साक्षिभास्यमिति वेदान्तिनां डिण्डिमः। तदत्र साक्षिण एकत्वे चैत्रीयसुखदुःखानुसन्धानवत् मैत्रादिसुखदुःखानुसन्धानप्रसङ्गोऽप्यनिवार्यः। अथैतद्दोषपरिजि-

ऽनुसन्धानप्रसङ्गस्यावर्जनीयत्वात्, तदिदं घट्टकुट्यां प्रभातं वेदान्तिनामित्याहुर्भेदवादिनस्तदनाद्यविद्यापिशाचीपापवासनावयस्याकवलीकृतचारुविचारकालखण्डानामखण्डानन्दानुभवैकरसवञ्चितानां विचित्तानां मनोमात्रविजृम्भितमनादेयम् ।

तथाहि—मलिनसत्त्वप्रधानविक्षेपावरणशक्तिसंवलिताऽविद्योपहितचिद्धातुः स्वोपाध्यविद्यागतानन्तावरणशक्तिभेदभिन्नाऽविद्योपाधिभेदैः स्थूलशरीराद्युपाधिभेदैश्च भिद्यमानो "जीव"इत्युच्यते। किमुक्तम् ? अन्तःकरणावच्छिन्नं चैतन्यं कर्त्तृ भोक्तृ "जीवः" अन्तःकरणोपहितं चैतन्यन्तु "साक्षि"इत्येकस्यैवान्तः-

---

ह्रीर्षया साक्षिणो नानात्वमभ्युपगम्येत तदानेकेषां साक्षिणामेकेन ब्रह्मचैतन्येन सहैक्यन्तु गगनकुसुमायितमित्युभयतःपाशारज्जुः ।

(१) आहुश्च मधुसूदनसरस्वत्यः—"सुषुप्तौ निर्विकल्पकसाक्षिचैतन्याऽनुभवाङ्गीकाराच्च"इति सिद्धान्तविन्दौ। अत्रत्यन्यायरत्नावल्याञ्च—" साक्षिणश्चाऽविद्योपहितचिद्रूपत्वपक्षेऽप्यविद्यायाः साक्षिस्वरूपाऽघटकत्वात् शुद्धचिद्रूपत्वमेव" इत्याहुर्गौडब्रह्मानन्दीकाराः । अयञ्च मुख्यसिद्धान्तः । टीकायान्तु मतान्तरेणोक्तम् । "वेदान्तसञ्ज्ञावली " टीकायामपि—"ज्ञानमप्यसाक्षिकं नाभ्युपेयते प्रामाणिकैः । अतोऽन्तःकरणपरिणतिविशेषो ज्ञानं वृत्त्याह्वं, चैतन्यन्तु ततोऽन्यत्तदवभासकम् । ततश्च ज्ञानस्यागन्तुकत्वे नानात्वेऽपि च चैतन्यस्यागन्तुकता नानारूपता वा न किमपि प्रसज्यते' इत्यादिनोक्त एव सिद्धान्तः स्पष्टीकृतः ।

इदन्तु बोध्यम्—साक्षी तावद् द्विविधः जीवसाक्षी ईश्वरसाक्षी च । अन्तःकरणोपहितचैतन्यं जीवसाक्षी । मायोपहितचैतन्यमीश्वरसाक्षीति वेदान्तपरिभाषादौ निर्णीतम् । तत्र—"अकर्तृत्वे सति द्रष्टृत्वम्' इतिसाक्षिलक्षणमुभयत्रैव घटते, उपहितस्यात्मचैतन्यस्यासङ्गोदासीनप्रकाशत्वस्य तुल्यत्वात्,

करणस्य विशेषणत्वोपाधित्वाभ्यां तयोर्भेदव्यपदेशः । नच वाच्यं विशेषणोपाध्योर्वर्त्तमानव्यावर्त्तकत्वेन भेदाभावादन्तःकरण-विशिष्टतदुपहितचैतन्ययोर्जीवतत्साक्षिणोरैक्यमेवेति न कर्त्तृ-भोक्तृचैतन्यादतिरिक्तं नाम साक्षीति, वर्त्तमानत्वे सति व्या-वर्त्तकत्वांशे विशेषणोपाध्योरभेदेऽपि धर्मान्तरेण विशेषात्। विशेषणञ्च[१] कार्यान्वयि व्यावर्त्तकम् । उपाधिस्तु—कार्यानन्वयी व्यावर्त्तको वर्त्तमानश्च । यथा—"रूपविशिष्टो घटोऽनित्यः" इत्यत्र रूपं विशेषणम् । "कर्णशष्कुल्यं नभः श्रोत्र" मित्यत्र कर्णशष्कुल्युपाधिः । एवञ्चान्तःकरणस्य विशेषणत्वे चैतन्यस्य कर्त्तृत्वभोक्तृत्वलक्षणं जीवत्वम्, तस्योपाधित्वे च चैतन्यस्य तत्साक्षित्वमिति कार्यान्वयित्वतदनन्वयित्वभेदाद्विशिष्टतदुप-हितयोरपि भेदः । तस्माद् अन्तःकरणस्य जडतया विषयभासक-त्वायोगाद् विषयभासकचैतन्योपाधित्वम् । तद्विशिष्टचैतन्यस्य मुख्यसामानाधिकरण्याभावाद् ब्रह्माऽभेदाऽभावेऽपि साक्षिचैतं-

---

अत एव चिन्मात्रे न वस्तुभेदः । "बृहदारण्यकोपनिषद्भाष्यवार्त्तिकस्य" चतुर्था-ध्याये तृतीयब्राह्मणे—

प्राणादिशुक्रमादाय कृत्वा तद्भावनामयम् ।
लोकमात्माऽक्रियः स्वस्थश्चाकशीत्यभिपश्यति ॥ (९३२)
परस्य पुरुषस्यायं तदबोधप्रकल्पनात् ।
साक्षिमात्रादिकस्तस्मात्पौरुषेयोऽयमीर्यते ॥ (९३६)

इत्यादिनाऽत्मनः साक्षित्वं स्पष्टीकृतम् ।

(१) विशेष्यवृत्तिधर्माश्रयत्वे सति व्यावर्त्तकं विशेषणम् । विशेष्य-वृत्तिधर्मानाश्रयत्वे सति साक्षाद्व्यावर्त्तकत्वमुपाधित्वम् । उपलक्षणन्तु—विशेष्यवृत्तिधर्मानाश्रयत्वे सति परम्परया व्यावर्त्तकम् । यथा शाखाग्रे चन्द्रः इत्यादौ चन्द्रे शाखादि, देक्षविशेषोपस्थापनद्वारेणैव तस्य व्यावर्त्तकत्वात् ।

न्याऽभेदाज्जीवब्रह्मणोरैक्यं शास्त्रप्रमेयं सुतरामुपपद्यत इति विभावनीयम् ।

नन्वेवञ्जीवसाक्षिणो ब्रह्माऽभेदेन स्वयम्प्रकाशत्वेन सर्वविषयानुसन्धातृत्वाऽभ्युपगमे ब्रह्मण एकत्वात्तदभिन्नसाक्षिणोऽप्यैक्याच्चैत्रावगते मैत्रस्याऽप्यनुसन्धानप्रसङ्ग इति चेन्मैवम् जीवसाक्षिणोः प्रत्यात्मं नानात्वेनोक्तदोषाऽसम्भवात् ।

अयमभिसन्धिः—चैत्रसाक्षिणो मैत्रावगतविषयाऽनुसन्धातृत्वं स्वप्रकाशचैतन्याऽभेदादापाद्यते ? सर्वज्ञत्वादिविशिष्टेश्वरचैतन्याऽभेदाद्वा ? चैत्रोपहितचैतन्याऽभेदाद्वा ? तत्र न प्रथमः कल्पः—तस्य निर्विकारित्वेन तदभेदस्य सर्वविषयानुसन्धानानापादकत्वात् । न द्वितीयः—अन्तःकरणोपहितस्य जीवसाक्षिणः परमेश्वरेण मायाविशिष्टेन तदुपहितेन वाऽत्यन्तभेदाऽभ्युपगमात् । न च तृतीयः—चैत्रमैत्रान्तःकरणयोर्भिन्नदेशस्थत्वेन तदुपहितचैतन्ययोरभेदशङ्कानवकाशात् । इत्थञ्चाऽनुसन्धानानुपपत्तिरेव साक्षिणि प्रमाणम् । आगमश्च भवति प्रमातृचैतन्यातिरिक्ते साक्षिणि प्रमाणम्—"साक्षी चेता केवलो निर्गुणश्च" (श्वेता० ६।११) इत्येवञ्जातीयकः । नचेश्वरविषय इदमुक्तमिति वाच्यम्, मायाविशिष्टे तस्मिन् "केवलो निर्गुणः" इति विशेषणाऽसाङ्गत्यात् । तस्मादस्त्येव प्रमात्रतिरिक्तं जीवसाक्षि चैतन्यं प्रत्यात्मं नाना

(१) "सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वात्" (योग० ४।१८) इति योगानां पुरुषस्याऽपरिणामित्वसाधनमपि तस्य कौटस्थ्यं साक्षित्वञ्च स्पष्टमावेदयतीति सहृदयैः सूक्ष्ममीक्षणीयम् । परिणामित्वे च पुरुषस्य शब्दादिवज्ज्ञाताऽज्ञातत्वं चित्तवृत्तीनां सम्भवेत्; नत्वेवं दृश्यते; किन्तु सवृत्तिकं मनः सदैव ज्ञातं सत्पुरुषस्याऽपरिणामित्वमनुमापयति, तेन च तस्य साक्षित्वमेव फलतीति भावः । इदञ्च "वृत्तिसारूप्यमितरत्र" (यो० १।४) इत्येतत्सूत्रमूलकमपीति सूक्ष्ममीक्ष्यम् ।

तेन सह ब्रह्मात्मैक्यविषयसिद्धेः समञ्जसमिदं शास्त्रारम्भणमिति सर्वमनवद्यम् ।

यच्चोक्तं प्रयोजनञ्च न सिद्ध्यति पारमार्थिकस्य प्रपञ्चस्य ज्ञानाऽनिवर्त्त्यत्वात्, अध्याससामग्र्यभावाच्च तत्कल्पितत्वाऽसिद्धेः कथमवस्तुनो निरात्मकस्यारोपो यावता क्वचिद् दृष्टस्य पूर्वसत एवारोपो दृष्टचर इति । "भट्टपादै"रप्युक्तम्[१] "अध्यस्यते खपुष्पत्व"मित्यादि । तत्रोच्यते–"संस्कारजन्यो हि भ्रमः स्वसिद्धये पूर्वप्रतीतिमात्रमपेक्षते न पुनः पूर्वप्रतीतस्य परमार्थसत्त्वमपि, व्यतिरेकाऽभावात्, संशयविपर्ययदृष्टेष्वपि संस्कारकार्यस्मृतिदर्शनाच्च । तथाहि—लोकेऽनुभवोऽस्मिन् वल्मीककूटे मम पुरा स्थाणुः पुरुषो वेति सन्देह आसीत्, अस्मिञ्शुक्तिशकले रजतमिदमिति भ्रम आसीदित्येवमादि । नच संशयविपर्ययोरेवेयं स्मृतिर्न तदर्थयोरिति वाच्यम् अर्थशून्ययोस्तयोःस्मृतिविषयत्वाऽनुपपत्तेः । तस्मान्निरुपाख्यशशशृङ्गादिविलक्षणस्य पूर्वपूर्वभ्रमदृष्टस्याप्युत्तरोत्तरारोपोपपत्तेर्भ्रमप्रवाहस्य चानादित्वेन अन्योन्याश्रयानवस्थादिप्रसङ्गानवकाशाद्युक्तं वस्तुनि परमार्थेऽसत्यवस्तुनोऽनिर्वचनीयस्यारोपः ।" एतेनाध्याससामग्र्यभावाभावेन प्रपञ्चस्य पारमार्थिकत्वं व्युदस्तम्। अपारमार्थिकस्य च कल्पितत्वं नायुक्तिपरिपुष्टम् । कल्पितस्य च ज्ञाननाश्यत्वं सर्वप्रमाणसंसिद्धमेव । एवञ्च "तरति[२] शोकमात्मवित्" (छां० ७।१।३) इति श्रुतेः, सत्यत्वे तस्य ज्ञाननिवृत्त्यन्यथानुपपत्तेर्मिथ्याप्रपञ्चस्य ज्ञानेन निवृत्तिसिद्धेरज्ञाननिवृत्तिपरमानन्दावाप्तिरूपं प्रयोजनं घटत एवेति युक्तः शास्त्रारम्भः ।

---

(१) तन्त्रवार्तिके १।४।२२ ।

(२) "तरति"इति निवृत्त्यनुकूलव्यापाराश्रयः। निवृत्तौ शोकमिति द्वितीयार्थप्रतियोगित्वान्वयः, व्यापारे चात्मज्ञानरूपोद्देश्यतावच्छेदकस्याभेदेनान्वयः ।

अयमभिसन्धिः—अहमित्यनुभवे निपुणं निरूप्यमाणे दृग्दृश्यात्मना प्रत्यगंशः परागंशश्चावभासते,तस्य चेदमनिदंरूपस्य तप्तायःपिण्डवद्विरुद्धोभयरूपत्वादध्यासं विना एकत्वबोधासम्भवः। नहीदं रजतमित्येकत्वबोध इदमनिदंरूपयोः शुक्तिरजतयोरध्यासं विनोपपद्येत। न च प्रत्यक्पराचोः सादृश्याऽभावाद्,विशुद्धे चात्मनि दोषस्यासम्भवाद्,आरोप्यस्य प्रपञ्चस्य पूर्वमननुभूतत्वेन संस्कारस्याप्यभावात् कथमन्योन्याध्यास इति साम्प्रतम्,स्फुरतोऽपि तत्त्वानवबोधस्यैव सर्वत्राध्यासेषु पुष्कलकारणत्वात्। स चानवबोध आत्मनि सिद्धश्चेत्तत्र काऽनुपपत्तिरिति स्वयमाकलयत्वायुष्मान्। उक्तञ्च "पञ्चपादिकायाम्"—अध्यासलक्षणवाक्यार्थविचारे—"दृश्यते च स्वरूपेणावभासमानेऽपि वस्त्वन्तरभेदानध्यवसायात्तत्तत्सम्भेदेनावभासः, यथैकस्मिन्नेवाऽकारे ह्रस्वादिसम्भेदः" इति। एवञ्च प्रत्यगज्ञानमेव बुद्ध्यात्मना तदुभयोपरक्तज्ञानात्मना च परिणममानमहमिति साक्षिविषयः। तदुक्तमभियुक्तैः—"अविद्यैव बाह्यदोषापेक्षया रजताकारेण साक्षिचैतन्यस्य रजताऽवच्छेदकज्ञानाभासाकारेण च परिणममाना स्वकार्येण सह साक्षिविषयत्वमापद्यते" इति।

अस्यायमर्थः—दुष्टेन्द्रियस्य शुक्तिसन्निकर्षादिदमकारा प्रमाणवृत्तिर्जायते, तत्प्रतिफलितशुक्त्यवच्छिन्नचैतन्यनिष्ठं शुक्तित्वाज्ञानं रागसंस्कारादिसध्रीचीनं शुक्त्या सह तादात्म्यापन्नरजतात्मना परिणमते, इदमाकारवृत्त्यवच्छिन्नचैतन्यनिष्ठशुक्तिविषयत्वाज्ञानन्तु ज्ञानसंस्कारसहकृतं साक्षिरजतसंसर्गापादकरजतज्ञानात्मना परिणमते, तच्च जडत्वान्न स्वविषयसाधकमिति सविलासाऽज्ञानं साक्षिविषय इति।

तदेवं द्रष्टृदृश्यभावेन साक्ष्यसाक्षिभावेन आगमापायितदवधित्वेन चात्माहङ्कारयोर्विवेके सत्यपि विरुद्धस्वभावयोरेनयोरेकत्वावभासोऽन्योन्याध्यासनिबन्धनः शुक्तीदमंशरजतयोरिवाव-

इयमेवाभ्युपगन्तव्यः, नहि विरुद्धस्वभावयोरध्यासं विनैकत्वाऽवभाससम्भवः शुक्तिरजतादौ तथादर्शनादित्यवोचाम। तदुक्तं पञ्चपादिकायाम्—"तस्मात् चित्स्वभाव एवात्मा तेन तेन प्रमेयभेदेनोपधीयमानोऽनुभवाभिधानीयकं लभते, अविवक्षितोपाधिरात्मादिशब्दैरभिधीयते" इति। इदन्तु बोध्यम्—जडस्याऽहङ्कारस्य सच्चिदात्मनि तादात्म्याध्यासाभावे सत्तास्फूर्त्योरसम्भवः, चिदात्मनश्च तदध्यासाभावे कर्तृत्वादिविकारवत्त्वावभासायोगः, तस्माद् द्वयमिदमात्मानात्मकं परस्परस्मिन्नध्यस्तम्। अन्यतरस्मिन् अन्याध्यासपक्षेऽनात्मन आत्मैक्याध्यासे तस्य विषयत्वेनावभासो न स्यात्, आत्मनश्चानात्मन्यध्यासे तस्यापि जडत्वापत्तौ जगदान्ध्यं प्रसज्येत। इतरेतराध्यासे तु उभयात्मनावभासान्नोक्तदोषप्रसङ्गः।

एतेन "सत्यस्य वस्तुनो मिथ्यावस्तुसम्भेदावभासरूपोऽध्यारोपः" इत्युक्तं भवति। नच चिज्जडयोः परस्परतादात्म्याध्यासे शून्यमेव जगतस्तत्त्वं स्यादध्यस्तस्य मिथ्यात्वात्तथा च शून्यवादप्रसङ्ग इति वाच्यम्, भ्रमकाले परिस्फुरदंशस्य मिथ्यात्वेऽपि अपरिस्फुरतोंऽशान्तरस्य विद्यमानत्वात्। तदुक्तं सर्वज्ञात्ममुनिभिः "सङ्क्षेपशारीरके"—

अध्यस्तमेव हि परिस्फुरति भ्रमेषु
नान्यत्कथञ्चन परिस्फुरति भ्रमेषु।
रज्जुत्वशुक्तिशकलत्वमरुक्षितित्व-
चन्द्रैकताप्रभृतिकाऽनुपलम्भनेन ॥ (१।३६)

(१) इतःपूर्वं ३४ तमे श्लोके "विमतमधिष्ठानसामान्यमारोप्यात्मनाऽध्यस्तं भ्रान्तौ स्फुरमाणत्वाद्भ्रमरूप्यांशवद्" इत्यनुमानेनान्योन्याध्यासः साधितः, अत्र तूक्तानुमानमूलभूतां व्याप्तिं दर्शयति—"अध्यस्तमेव" इति। यदनध्यस्तं तन्न भ्रमेषु परिस्फुरति यथा रज्जुत्वादीत्यर्थः। इदमत्र तात्पर्यम्—द्विविधो ह्यध्यासो निरुपाधिकः सोपाधिकश्च। तत्र स्वरूपेण भासमानेऽप्यनवभा-

किञ्चानृतद्वयमिहाध्यसितव्यमिष्टं
स्याच्चेत्तदा भवति चोद्यमिदं त्वदीयम् ।
सत्यानृतात्मकमिदं मिथुनं मिथश्चे-
दध्यस्यते किमिति शून्यकथाप्रसङ्गः ॥ (१।३३)

इति । प्रपञ्चितश्चायमर्थो "विवरणप्रमेयसङ्ग्रहे" शून्यवादिविप्रतिपत्तौ सद्रूपाधिष्ठानसाधने, तद्विशेषस्ततोऽवगन्तव्यः ॥

इत्थं चानयोरेवात्मानात्मनोरितरेतराध्यासादहमिदं ममेदमित्यादयः सर्वे वैदिका लौकिकाश्च व्यवहाराः सम्प्रवृत्ताः सर्वाणि च विधिप्रतिषेधशास्त्राणीति भाष्यकाराः । "अनृतेन हि प्रत्यूढाः" ( छां० ८।३।२ );

एकः शत्रुर्न द्वितीयोऽस्ति शत्रु-
रज्ञानतुल्यः पुरुषस्य राजन् ।
येनावृतः कुरुते सम्प्रमत्तो
घोराणि कर्माणि सुदारुणानि ॥ (महाभा०शां०प०)

इत्यादिश्रुतिस्मृतिभ्यश्चोक्तार्थप्रसिद्धिः ।

---

समानयाथात्म्ये वस्तुनि वस्त्वन्तरात्मनाऽवभासो निरुपाधिकः, यथा शुक्त्यादौ रजताध्यासः । यत्र भासमानेऽपि वस्तुयाथात्म्ये सन्निहितोपाधिसामर्थ्यात् करणपाटवाद्वा भेदविपर्यासाद्यवभासः स सोपाधिकाध्यासः, यथा प्रतिबिम्बद्विचन्द्राद्यध्यासः । तयोरिहाहङ्कारात्मनोर्निरुपाधिकाध्यासे दृष्टान्तः शुक्तिरजताध्यास उक्तः । शुक्तिरजतादौ च इतरेतराध्यासः प्रसिद्ध इत्यतो नात्माहङ्कारयोरितरेतराध्यासोऽसम्भावित इति भावः ।

(१) सत्यं प्रत्यक्, अनृतं परागर्थः स्वरूपतोऽप्यध्यस्तत्वात्, तयोर्मिथोऽध्यासश्चेत् प्रतीचः पराक्संसृष्टत्वाकारेण बाध्यत्वेऽपि स्वरूपेण सत्यत्वान्न शून्यवादप्रसङ्ग इति भावः ।

नन्वात्मनः प्रमातृत्वादध्यासमन्तरेणाऽपि वैदिकलौकिकव्यवहारोपपत्तिरिति चेद् ? नेति ब्रूमः । देहेन्द्रियादिष्वहंममाभिमानरहितस्य असङ्गस्यात्मनः प्रमातृत्वानुपपत्तेः । तथा हि—प्रमातृत्वं नाम प्रमाश्रयत्वम् । प्रमायाश्च वृत्तिरूपत्वे वृत्तेर्जडत्वेन जगदान्ध्यप्रसङ्गः स्यादित्युक्तप्रायम्, चैतन्यरूपत्वे तु स्वस्य स्वाश्रयत्वाऽसम्भवेनात्मनः प्रमातृत्वं न घटेत, करणवैयर्थ्यप्रसङ्गश्च, तस्माद्वृत्त्युपहितचैतन्यमेव प्रमेत्यङ्गीकार्यम् । तदाश्रयत्वं चासङ्गस्यात्मनो वृत्तिमदन्तःकरणतादात्म्याध्यासमन्तरा न सम्भवतीति तस्य प्रमातृत्वसिद्ध्यर्थमकामेनाप्यध्यासोऽङ्गीकर्त्तव्यः । अपि च--जागरादौ व्यवहारदर्शनात्सुषुप्तौ तदभावादन्वयव्यतिरेकाभ्यामपि अध्यासमूलः सर्वोऽपि व्यवहार इति निश्चीयते । विरुद्धस्वभावयोरपि परस्पराध्यासः "अहमज्ञः" इति प्रतीतिसिद्ध इत्युक्तप्रायम् । अन्यथोक्तप्रतीतिर्नोदीयात् । नापि च विरुद्धयोराश्रयाश्रयिभावो भाविको दृष्टः । एवञ्जडस्याऽज्ञातत्वासम्भवेन चित एवाऽज्ञातत्वमेष्टव्यम् । तदुक्तम्--

यस्याज्ञानं भ्रमस्तस्य भ्रान्तः सम्यङ् च वेत्ति सः ।
जडं न विद्यावेद्यत्वान्नातोऽज्ञानं जडाश्रयम् ॥ इति ॥

---

(१) पातञ्जला अप्याहुः—"फलमविशिष्टः पौरुषेयश्चित्तवृत्तिबोधः, बुद्धेः प्रतिसंवेदी पुरुषः" ( यो० भा० सू० ७ पा० १ ) इति । बुद्धेः प्रतिसंवेदी=संवेदिन्या बुद्धेः प्रतिरूपः तत्तादात्म्यापन्नत्वेन तत्समानाकार इति यावत् । आदित्यपुराणेऽपि--

नित्यः सर्वगतो ह्यात्मा बुद्धिसन्निधिसत्तया ।
यथा यथा भवेद्बुद्धिरात्मा तद्वदिहेष्यते ॥

इति शुद्धस्यासङ्गत्वमेवोक्तं सदमुमेवार्थं स्फोरयति ।

एतेन "अध्यस्यते खपुष्पत्वमसत्कथमवस्तुनि" इत्यादि प्रत्युक्तम्, चिद्चितोरन्योन्यमिथुनीकरणस्य साधितत्वात्[1] ।

यच्च सादृश्यज्ञानादित्रितयमध्यासनिमित्तं, निर्विशेषात्मनश्च सादृश्याद्यभावात्प्रपञ्चाध्यासानुपपत्तिरित्युक्तं तदप्ययुक्तम्, सादृश्यकरणदोषसंस्कारादित्रितयस्यावच्छेद्यावच्छेदेनाध्यासभूमिष्वनुगमाभावात्, "ब्राह्मणोऽहम्" इत्येवमात्मनि सादृश्याभावेऽपि जात्यध्यासस्य सर्वैरनुभूयमानत्वात् । कथमन्यथा "ब्राह्मणो यजेत" "ब्राह्मणो न हन्तव्यः" इत्यादिविधिनिषेधवचनानि सङ्गच्छेरन् । अत्र हि सादृश्यमनुपलब्धिबाधितम्, द्वयोरपि गुणक्रियावयवशून्यत्वात् । "न तस्य प्रतिमाऽस्ति" (श्वेता० ४।१९) इति श्रुतेः । इत्थञ्च रजताद्यध्यासेषु तत्त्रितयं सदपि नाध्यासमात्राङ्गमिति[2] निष्कर्षः । उक्तञ्च सङ्क्षेपशारीरके—

भूयस्त्ववत्तनुगुणावयवक्रियाणां[3]
सामान्यपूगवपुरुक्तमिहाभियुक्तैः ।
सादृश्यवस्तु न चिदात्मनि किञ्चिदत्र
जात्यादिभिः सह निरीक्षितमस्ति तादृक् ॥ (१।२९)

इति ।

---

(१) अतएवोक्तमध्यासभाष्ये "भामतीकारैः"—"न च संवृतिपरमार्थसतोः पारमार्थिकं मिथुनमस्तीत्यभूततद्भावार्थस्य च्वेः प्रयोगः । एतदुक्तं भवति—अप्रतीतस्यारोपायोगादारोप्यस्य प्रतीतिरुपयुज्यते न वस्तुसत्त्वेति" इति ।

(२) प्रयोजकमित्यर्थः ।

(३) अत्रोदाहरणानि—यथाऽग्निज्वालावत् पिङ्गल इति रूपतः, गोसदृशो गवय इत्यवयवतः, गजगामीति क्रियातः सादृश्यम् ।

अथ काचादिः करणदोषोऽपि न संविदसंविदोरन्योन्याध्यासे कारणम्। किमुक्तम्? प्रमाणफलभूतायां घटादिज्ञानरूपायां संविदि यः परेषां वेद्यत्वादिभ्रमः नासौ विषयकरणदोषजन्यः, संविदः स्वप्रकाशत्वेनाऽविषयत्वात्, नित्यत्वेन चाजडत्वात्। जडत्वे च तस्याः संसर्गाद्विषयस्य स्फुरणमेव न स्यात्। नहि जडं जडेन स्फोर्यते, तथा सति विषयस्य स्वत एव प्रकाशापत्तेः। प्रमाणप्रवृत्तिवैयर्थ्याच्च, अजडप्रकाशायाः संविदोऽप्रकाशमानाया अन्यस्फोरकत्वे तज्जन्या अन्या विषयस्फूर्त्तिः स्यात्, सापि अप्रकाशमाना चेत्? तस्या अन्या, तस्या अन्येत्युत्तरोत्तरमापतन्ती धाराऽनवस्था प्रसज्येत, तस्मादकामेनापि संविदः स्वप्रकाशमानत्वमास्थेयम्। एवं स्वप्रकाशरूपायाः प्रमाणफलात्मिकायाः संविदोऽनित्यत्वे करणविषयोपादानता न घटेत द्वयोर्जडयोरजडफलोपादानत्वासम्भवात्। नापि प्रमाता उपादानश्चैतन्यगुणोत्पत्तेः प्राक्तस्यापि जडत्वाऽविशेषात्। चिद्रूपत्वे तु तस्य सावित्रालोकवत्साधारण्येन स्फुरतः सर्वत्रानभिव्यक्तविशेषस्य दर्पणादाविव सावित्रालोकस्य विषयविशेषसंसृष्टतदाकारावस्थान्तःकरणवृत्तिप्रतिफलितत्वेन लब्धविशेषतामात्रेण प्रमाणफलव्यपदेशोपपत्तेर्न मुख्यौ जन्मविनाशौ, वृत्तिविनाशादेव विनाशव्यवहारसम्भवादिति नित्या स्वप्रकाशा च प्रमितिः प्रमाणफलमिति स्थिते तस्याः परप्रकाश्यत्वोत्पत्तिविनाशत्वप्रतिभासो लोकस्य भ्रम एवेति प्रमाणफलभूतायां स्वप्रकाशात्मिकायां संविदि योऽयं परप्रकाश्यत्वोत्पत्त्यादिरूपो भ्रमस्तत्र न विषयदोषो, नाऽपि करणदोष इति द्वयोरपि व्यभिचारः। नहि संवित्संवेद्ययोः प्रकाशजडयोः सादृश्यम्, नापि तत्र करणदोषः प्रमितेरदुष्टकरणजन्यत्वा-

देव। इत्थं तत्र अविवेकलक्षणात्केवलान्मोहादेव स भवतीति यथाऽयं दृष्टान्तः तथा सर्वाधिष्ठानतया सर्वात्मभूते एकस्मिन्नद्वितीये परब्रह्मणि विचित्रेयं जीवेश्वरजगदाकारभ्रान्तिरज्ञानहेतुकेति सर्वं सुस्थम्।

या तु संस्कारस्य भ्रमकारणता सर्वत्राध्यासेषु तत्राऽयमध्यासहेतुः संस्कारः पूर्वप्रतीतिजन्यत्वरूपेणापेक्ष्यते न पुनः पूर्वप्रमितिजन्यत्वेन रूपेणेत्यवोचाम। भ्रमप्रवाहस्य चानादित्वादुत्तरोत्तराध्याससिद्धौ बाधकाभावः। वस्तुतस्तु—संस्कारोऽपि व्यभिचारी शुक्तिरजतादिवैशिष्ट्यस्य प्रागननुभूतस्यापि भ्रमविषयत्वादिति न विस्मरणीयम्। इमं गूढमभिसन्धिं हृदि कुर्वाणाः श्रीमधुसूदनाचार्याः "अद्वैतसिद्धौ" प्रतिकूलतर्कनिराकरणप्रकरणे "यथा नित्यज्ञानवादिनां ज्ञानत्वस्य न शरीरजन्यतावच्छेदकत्वं, नवा गुणजन्यत्वस्य प्रामाण्याप्रामाण्यप्रयोजकत्वं बाधकबलात् तद्वज्जन्याध्यासं प्रत्येव दोषादीनां कारणत्वम् गुणाजन्यत्वेऽप्यबाधितविषयतया नित्यज्ञानप्रामाण्यवत् दोषाजन्यत्वेऽपि बाधितविषयतयाऽनाद्यध्यासस्याप्यप्रामाण्योपपत्तिः" इति व्याजहुः। तस्मादेतेषां विचारेऽपि सादृश्यादयोऽध्यासम्प्रति नैकान्तिकत्वेन सम्भूय हेतुतां भजन्त इति स्पष्टमाभाति।

नचाऽयमन्योन्याध्यासोऽप्रसिद्ध एवेति रेकणीयम् "इदं रजत"मित्यादिभ्रमे इदमो रजतस्य चाऽभेदेन प्रतीयमानत्वात्। तथा चायं प्रयोगः—"विमतमधिष्ठानसामान्यमारोप्यात्मनाऽध्यस्तं भ्रान्तौ स्फुरणत्वाद्रूप्यांशवत्" इति। तदुक्तम्—

---

(१) ज्ञाननित्यत्वसाधकप्रमाणात्मकबाधकबलादित्यर्थः।

इदमर्थवस्त्वपि भवेद्रजते
परिकल्पितं रजतवस्त्विदमि।
रजतभ्रमेऽस्य परिस्फुरणा-
न्न यदि स्फुरेन्न खलु शुक्तिरिव ॥ (सं० शा० १।३४)

(१) यदीदन्त्वमनध्यस्तं स्यान्न भ्रमे स्फुरेत् । शुक्तिवत् रजते पुरोवर्त्ति-त्वलक्षणेदन्त्वाऽस्फुरणे तदर्थिप्रवृत्तिरपि न स्यादिति निगर्वः। किञ्च सर्वेषां भ्रमाणां द्वयाकारता तार्किकादेरपि सम्मतैव। "तथाहि—सविकल्पकधीमात्रे भ्रमत्वेनास्मत्सम्मते विशेष्यतावच्छिन्नं प्रकारत्वं प्रकारतावच्छिन्नं विशेष्यत्वं वेत्या-कारद्वयं सप्रकारकधीमात्रनिष्ठं तार्किकादिभिः स्वीक्रियते। तादृशाकारद्वयञ्च रज-ततादात्म्येनेदं साक्षात्करोमि, इदन्तादात्म्येन रजतं साक्षात्करोमि इदं रजतं साक्षात्करो-मीति सार्वलौकिकधीभिर्गृह्यते। ×× तथाचेदंत्विषयतायां रजतविषयतावच्छेदकत्वं, रजतविषयतायामिदंविषयतावच्छेदकत्वञ्च उक्तधीषु भाति। "मूलविशिष्टःसंयोगी" इत्यादौ संयोगित्वरूपे विधेये उद्देश्यतावच्छेदकीभूतमूलवैशिष्ट्यस्यावच्छेदक-त्वभानवत् "रजतमिदम्" इत्यादौ रजतविषयकसाक्षात्कारे इदन्तादात्म्यविषयक-त्वस्य विधेयत्वेन इदन्तादात्म्यविषयकत्वस्य रजतविषयतावच्छिन्नत्वलाभात्। "रजततादात्म्येन इदम्" इत्यादौ त्विदंविषयकसाक्षात्कारे रजततादात्म्यवि-षयकत्वस्य विधेयत्वेन तत्रेदंविषयतावच्छिन्नत्वलाभात् । एकविषयतावच्छेद-कापरविषयतात्वस्यैव विशेष्यतात्वरूपस्य वक्ष्यमाणत्वात् उक्तलौकिकधीभि-रुभयोः परस्परविशेष्यविशेषणकत्वघटिताकारयोः सिद्धिरिति नास्माकमेव तत्स्वीकारेण गौरवाद्यापत्तिः" इत्यादि बहूक्तं न्यायरत्नावल्याम्।

**मधुसूदनसरस्वत्यश्च** सिद्धान्तबिन्दौ प्रथमश्लोकव्याख्यायाम्—**"तेनाऽन्योन्याध्यासात् चिदचिद्ग्रन्थिरूपोऽध्यासःएकतरस्या-ध्यासाङ्गीकारेऽन्यतरस्याभानप्रसङ्गात् अध्यस्तस्यैव भ्रमे भाननि-यमात् "इमे रङ्गरजते" इति समूहालम्बनवदवश्यमितरेतरा-ध्यासः"** इत्यादिनाऽन्योन्याध्यासं समार्त्तथन्त। अत्रैव नारायणीकाराश्च **( श्रीनारायणतीर्थाः ) "इदंशब्दवाच्ययोरेव रङ्गरजतयोः**

रजतप्रतीतिरिदमि प्रथेत
 ननु यद्वदेवमिदमित्यपि धीः ।
रजते तथा सति कथं न भवे-
 दितरेतराध्यसननिर्णयधीः ॥ (सं० शा० १।३५)
इतरेतराध्यसनमेव तत-
 श्चितिचैत्ययोरपि भवेदुचितम् ।
रजतभ्रमादिषु तथावगमा-
 न्नहि कल्पना गुरुतरा घटते ॥ (सं०शा०१।३७) इति ।

नचेन्द्रियसम्प्रयोगादेरेव सर्वत्राध्यासेषु हेतुदर्शनात् ब्रह्मात्मनश्चाज्ञातत्वेऽपि सादृश्यादिरहितस्य निरंशस्य प्रतीचो विषयिणः कथमध्यासाऽधिष्ठानत्वमतो लोकविरुद्धेयं कल्पना नादर्त्तव्येति वाच्यम्, उपचारसामर्थ्यात्प्रकृतेऽपि तस्योपपादयितुं शक्यत्वात् । तथाहि—अन्तःकरणस्य देहेन्द्रियाद्यपेक्षया प्रत्यक्त्वं, स्वच्छत्वं, सूक्ष्मत्वञ्चास्ति चैतन्यसादृश्यम्, सांशत्वञ्च चैतन्यस्याऽविद्यावशादखण्डस्यापि जीवत्वब्रह्मत्वाद्यात्मकम्,सा-

---

"रजतरङ्गे' इति भ्रमे परस्परमधिष्ठानारोप्याध्यासिकत्वमिति 'इदं रजतम्" इति विशिष्टभ्रमेऽपि भ्रमत्वाऽविशेषात् विशेषणविशेष्यसंसर्गत्रमङ्गीक्रियत इत्यर्थः" इत्यादि टीकयाम्बभूवुः ।

(१) अर्थाध्यासेऽनुमानमुक्त्वा ज्ञानाध्यासेऽप्यध्यक्षं प्रमाणयति—रजतप्रतीतिरिति । एवंकैव "इदं रजतम्" इति धीः, तत्र यथा रजतस्येदमा तादात्म्यं भासते, एवमिदमोऽपि रजततादात्म्यमित्यनुभव एवात्रेतरेतराध्यासे मानमित्यर्थः ।

(२) इतरेति—चितिचैत्ययोर्थः "अहम्" इत्यध्यासः ततोऽध्यासत्वादेव हेतोरितरेतराध्यासः स्याद् रजताध्यासवत्, अन्यथाऽध्यासद्वैरूप्यकल्पनाऽनुचिता स्यादित्यर्थः । अतएव—"अहमुपलभे" इत्यहमि चैतन्यानुभवः । द्वैरूप्यावभासश्चात्रापि विवेकिनामस्त्येव अन्यथा कल्पनागौरवं स्यादिति भावः । चित्रादिशब्दवच्चाहंशब्दस्य शबलवाचित्वान्न शब्दद्वयप्रयोगः ।

भासान्तःकरणे तद्विविक्तत्वेन प्रतीयमानत्वाद्विषयतामिवापन्नस्य परात्तत्वमपि शक्यमुत्प्रेक्षितुम्, अनादित्वाच्च भ्रमप्रवाहस्य पूर्वपूर्वापेक्षया सर्वमिदमुत्तरोत्तराध्यासे शक्यसमर्थनमिति न काचिदप्यनुपपत्तिः। उक्तञ्चाध्यासभाष्ये पूज्यपादैः–"[1]न तावदयमेकान्तेनाऽविषयोऽस्मत्प्रत्ययविषयत्वात्" इति।

वस्तुतस्तु—अपरोक्षाध्यासेऽधिष्ठानापारोक्ष्यमात्रं तन्त्रं नत्वारोप्याधिष्ठानयोरेकेन्द्रियग्राह्यत्वसादृश्यत्वादिकमपीति। स्पष्टञ्चैतत् "आत्मनि चैवं विचित्राश्च हि"(ब्र०सू०२।१।२८) इत्यत्र। यथा ग्राहकान्तराभावात्स्वसत्तायां संशयादिराहित्याच्च स्वयञ्ज्योतिष्ट्वश्रुतेः स्वतोऽपरोक्षभूतायां रूपादिहीनतया सादृश्यशून्यायां चितौ स्वप्नभ्रमाधिष्ठानत्वम्,तथाऽत्रापि चितौ महानयं जगद्भ्रमः स्वप्नो नाऽनुपपन्नः। किं न पश्यसि स्वप्ने निद्रादोषाद्रूपाद्याकार एव भ्रमः, चक्षुर्विषयं मनोगम्यं रूपवदधिष्ठानं विनापि पुनः पुनर्जायमानम्, "[2]स हि स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणि" (बृ० ४।३।७) इति श्रुतेः।

---

(१) एतस्य तत्त्वं परिस्फोटयन्तो भामतीकारा अप्याहुः—
"तस्माच्चिदात्मनः स्वयम्प्रकाशस्यैव अनवच्छिन्नस्याऽवच्छिन्नेभ्यो बुद्ध्यादिभ्यो भेदाग्रहात्, तदध्यासेन जीवभाव इति, तस्य चानिदमिदमात्मनोऽस्मत्प्रत्ययविषयत्वमुपपद्यते" इति।

(२)हि=यस्मात् स आत्मा **स्वप्नो भूत्वा**=स्वप्नाकारपरिणतधीवृत्त्यवभासकत्वेन तन्मयो भूत्वा तदाकारो भूत्वेति यावत् **इमं लोकम्**=जागरितव्यवहारलक्षणं कार्यकरणसङ्घातात्मक**मतिक्रामति**=तदभिमानं त्यजतीति यावत्, **मृत्यो रूपाणि**–मृत्युरज्ञानं तस्य रूपाणि चातिक्रामति। अतः सञ्चरणादिकं नात्मनः स्वाभाविकं, स्वभावस्य वह्न्युष्णत्वस्येव स्वसद्भावे सत्यतिक्रमणायोगादित्यर्थः।

यदपि ज्ञातसामान्यांशमज्ञातविशेषांशमधिष्ठानम्, नचात्मनो निरंशस्य तत्सम्भवतीति तदपि सिद्धान्तानवबोधसमुज्जृम्भितम्, अज्ञानस्यैव स्फुरणास्फुरणप्रयोजकत्वात्, दूरस्थे वनस्पतिद्वये "एकोऽयं वनस्पतिः" इति भ्रमदर्शनात्। अत्र हि अनवस्थाभयादन्योन्याभावप्रतियोगिप्रमाणयोरनिरूपणाच्च भेदस्य वनस्पतिस्वरूपानतिरेकात्स्फुरणेऽपि भेदाऽस्फुरणं दृश्यते यथा, तद्वत्प्रकृतेऽप्यज्ञानमाहात्म्यादेव सत्त्वचित्त्वाभ्यां स्फुरणमानन्दाऽभिन्नत्वेन चाऽस्फुरणं न विरुद्धम्[1]। अतएवोक्तमभियुक्तैः—

निरंशेऽप्यंशमारोप्य कृत्स्नेंऽशे वेति पृच्छतः।

तद्भाषयोत्तरं ब्रूते श्रुतिः श्रोतृहितैषिणी। इति। (पञ्च० २।५८)

उपदेशसाहस्रयाञ्च बुद्ध्यपराधप्रकरणे पूज्यपादैः उदङ्कोपाख्यानेनाप्ययमर्थः स्पष्टीकृतः

मूत्राशङ्को[2] यथोदङ्को नाग्रहीदमृतं यथा।
कर्मनाशभयाज्जन्तोरात्मज्ञानाग्रहस्तथा॥ (पद्य० ५।१) इत्यादिना।

---

१—ग्रन्थकाराः स्वयमपि एकस्यैवार्थस्य युगपद्भानाभानत्वे अनेकैर्दृष्टान्तैः समुदाहृत्य प्रकृतस्यात्मनः सर्वाधिष्ठानतामुपसंहरन्ति द्वितीये परिच्छेदे—एवं शुद्धोऽप्यखण्डात्मेत्यादिना ( २। १७५ )

(२) अत्रेयमाख्यायिका—उदङ्को नाम कश्चिदृषिर्भगवन्तं महाविष्णुं तपसा तोषयित्वा देवरक्षितममृतमभ्यर्थितवान्, तदा भगवता देवेन्द्रम्प्रत्युक्तममृतमस्मै दीयतामिति। इन्द्रस्तु विष्णोराज्ञां पालयन् अमृतकलशं नीत्वा मातङ्गवेषमास्थाय स्त्रवस्तिप्रदेशे कलशमुपनिधाय उदङ्काय दातुमारेभे असूयया मा भवत्वस्यामृतपानमिति मन्यमानः। उदङ्कोऽपि चाण्डालमूत्रमाशङ्क्य तन्नाग्रहीदिति। एवं प्रत्यक्षलब्धमप्यमृतं तथाभूतमपि न मदभिमतममृतमिदमिति यथोदङ्को न जग्राह स्वजातिनाशभयं मत्वा, तथा प्रकृतेऽपि स्फुरतोऽप्यस्फुरमाणता नानुपपन्नेति भावः।

उत्तरार्धस्यार्थस्तु—यथा जन्तोर्लोकस्य वर्णाश्रमोपाधिविहितकर्मनाशभयादात्मज्ञानस्य यथोक्तस्याऽग्रहस्तस्मिन्ननादर इति।

अमृतस्य सामान्यग्रहेऽपि तद्विशेषाग्रहो यथोदङ्कस्य तथात्रापि विवक्षितांशविषया योजनीयम् ।

इदमत्राकूतकम् – यद्यपि स्वप्रकाशाप्रकाशस्वरूपयोश्चिज्जडयोर्विरोधस्तथापि "सुखमहमस्वाप्सं न किञ्चिद्वेदिषम्" इति सुप्तोत्थितस्य परामर्शदर्शनात् नात्मसामान्यप्रकाशस्तमसो विरोधी किन्तु वृत्तीद्धं विशेषचैतन्यमेव दारुस्थितानलवदन्धकारस्य । एकस्यैव सच्चिदानन्दात्मनः कूटस्थस्याऽविद्यादशायामानन्दांशस्याऽभानात् सद्रूपस्य च सर्वत्र सर्वदा भानादध्यासकल्पकस्य सामान्यविशेषभावस्य कल्पना सिद्धान्तेऽपि घटितैवेति सर्वमनवद्यम् । एतेन "ज्ञानरूपं परम् ब्रह्म" इत्यादि विशिष्टाद्वैत्युक्तं प्रत्युक्तम्, अध्यासस्योपपादितत्वात् । अधिकन्तु सप्तधाऽनुपपत्तिखण्डनप्रकरणे स्वावसरे वक्ष्यामः ।

यच्च—' संहितमेतच्छास्त्रं जैमनीयेन षोडशलक्षणेनेति शास्त्रैक्यसिद्धेर्गतार्थत्वादपि पृथगनुबन्धादिकल्पनमनर्थकम्, एकभविकनयेन काम्यनिषिद्धवर्जनमुखेन नित्यनैमित्तिककर्मानुष्ठानद्वारैव "यन्न दुःखेन सम्भिन्न" मित्यादिलक्षणलक्षितमोक्षसिद्धौ पृथक् शास्त्रारम्भाऽनुपपत्तिरिति" तदतितुच्छम्, "अर्थी समर्थो विद्वान् शास्त्रेणापर्युदस्तः" इति विशेषणवत्तया विधिनिषेधाभ्यां प्रवृत्तिनिवृत्तिषु एकस्यैव स्वर्गादिकामनाभाजोऽधिकृततया धर्मजिज्ञासासिद्धेः । इह तु— त्यक्तसमस्तैषणस्य विवेकवैराग्यशमदमादिसम्पन्मुमुक्षुत्वादिसम्पन्नस्याऽधिकारवैलक्षण्यम् । भव्यो धर्मो जिज्ञास्यः कर्मकाण्डे यदर्थं पूर्वमीमांसा प्रवृत्ता, उत्तरत्र

(१) उक्तश्चाचार्यैः—

तृणादेर्भासिकाऽप्येषा सूर्यदीप्तिस्तृणं दहेत् ।
सूर्यकान्तमुपारुध्य तन्न्यायं तत्र योजयेत् ॥ इति ॥

तु भूतं ब्रह्म जिज्ञास्यमिति तयोरस्ति महद्वैलक्षण्यम्। नच वेद-प्रमेयत्वेन द्वयोः साम्यम्, ब्रह्मज्ञानमपि धर्मः, "अयन्तु परमो धर्मो यद्योगेनात्मदर्शन"मिति(याज्ञ०१।८)स्मृतेरिति वाच्यम्,साध्यसिद्धयो-र्धर्मब्रह्मणोः पुरुषेच्छाधीनत्वानधीनत्वादिभूयोवैषम्यसम्भवात्। साध्ये=कर्त्तव्ये धर्मे तु पुरुषेच्छाधीनत्वविधिप्रतिषेधेच्छा-विकल्पसमुच्चयोत्सर्गापवादबाधव्यवस्थितविकल्पादयो यथा-कामं सम्भवन्ति, न चैवं सिद्धरूपे ब्रह्मणि, येन वेदैकमेय-त्वेऽपि द्वयोरेकमीमांसामीमांस्यत्वं सम्भावयितुमप्युत्प्रेक्ष्येत केनापि प्रेक्षावता। ननु-स्थाणुर्वा पुरुषो वेति सिद्धेऽपि वस्तुनि विकल्पो दृष्टचर इति चेन्न अवस्तुतन्त्रस्य तस्याऽसम्यक्त्वात्। "योषा वाव गोतमाग्निः" ( छां० ५।८।१ ) इत्यादावपि कर्त्तव्यगोचर-तैव न तु सिद्धगोचरता। यदि सिद्धवस्तुनः सम्यग्ज्ञानाधीन-त्वात् सम्यग्ज्ञानस्य च प्रमातृपुरुषेच्छाधीनत्वाद्वस्त्वपि पुरुषा-धीनं स्यादिति ब्रूषे तदाऽनभिज्ञोऽसि युक्तिमार्गस्य, पुरुषेच्छाया सत्यामपि "इदं रजतम्" इत्यत्र वस्त्वभावे सम्यग्ज्ञानादर्शनात्।

---

(१) उक्तश्चाचार्यैरुपदेशसाहस्र्याम्—

अहं कर्त्ता ममेदं स्यादिति कर्म प्रवर्त्तते।
वस्त्वधीना भवेद्विद्या कर्त्रधीनो भवेद्विधिः ॥ इति ॥
( पद्य० १।१३॥ )

(२) सर्वा हि क्रियाः कर्त्तुमकर्त्तुमन्यथाकर्त्तुं वा शक्या इति पुरुषेच्छाधीनत्वं तासाम्। ज्ञानन्तु न पुरुषेच्छाधीनं भवति, तस्य वस्तुतन्त्रत्वात्। एवं विध्यादिषु विज्ञेयम्। तत्र विधिः—"अहरहः सन्ध्यामुपासीत"। प्रतिषेधो यथा—"सुरां न पिबेत, गां मा हन्यात्"। इच्छाविकल्पो व्रीहियवादिषु। समुच्चयः अङ्गावबद्धासूद्गीथाद्युपासनासु। उत्सर्गो यथा"मा हिंस्यात्सर्वा भूतानि"। अपवादः "अग्नीषोमीयं पशुमालभेत"। एवमन्यदपि यथायथं वेद्यम्।

तस्मात्सिद्धगोचरस्य सम्यग्ज्ञानस्य वस्त्वेव प्रधानं प्रयोजकमित्येवं स्थिते सिद्धगोचरं ब्रह्मज्ञानमपि केवलं वस्तुतन्त्रमिति नहि ज्ञानद्वाराऽपि ब्रह्मणः पुरुषाधीनत्वम्। धर्मस्य तु पुरुषाधीनत्वादिकमैकान्तिकमुक्तमिति धर्मादत्यन्त विलक्षणस्य सिद्धस्य ब्रह्मणः कृते पृथगेव मीमांसाया आरम्भ इति न द्वयोरैक्यम्।

न च—यम नियमादिप्रवृत्तिनिवृत्तिपरत्वादस्यापि शास्त्रस्य पूर्वशास्त्रवन्नाधिकारभेद इति शङ्कनीयम्, स्वाभाविकप्रवृत्तिवैमुख्यसम्पादनपरत्वात्तादृशविधीनाम्, प्रवृत्तिप्रतिपादनपरत्वे तु—"एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाऽथ भिक्षाचर्यं चरन्ति" (बृ० ३।५।१) "त्यागेनैके अमृतत्वमानशुः" (महाना० १२।३) इत्याद्यनेकश्रुतिविहितायाः सर्वकर्मनिवृत्तेर्व्याकुलीभाव आपद्येत।

नन्वेवमपि श्रवणादिविधीनां प्रवृत्तिपरतैव दृश्यते तत्कथमुक्तं निवृत्तिपरतेति? शृणु यथोक्तम् "श्रोतव्यः" (बृ० ४।५।६) इत्यादिशास्त्रस्य ब्रह्मात्मैक्यज्ञानोत्पत्तयेऽनात्मश्रवणादिविरोधिक्रियानिवर्तनात्मकौदासीन्यविशेषप्रदर्शनमेवाभीष्टम्, न पुनः पुरुषविशेषस्य प्रवर्त्तनाविशेषोऽपि। यथा—स्वभावप्राप्तलशुनभक्षणपरयोषोपभोगादेः प्रतिषेधे तद्भक्षणादिनिवृत्त्यौदासीन्यपरिपालनार्थं लशुनदोषचिन्तनरूपो व्यापारः, परस्त्रियाश्च मातृबुद्धिरूपो व्यापारः प्रवृत्तिविरोधपर्यवसायीति विभावनीयम्। उक्तश्च सर्वज्ञात्ममुनिभिः—

औदासीन्ये बोधिते शास्त्रवृन्दै-
र्थादस्मात्प्रच्युतस्यास्त्यनर्थः।

---

१ अस्यायमर्थः—शास्त्रवृन्दैः=संन्यासशास्त्रशतैः मुमुक्षोरनात्मविषयकसर्वप्रवृत्त्यौदासीन्ये बोधिते सति अर्थात्=औदासीन्यविधानसामर्थ्यात् अस्मादौदासीन्यात्प्रच्युतस्यानर्थोऽस्तीत्यवसीयते' इत्यालोच्य

इत्यालोच्य प्रच्युतेः प्रापकस्य,
प्राबल्येऽर्थे प्रातिलोम्यं विधत्ते ॥ (सं०शा० १।७६) इति ।

इत्थं फलस्वाम्यविषयादिभेदे परिस्फुटेऽपि द्वयोर्मीमांसयोरैक्यं वदन् केनोपमय इति सन्तः सन्तु साक्षिणः ।

यच्चोक्तं नित्यनैमित्तिककर्मानुष्ठाननिषिद्धकर्मादिवर्जनमात्रेण मोक्षसिद्धेर्गतार्थतयाऽपि पृथक्शास्त्रारम्भो व्यर्थ इति तदप्यविचारितरमणीयम् "कर्मणा पितृलोको विद्यया देवलोकः" (बृ० १।५।१६) इति श्रुतेः कर्मणां मोक्षफलकत्वाऽसिद्धेः । "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" (महाना० १२।३) वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद्यतयः शुद्धसत्त्वाः" (महाना० १२।३, मुं० ३।२।६) "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" (बृ० ४।४।२२) "तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत्" ( महाना०७८ ) इत्याद्याः श्रुतयः

"नैष्कर्म्यसिद्धिं परमां सन्न्यासेनाधिगच्छति" (भ० गी १८।४९)
"त्वम्पदार्थविवेकाय सन्न्यासः सर्वकर्मणाम्"
(उप० सा० पद्य० १८।२२)

अर्थस्य मूलं निकृतिः क्षमा च,
कामस्य रूपञ्च वपुर्वयश्च ।
धर्मस्य यागादि दया दमश्च,
मोक्षस्य सर्वोपरमः क्रियाभ्यः ॥ ( सं० शा० ३।३६६)

---

प्रच्युतेः=औदासीन्यविच्छित्तेः प्रापकस्य हेतोर्यत्प्राबल्यमुद्रेकः तस्मिन् सति तदर्थे तत्फले यत्प्रातिलोम्यं तदभिभवलक्षणं तद्विधत्ते श्रवणादिशास्त्रमिति । तथा च—औदासीन्यपरिपालनानुकूलपरत्वाच्छ्रवणादीनां न प्रवृत्तिपरत्वमिति भावः ।

(१) विचारायेति पाठान्तरमपि ग्रन्थान्तरेषूपलभ्यते ।

प्रवृत्तिलक्षणो योगो ज्ञानं सन्न्यासलक्षणम् ।
तस्माज्ज्ञानं पुरस्कृत्य सन्न्यसेदिह बुद्धिमान ॥

( महाभारत० १४।४३।२६ )

इत्याद्याः स्मृतयश्च भवन्ति ज्ञानकर्मणोर्भिन्नसाध्यसाधनभाव सम्बन्धप्रतिपादिकाः, तत्कथं कर्मणां मोक्षसाधनत्वं घटेतेति स्वयमाकलयत्वायुष्मान् । दूषितश्चायं पक्षो वार्त्तिकसारे । तथाहि—

सूक्ष्मापराधसंदृष्टेरतियत्नवतामपि ।
निषिद्धकाम्ये निःशेषं वर्जयेन्निपुणोऽपि कः ॥
मुमुक्षुः पापकाम्ये द्वे वर्जयेदिति चोदना ।
नास्ति वेदे क्वचिद्येन वचसा तत्प्रकल्प्यते ॥
काम्यादिवर्जनं त्वेतत्स्वकपोलप्रकल्पितम् ।
अतः प्रामादिकात्काम्यान्निषिद्धाच्च पुनर्जनिः ॥
नित्यस्य फलमिष्टश्चेदुपात्तदुरितक्षयः ।
तथापि काम्यपुण्यानां चयो नादुरितत्वतः ॥
उपपातकमल्पश्चेत्क्षीयतां नित्यकर्मणा ।
अनन्तदेहहेतूनां हत्यादीनां कुतः क्षयः ॥
नित्यकर्मभिरप्यस्ति स्वर्गः काम्याग्निहोत्रवत् ।
आपस्तम्बेन तत्प्रोक्तमाम्रवृक्षनिदर्शनात् ॥
फलार्थे निमिते त्वाम्रे छायागन्धाववारितौ ।
तथा वर्णाश्रमाचारादनुगच्छेत्त्रिविष्टपम् ॥
निषिद्धकाम्यनित्यानि पूर्वजन्मसु चात्र च ।
कृतानि सन्त्यनेकानि स्वास्थ्यं तत्रात्मनः कुतः ।
ऐकात्म्यबोधतः कर्मक्षयं चेदात्थ तर्हि ते ॥
निर्विघ्ना मुक्तिरस्त्वेवं ममेव नहि संशयः ॥ इति

इत्थश्चागतार्थत्वान्मोक्षात्मकफलस्य, पृथगेव ब्रह्ममीमांसा-

रम्भो युज्यते । 'अथातो ब्रह्मजिज्ञासा' ( ब्र०सू० १।१।१ ) इति सूत्रयतो बादरायणस्यापि महर्षेरयमेवार्थोऽभिप्रेतः, अन्यथा "अथातः परिशिष्टधर्मजिज्ञासा" इत्येवमेवारप्स्यत, तस्मात्सूक्तं "योऽज्ञातोऽनर्थसार्थाय ज्ञातो मोक्षाय चेश्वरः" इति शिवोम् ॥३॥

सङ्गति—प्रथमश्लोक द्वारा सूचन किये हुए अनुबन्ध-चतुष्टय की विशेषरूप से प्रतिपत्ति के लिये ग्रन्थारम्भ की सार्थकतापूर्वक विषयप्रयोजनसिद्धि की प्रतिज्ञा करते हैं ( अर्थात् ब्रह्ममीमांसा की आवश्यकता कथन करते हैं )—

भाषार्थ—यः=जो ईश्वरः=ब्रह्म परमात्मा अज्ञातः=अज्ञात हुआ अनर्थसार्थाय=रागद्वेषात्मक संसारप्रवाह का हेतु है अर्थात् जिसके अज्ञान से ही संसार भासता है च=और(जो)ज्ञातः= ज्ञात हुआ मोक्षाय=मोक्ष का हेतु है अर्थात् जिसके साक्षात्कार-द्वारा सविलास अज्ञान की निवृत्ति तथा परमानन्दप्राप्तिरूप प्रयोजन ( मोक्ष ) की सिद्धि होती है सः=वही परमात्मा सर्वैः=सब मुमुक्षुभिः=मुमुक्षु=मुक्ति की इच्छावाले अधिकारी

(१)"अथ"शब्देन साधनचतुष्टयसम्पत्त्यानन्तर्यमुच्यते । "अतः" शब्देनोक्तसम्पत्तिसम्भावना, सूत्रस्थपदान्वयलाभार्थमानर्थक्यपरिहारार्थञ्च "कर्त्तव्या" इति पदमध्याहर्त्तव्यम् ।"ज्ञा" प्रकृत्या च फलीभूतब्रह्मापरोक्षज्ञानमजहल्लक्षणया, "सन्" प्रत्ययेन चेच्छासाध्यो विचारो जहल्लक्षणया लभ्यते । एतावता (एवञ्च) अपरोक्षज्ञानस्य मोक्षसाधनत्वं वेदान्तवाक्यानां विचार्यत्वञ्च गृहीतं भवति । इत्थं— "साधनचतुष्टयसम्पत्त्यनन्तरमधिकारिणा मोक्षसाधनब्रह्मापरोक्षज्ञानाय वेदान्त-वाक्यविचारः कर्त्तव्यः" इति सूत्रार्थः सम्पद्यते । अनयैव रीत्या "जिज्ञासा" पदस्य कर्त्तव्येतिपदेनान्वयो युज्येत नापरथेति सूक्ष्ममाकलनीयम् ।

जनों के लिये सर्वथा=सर्व प्रकार से अर्थात् वेदानुवचन, यज्ञ, दान, अनाशक=इन्द्रियवशीकरणरूप तप द्वारा सम्यक्=भली प्रकार से जिज्ञास्यः अस्ति=वेदान्तशास्त्र की सहायता से विचार करने योग्य है।

सार यह कि—अज्ञात ब्रह्म इस शास्त्र का विषय, तथा ज्ञात हुआ वही प्रयोजन है, इसलिये मोक्षप्राप्तिरूप प्रयोजन का अर्थी पुरुष विधिवत् गुरु की उपासना करके उसके उपदेश द्वारा ब्रह्म का विचार करे। जब तक असम्भावना, विपरीतभावना की निवृत्ति न हो तबतक ब्रह्मविचार का त्याग न करना चाहिये, इससे ब्रह्ममीमांसा के पृथक् आरम्भ की आवश्यकता भी दिखाई गई है॥३॥

ननु—जीवब्रह्मणोरैक्यं विषयस्तद्गताज्ञाननिवृत्तिश्च प्रयोजनमित्येवं विषयप्रयोजनसिद्धिद्वारा पृथक् विचारशास्त्रारम्भः समर्थितः,तथापि विषयप्रयोजने असङ्गते इव भातः। तथाहि—वाक्यविचारात्मकं शास्त्रमिदं न केवलं तर्कादिशास्त्रवद् युक्तिजालोत्प्रेक्षितार्थनिरूपणपरम् अपितु "अनन्यलभ्यः शब्दार्थ" इति न्यायेनाद्वैतात्मकविषयस्य वेदान्तशास्त्रैकवेद्यताऽपि वक्तव्या, सात्वद्याप्यनुपपन्ना। यदि तादृशो विषयोऽन्यतः सिद्धस्तदा विचारशास्त्रवैयर्थ्यम् ? अथाऽसिद्धस्तर्हि निर्विषयविचारोत्थापनमसङ्गतम्। ननु—वेदान्तशास्त्रादेवाऽऽपातप्रतिपन्नविषयस्य फलस्य विशेषप्रतिपत्तये विचारशास्त्रारम्भः सफल इत्युक्तम्? बाढमुक्तम्; तदेव तु न सङ्गच्छते। किमिदमापातप्रतिपन्नत्वं नाम? किं पदात्प्रतीतिमात्रत्वं, वाक्याद्वा ? नाद्यो मानान्तराऽनधिगतेन

ब्रह्मात्मना सह पदसङ्गतिग्रहासम्भवात् । न द्वितीयः—अनवगतसङ्गतिकपदकदम्बरूपाद्वाक्यात्संसृष्टार्थबोधाऽनुत्पत्तेः । सङ्गतिग्रहलोभाय मानान्तरप्रवेशे चोपनिषद्वाक्यानामनुवादकत्वेन प्रामाण्याऽयोगे ब्रह्मण उपनिषन्मात्रैकगम्यत्वराद्धान्तव्याकोपश्चेत्याक्षेपकान्प्रत्याचष्टे—"स्वबोधः" इति ।

**स्वबोधः श्रुतिजातोऽपि न विचारं विनाऽमलः ।**
**अत एव धियः शुद्ध्यै यथाबुद्धि विचार्यते ॥४॥**

श्रुतिजातः अपि="तत्त्वमसि" (छां० ६।१६।३) "अयमात्मा ब्रह्म" (बृ० २।५।१९) इत्येवं महावाक्यरूपया, श्रुत्या वेदवाक्येन जातः, उत्पन्नोऽपि, स्वबोधः=स्वात्मसाक्षात्कारः विचारं विना=ब्रह्ममीमांसां विना, अमलः=शुद्धः असम्भावनाविपरीतभावनात्मकमालिन्यशून्यः न=नैव "भवति" इति शेषः । अत एव=यतो वाक्यप्रयोगे सत्यपि तादृशो बोधो न जायते अतो हेतोः, धियः=बुद्धेः शुद्ध्यै=नैर्मल्यसम्पादनाय अर्थादन्तःकरणनिष्ठाऽसम्भावनाविपरीतभावनात्मकदोषनिबर्हणाय यथाबुद्धि=बुद्धिमनतिक्रम्य वर्त्तते इति यथाबुद्धि—"अव्ययं विभक्ति"—(पाणिनि० २।१।६) इत्यनेन यथार्थेऽव्ययीभावः । बुद्धिबलपूर्वकमित्यर्थः, विचार्यते=अद्वयतत्त्वं मीमांस्यते । "यथाबुद्धी"ति कथनेन परमात्मनोऽनन्तमहिमशालितया तद्विचारस्य प्रकर्षातिशयो व्यज्यते ।

अयमाशयः—धर्मब्रह्मैकविषयस्य काण्डद्वयपरस्य सर्वस्य विचारशास्त्रस्य पुरुषापराधात्मकप्रतिबन्धविनिवृत्तिफलकत्वं वेदवाक्यानां च स्वार्थेऽनुपलब्धे निरपेक्षप्रामाण्यं चेति वेदविद-

ग्रेसराणां जैमिनिमुनिप्रभृतीनां सुसम्मतोऽर्थः । निर्णीतश्चैतत् "अर्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्याऽनपेक्षत्वात्" ( पू० मी० १।१।५ ) इत्यत्र । तत्त्वमस्यादिमहावाक्यजन्यं ज्ञानं च यद्यप्यद्वयात्मतत्त्वं विषयीकुर्वन्निर्भ्रान्तं तथाभूतवस्तुतन्त्रत्वात्तस्य, तथाप्यनेक-शङ्कापङ्ककलङ्कसङ्कुलत्वाज्जातमपि तावद् राज्ञो भर्त्सुवन्निर्भ्रान्तं न भाति दोषाकुलानां जिज्ञासूनां यावद् विचारेण प्रतिबन्धनि-रासो न क्रियेत, प्रतिबन्धनिरासे तु निरपेक्षोपनिषद्वाक्यादवि-द्यानिवृत्तिफलात्मिका ब्रह्मात्मैक्यावधारणस्वरूपा बुद्धिः स्वय-मेवोद्भवतीति युक्तं तदर्थं विचारशास्त्रारम्भणम् । वेदान्तवा-क्यीयप्रमेयाऽसम्भावनापोहद्वारा विचारशास्त्रस्य वेदान्त-वाक्योपकारकत्वं स्यात् न तु वेदान्तवाक्यजन्यप्रमित्युत्पत्तौ, नवा तत्फले साक्षाद्विचारशास्त्रस्याङ्गभावः, तथा सति वेदान्त-वाक्यानां सापेक्षतापातात् । तदुक्तमभियुक्तैः[२]—

स्वाध्यायवन्न करणं घटते विचारो,
नाप्यङ्गमस्य परमात्मधियः प्रसूतौ ।
सापेक्षतापतति वेदगिरस्तथात्वे,
ब्रह्मात्मनः प्रमितिजन्मनि तन्न युक्तम् । इति॥
(सं०शा०१।१८)

अस्यायमर्थः—विचारो नाम मीमांसापरपर्यायो युक्तायु-क्तत्वव्यवस्थापनलक्षणस्तर्कः, स्वाध्यायवद्=वेदवाक्यवत् परमात्म-धियः प्रसूतौ=ब्रह्मात्मैक्यविषयिण्या बुद्धेरुत्पत्तौ करणं=प्रमाणं

---

(१) उक्तश्चाऽभियुक्तैः—
वेदान्तानामनेकत्वात्संशयानां बहुत्वतः ।
वेद्यस्याप्यतिसूक्ष्मत्वान्न जानाति गुरुं विना ॥ इति—
गुरूपसदनमपि विचारस्याऽऽवश्यकतां प्रकटीकरोति ।

(२) सर्वज्ञात्ममुनिभिः संक्षेपशारीरके ।

न घटते = प्रमाणभावं प्राप्तुं नार्हति। तर्को हि विषयपरिशोधको व्यभिचारशङ्कानिवारको वा भवति, नासौ प्रमोत्पत्तौ समर्थः।

उक्तञ्चाचार्येण[1] "तर्को न प्रमाणसङ्गृहीतो न प्रमाणान्तरम्, प्रमाणानामनुग्राहकस्तत्त्वज्ञानाय परिकल्प्यते" इति। अपि च यावत् प्रमाणेन विषयो नावधार्येत तावद्विषयाभावेन तस्याऽप्रवृत्तेः साक्षाद्वस्तुस्वरूपानवगाहित्वेनाप्रमाणत्वान्न वाक्यार्थबोधे विचारः करणमिति भावः। अथ—

धर्मे प्रमीयमाणे हि वेदेन करणात्मना।
इतिकर्त्तव्यताभागं मीमांसा पूरयिष्यति॥ (तन्त्रवार्त्तिके)

इत्यभियुक्तोक्तेः करणीभूतस्य वाक्यस्य प्रमोत्पादने विचारस्याङ्गभावोऽभ्युपगन्तव्य इति ब्रूयात् तत्राह—नाप्यङ्गमस्येति। द्विविधं हीदमङ्गं भवति। स्वरूपोपकार्यङ्गम्, आरादुपकार्यङ्गञ्च। विचारस्तावन्न[2] प्रोक्षणादिवदाग्नेयादेर्वेदस्य स्वरूपोपकार्यङ्गम्,

---

(१) न्यायाचार्येण वात्स्यायनेन।

(२) इदमत्र मीमांसकवृत्तं वेदनीयम्—क्रियारूपाणि कर्माणि द्विविधानि भवन्ति—गुणकर्माणि, प्रधानकर्माणि चेति। एतान्येव सन्निपत्योपकारकाणि आरादुपकारकाणीति चोच्यन्ते। तत्र गुणभूतानि कर्माणि **गुणकर्माणीति** मध्यमपदलोपी समासः। एवमेव प्रधानभूतानि कर्माणि **प्रधानकर्माणि**। गुणकर्मणि द्रव्यस्य प्राधान्यं कर्मणो गुणत्वम्। यथा "व्रीहीनवहन्ति" इत्यत्र व्रीहीणां प्राधान्यम्, अवहननस्य तदङ्गता। प्रधानकर्मणि कर्मणः प्राधान्यं द्रव्यस्य गुणत्वम्। यथा—प्रयाजादौ कर्मणः प्राधान्यम् आज्यादेस्तदङ्गता। तथा चाह सूत्रकारः—**"तानि द्वैधं गुणप्रधानभूतानि"**(पू०मी०२।१।६) **"यैर्द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वात्"**(पू०मी० २।१।७)**"यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रती-**

तद्वदत्र श्रुत्यादेर्विनियोजकप्रमाणाभावात्, स्वाध्यायस्य वेदस्य चानादिस्वतःसिद्धतया स्वरूपसिद्ध्यै कारकानपेक्षणाच्च, स्वार्थबोधनशक्तेस्तस्यौत्पत्तिकतया तत्रापि साहाय्यापेक्षाशून्यत्वाच्च। नापि च विचारो ब्रह्मसाक्षात्कारजनने वेदस्यारादुपकार्यङ्गम्, यथा प्रयाजादिभिराग्नेयादिषु फलानुकूलशक्तिराधीयते तद्वदत्र तत्त्वसाक्षात्कारोत्पादनेऽनुकूलशक्तेराधानाभावादारादुपकारकतापि विचारस्य न युज्यते। विचारनिरपेक्ष एवायं स्वाध्यायः स्वरूपे स्वफले चेति भावः। विपक्षे दण्डमाह— सापेक्षतेति। तथात्वे=विचारात्मकतर्कसाहाय्यापेक्षत्वे वेदगिरः= स्वाध्यायस्य तत्त्वमस्यादिवेदान्तवाक्यस्य ब्रह्मात्मनः प्रमितिजन्मनि= ब्रह्मात्मविषयकप्रमोत्पादने सापेक्षता= पुरुषमतिसाहाय्यापेक्षत्वमापतति, तच्च स्वतःप्रमाणभूते तस्मिन्न युक्तमित्यर्थः। वामदेवादेश्च विनापि विचारेण गर्भ एव ज्ञानोत्पत्तेरिति भावः।

---

येत, तस्य द्रव्यप्रधानत्वात्" (पू०मी० २।१।८) इति। तत्र कर्माङ्गद्रव्याद्युद्देशेन विधीयमानं कर्म सन्निपत्योपकारकम्। यथाऽवघातप्रोक्षणादि। द्रव्याद्यनुद्दिश्य केवलं विधीयमानं कर्म आरादुपकारकम्। यथा प्रयाजादि। सन्निपत्य द्रव्यादिषु सम्बध्य उपकरोतीति "सन्निपत्योपकारकम्"। आरात्साक्षात् द्रव्यादिसम्बन्धमन्तरोपकरोतीति "आरादुपकारकम्"॥ तत्राद्यमेव "स्वरूपोपकार्यङ्ग" मित्युच्यते। प्रकृते तात्पर्यन्तु—यथा प्रोक्षणादिकमाग्नेयादेः स्वरूपमुपकरोति न तथा विचारशास्त्रं वेदस्य स्वरूपमुपकरोति तस्य नित्यसिद्धत्वात्। नापि च यथा प्रयाजादिकमाग्नेयादेः साक्षादुपकारं जनयति तथा विचारो वेदस्य साक्षादुपकारकः तद्वदत्र फलानुकूलशक्त्याधानाभावात्। नहि वेदः स्वार्थप्रमाजनने विचारजनितां काञ्चन शक्तिमपेक्षते तस्य तत्र स्वतन्त्रत्वादिति भावः।

यच्चोक्तं विषयस्यान्यतःप्रसिद्धेर्विचारशास्त्रवैयर्थ्यम्, असिद्धे च निर्विषयविचारोत्थापनमसङ्गतम्, तन्न, यतो न वयं विषयस्यात्यन्ताऽप्रसिद्धिमभ्युपगच्छामो येन विचारशास्त्रस्य निर्विषयत्वेनानुत्थानशङ्काऽऽपाद्येत । नापि च यथावन्निश्चित-स्वरूपत्वेन तस्य सिद्धिं ब्रूमो येन विचारशास्त्रस्य वैयर्थ्यं भवेत् किन्तु वेदान्तेभ्य आपातप्रतिपन्नो वाक्यार्थः किं प्रतीयमानब्रह्मा-त्मैक्यस्वरूपपर्यवसायी ? आहोस्विद्भेदाऽभेदाद्यनेकवाद्युत्प्रेक्षिता-र्थपर्यवसायीत्यन्यप्रवृत्तिशङ्काविधूननेन तन्मात्रैकनिष्ठत्वनिश्च-याय विचारशास्त्रस्यावश्यकतां स्थापयामः । एवञ्च सति न पदा-द्वाक्याद्वा तत्प्रतीतिरित्यादिविकल्पः सावसरः, पदार्थस्य लोकतः सिद्धत्वात् । तथाहि–लोके सन्मात्रविषयकः सच्छब्दो-ऽस्त्यादिशब्दैर्व्यवह्रियमाणः,अद्वितीयशब्दो द्वितीयाभावपरतया एकस्मिन्वस्तुन्यवगतसामर्थ्यः, ब्रह्मशब्दोऽपि बृहत्त्वादिगुणयो-गान्निरवग्रहे महति वस्तुनि स्वसामर्थ्यादेव व्युत्पन्न इत्येवमव्यु-त्पन्नशङ्काऽप्ययुक्ता ।

ननु—सकलस्य विचारस्य पुरुषापराधविनिवृत्तिहेतुत्वे ब्रह्मप्रमितिहेतुत्वाभावः तथा सति विचारशास्त्रस्य ब्रह्म विषयो न स्यात् ? बाढम्, प्रतिबन्धनिरासिनो विचारस्य ब्रह्मनिर्णय-हेतुत्वाद् ब्रह्मविषयत्वोपपत्तेर्नैष दोषः ।

एवञ्च—ब्रह्मात्मनोरैक्यात्मकविषयस्य ब्रह्मसाक्षात्कारमात्रै-कसाध्यत्वाच्च सकलप्रपञ्चनिदानभूततमोनिवृत्तेः प्रयोजनस्यापि सिद्धत्वाद्विचारशास्त्रस्य वैयर्थ्यशङ्का वादिनां भ्रममात्रमेवेति ज्ञातव्यम् । विचारस्यावश्यकता पूज्यपादैर्विवेकचूडामणावपि प्रादर्शि—

वेदान्तार्थविचारेण जायते ज्ञानमुत्तमम् ।
तेनात्यन्तिकसंसारदुःखनाशो भवत्यनु ॥ (४७)

इति सन्दर्भेणेति संक्षेपः ।

इदन्तु बोध्यम्—सामान्यतो द्विविधः पुरुषदोषः । एकस्तु शब्दशक्तेस्तात्पर्यस्य च विपरीतनिश्चयः, परश्च प्रत्यक्षादिप्रमाणविरोधेनाद्वैतशास्त्रे निश्चयाभावः । तत्र—प्रथमस्य समन्वयाध्यायेन निवृत्तिः, द्वितीयस्याऽविरोधाध्यायेनेति ॥४॥

सङ्गति—अब उक्त अर्थ को प्रकारान्तर से दृढ करते हैं—

पदार्थ—श्रुतिजातोऽपि=तत्त्वमस्यादि महावाक्यों द्वारा उत्पन्न हुआ भी स्वबोधः=स्वात्मसाक्षात्कार विचारं विना=विचार के विना अमलः=दोषरहित अर्थात् संशयविपर्ययनिरासपूर्वक फलपर्यवसायी न=नहीं होता । अत एव=इसलिये धियः शुद्धयै=बुद्धि की निर्मलता के वास्ते अर्थात् अन्तःकरणनिष्ठ असम्भावनादि दोषों की निवृत्ति के लिये यथाबुद्धि=बुद्धि के अनुसार विचार्यते=विचार

(१) अस्यायमर्थः—वेदान्तानां निर्विशेषब्रह्मनिष्ठानामुपनिषद्वचसां योऽर्थस्तात्पर्यगोचरोऽद्वैतात्मा तस्य विचारेण=उपक्रमादिषड्विधलिङ्गलक्षिततात्पर्यविगतमद्वैतात्मतत्त्वमेव वेदान्तप्रमेयमित्येवंरूपेण मननेन उत्तमं साक्षान्मोक्षोपायभूतं ज्ञानं=साक्षात्कारो जायते, तदनु आत्यन्तिकसंसारदुःखनाशः=आत्यन्तिकः स्वसमानाधिकरणदुःखप्रागभावाऽसमानकालीनो यो दुःखध्वंसः स भवतीत्यर्थः 'तरति शोकमात्मवित्' (छां० ७।१।३) इति श्रुतेः ।

(२) अधिकन्तु विवरणप्रमेयसङ्ग्रहादिषु द्रष्टव्यमित्याह—"सङ्क्षेपः" इति ।

प्रस्तुत किया जाता है। इस प्रकार विचारशास्त्र का आरम्भ प्रयोजन वाला है निष्प्रयोजन नहीं।

यहां अभिप्राय यह है कि—यद्यपि तत्त्वमस्यादि महावाक्य स्वतः प्रमाणभूत वेदरूप होने के कारण स्वजन्य प्रमा की उत्पत्ति में किसी अन्य प्रमाणादि की अपेक्षा नहीं करते तथापि जिन जिज्ञासुजनों के अन्तःकरण में असम्भावना विपरीतभावनादि दोष विद्यमान हैं उनको महावाक्यश्रवणोत्तर वाक्यार्थबोध होने पर भी यथार्थ-ज्ञान नहीं होता, जैसा कि—भर्च्छु के साथ राजा के चक्षुरिन्द्रिय का सम्प्रयोग = सम्बन्ध होने पर भी "नायं भर्च्छुः प्रेत एव" इस प्रकार उसकी प्रेतबुद्धि दूर नहीं हुई, क्योंकि मन्त्रियों के कुसंस्कार द्वारा उस के हृदय में विपरीतबुद्धि दृढ हो चुकी थी। यदि विचार (मीमांसा) शास्त्र का आरम्भ न किया जाय तो दुष्ट अन्तः-करण वाले जिज्ञासुओं को निर्भ्रान्त ज्ञान की प्राप्ति नहीं हो सकती, अतः प्रमेयगत असम्भावनादि दोषों की निवृत्ति के लिये सर्वथा विचारशास्त्र का आरम्भ सफल जानना चाहिये।

यहां इतना और ध्यान रहे कि—सामान्यतः पुरुष-

(१) भर्च्छु और राजा की विस्तृत कथा के लिए श्रीनिश्चलदास कृत "विचार सागर" का पञ्चम तरङ्ग (पद्य १८-११९) देखें।

दोष दो प्रकार का होता है प्रथम—शब्दशक्ति तथा तात्पर्य का अन्यप्रकार से निश्चय कर बैठना। दूसरा-प्रत्यक्षादि प्रमाणों के साथ विरोध मानकर अद्वैतशास्त्रोक्त अर्थ में निश्चय न करना। प्रथमदोष की निवृत्ति "समन्वयाध्याय" गत विचार से होती है, दूसरे दोष की निवृत्ति "अविरोधाध्याय" के विचार से जान लेनी ॥४॥

धर्मार्थकाममोक्षेषु पुमर्थेषु परोऽन्तिमः ।
नित्यानवधिकानन्दस्वरूपत्वादिति स्थितिः ॥५॥

इतः पूर्वमनुबन्धचतुष्टयसमर्थनमुखेन विचारशास्त्रारम्भः समर्थितः, सम्प्रत्यधिकारिजनानां विशिष्टप्रवृत्तिलाभाय सकलपुरुषार्थमौलिभूतस्य मोक्षाख्यस्य परमप्रयोजनस्य प्राधान्यं दर्शयति चतुर्भि"र्धर्मार्थे"त्यादिभिः। तत्र ध्रियते जनैर्धरति वा लोकानिति "धर्मः"। "अर्तिस्तुसु"—( उ० १।१४५ ) इत्यादिना धृञो "मन्" प्रत्यय औणादिकः। सच—धर्मश्चोदनालक्षणः पूर्वस्यां मीमांसायां विशिष्टरूपेण चिन्तितः स्वर्गादिक्षयिष्णुफलो नानारूपो यागादिक्रियाजनितः संस्कारविशेषोऽपूर्वाख्यः, अथवा स्वर्गादीष्टफलप्राप्तिकारणं यजत्यादिक्रियाकलापः "यो हि यागमनुतिष्ठति तं धार्मिक इति समाचक्षते, यश्च यस्य कर्त्ता स तेन व्यपदि-

(१) "स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः" इत्यमरः। धर्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ। अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे" इति च कोषान्तरम् ॥

श्यते, यथा पावको लावक इति तेन यः पुरुषं निःश्रेयसेन संयुनक्ति स धर्मशब्देनोच्यते' इति शबरोक्तेः (पू०मी० १।१।१) अर्थः=अर्थ उपयाञ्चायाम् चौरादिकः। ततः—"अकर्त्तरि च कारके संज्ञायाम्" (३।३।१९) इति सूत्रेण घञ्। अर्थ्यतेऽभ्यर्थ्यते विषयोपभोगलम्पटैर्विषयसुखप्राप्तिसाधनत्वेनासावर्थो द्रव्यादिः, अर्जनवर्धनरक्षणात्मकः कृषिपाशुपाल्यवाणिज्यसन्धिविग्रहादिपरिवारः तीर्थप्रतिपादनफलश्च। काम:[2]="कमु कान्तौ" धातुर्भौवादिको घञ्प्रत्ययान्तः। काम्यतेऽसौ कामः विषयेन्द्रियसम्बन्धजनित उपभोगः। उक्तञ्च मधुसूदनसरस्वतीभिः "शक्नोतीहैव यः सोढुम्"—(भ० गी० ५।२३) इतिश्लोकव्याख्यायाम्—"आत्मनोऽनुकूलेषु सुखहेतुषु दृश्यमानेषु श्रूयमाणेषु स्मर्यमाणेषु वा तद्गुणानुसन्धानाभ्यासेन यो रत्यात्मको गर्धोऽभिलाषः (पुरुषस्य स्त्रीविषयकः, स्त्रियश्च पुरुषविषयकः) तृष्णा लोभः स कामः" इति। मोक्ष:[3]=मोक्षणं दुःखावसानं मोक्षः। "मोक्ष अवसाने" चौरादिकः "एरच्" (३।३।५६) इत्यचि निष्पन्नः। अथवा (३।३।१९) इति घञन्तः। एवं च स दुःखात्यन्तनिवृत्तिलक्षणः। धर्मश्चार्थश्च कामश्च मोक्षश्चेति चतुर्णां द्वन्द्वः। तेषु धर्मार्थकाममोक्षेषु चतुर्विधेषु पुमर्थेषु=पुरुषार्थेषु पुम्भिरर्थ्यमानेषु अन्तिमः=अन्ते भवोऽन्तिमश्चरमः पुमर्थः मोक्ष इत्यर्थः परः=सर्वोत्कृष्टः, अस्तीति शेषः। उक्तार्थे[4] हेतुमाह—नित्यानवधिकानन्दस्वरूपत्वादिति। तत्र

---

(१) "अर्थो विषयार्थनयोर्धनकारणवस्तुषु। अभिधेये च शब्दानां निवृत्तौ च प्रयोजने" इति मेदिनी। 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः।

(२) "कामः स्मरेच्छयोः पुमान्। रेतस्यपि निकामे च काम्येऽपि स्यान्नपुंसकम्" इति मेदिनी।

(३) "मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम्। मोक्षोऽपवर्गः" इत्यमरः।

(४) मोक्षस्य परमपुमर्थत्वरूपायां प्रतिज्ञायामित्यर्थः।

नित्यं त्रैकालाबाध्यमेकरसम्, अनवधिकमनन्तं पुनरावृत्तिशून्यम्, तादृशं तदानन्दस्वरूपं भूमाख्यं तस्य भावस्तत्त्वाद्धेतोरित्यर्थः। इति स्थितिः=इत्येषा मोक्षस्य परमपुमर्थतारूपा स्थितिर्मर्यादा शास्त्रस्य निष्पीडितः सिद्धान्त इत्यर्थः। "अथ परा यया तदक्षरमधिगम्यते" ( मुं० १।१।५ ) इति श्रुतेः।

इदमिह सम्प्रधार्यम्—पुरुषैरर्थ्यमानत्वाच्चत्वार एव पुरुषार्थपदेनाभिलप्यमानाः पदार्था धर्मोऽर्थः कामो मोक्षश्चेति। तत्र यद्यपि सर्वेषां जनानां धर्मे तदनुष्ठाने च श्रद्धा न दृश्यते पापाचरण एव बहूनां प्रवृत्तिदर्शनात्, तथापि यथा परं शरीरस्वास्थ्यं कामयमाना अपि लोकाः स्वबुद्धिमान्द्याद्वा रसातिरेकाद्वा युक्तमाहारं विहारं परित्यज्य, परिवर्ज्य च तेषु तेषु कर्मसु युक्तां चेष्टां, पानाशनव्यवायपरायणाः सन्तो नानाविधै रोगैः पीड्यमानाः स्वप्नेऽपि स्वास्थ्यकामनां न मुञ्चन्ति, प्रत्युत तदर्थं बहूनुपायान् रचयन्त इतस्ततो धावमाना अवलोक्यन्ते, एवमेव पापस्य फलं दुःखमनीहमाना धर्मस्य फलं सुखञ्च वाञ्छन्तोऽपि जनाः कामक्रोधलोभाद्यमहारिपरिभूताः अनाचरन्तोऽपि धर्मं तद्धर्मेप्सया व्याप्ताः सन्तः सन्ति धर्मार्थिनः–इत्यकामेनापि मन्तव्यं भवतीति धर्मस्यास्ति सार्वभौमः पुमर्थभावः। उक्तञ्च भगवता—

इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ।
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥( भ० गी० ३।३४)

इति।

(१)बाह्यैरपि यैः कैश्चन ये केऽपि नियमाः संचाल्यन्ते स्वसभासमाजसंरक्षणाय तेऽप्यन्ततो विचार्यमाणाः कथञ्चन धर्मस्वरूपान्नातिरिच्यन्त इत्येवं मन्यते धर्मस्य सार्वभौमता।

अर्थकामयोस्तु पुमर्थता प्रसिद्धैव। मोक्षात्मके चतुर्थे पुमर्थे नानावादिविवादे सत्यपि दुःखात्यन्तनिवृत्तिपरानन्दावाप्तिरूपमेव तस्य मुख्यं स्वरूपं सेद्धुमर्हति, यतः सर्वे दुःखात्यन्तनिवृत्तिं वाञ्छन्तः परानन्दावाप्तिमपि कामयन्ते "सुखं मे निरतिशयं भूयान्मात्रयाऽपि दुःखं न स्याद्" इति प्रत्यात्मवेदनीयत्वादस्या आशिषः इत्यवोचाम।

एवं स्थिते चतुर्विधे पुरुषार्थे मोक्षस्यैव नित्यानवाधिकानन्दस्वरूपत्वात्प्राधान्यं परमपुरुषार्थत्वञ्चेति "न च पुनरावर्त्तते" (छां० ८।१५।१) "न स पुनरावर्तते" (कालाग्निरुद्रोपनिषत्) "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" (बृ० ४।३।३२) "आनन्दो ब्रह्मेति व्यजानात्" (तै० ३।५) "विज्ञानमानन्दं ब्रह्म" (बृ०३।९।२८) "ब्रह्म वेद ब्रह्मैव भवति" (मुं०३।२।९) "तरति शोकमात्मवित्" (छां० ७।१।३) इत्यादिश्रुतिभ्यः।

आब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्जुन।
मामुपेत्य तु कौन्तेय ! पुनर्जन्म न विद्यते ॥ (भ० गी० ८।१६)

इत्यादिस्मृतिभ्यश्च।

"कैवल्यरत्ने"ऽपि मोक्षस्यैव प्राधान्यमुक्तम्—

भूमानन्दं परं ब्रह्म स्वयमेव फलं महत्।
पुरुषार्थतयाऽतस्तद्वेदान्तैः प्रतिपाद्यते ॥ (मान०उपपु०अ०४) इति।

इतरे तु त्रयोऽपि पुरुषार्थाः प्रत्यक्षेण, "तद्यथेह कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयते" (छां० ८। १। ६) इत्यादिश्रुतेश्चाऽनित्यत्वादिदोषसंवलितत्वान्न सन्ति प्रधानभावं भजमाना इत्यर्थः।

---

(१) विशिष्टो विचारस्त्वग्रे नवमश्लोकव्याख्यायां द्रष्टव्यः।

नच—काम्यमानत्वेन धर्मादीनामविशेषात् "धर्माद्या नित्याः पुरुषार्थत्वान्मोक्षवत्" इत्यनुमानेनेतरेषामपि नित्यतया समप्राधान्यमेवेति वाच्यम्, अनुमानस्य प्रत्यक्षादिबाधितविषयत्वात् । "धर्माद्या अनित्या जन्यत्वात् घटादिवदि"ति सत्प्रतिपक्षितत्वाच्च । अनुमानयोः समबलत्वेनान्यस्याऽन्येन न बाध इति चेद् ? श्रुतिबाधस्त्वपरिहार्य इति जानीहि ।

ननु—मा भूदर्थकामयोर्नित्यफलकत्वं प्रत्यक्षबाधात् धर्मस्य नित्यफलकत्वे तु श्रुतिरेव मानम् । तथाहि—

"अपाम सोममममृता अभूम, अगन्म ज्योतिरविदाम देवान्,
किन्नूनमस्मान् कृणवदरातिः किमु धूर्त्तिरमृतमर्त्त्यस्य ।

" अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति " ( शतपथ० २।६।३।१ ) इत्येवञ्जातीयका, तत्कथमुच्यते क्षयिष्णुफलत्वाद्धर्मस्याप्राधान्यमिति । अत्रोच्यते—"यत्कृतकं तदनित्यम" इति सामान्यतोदृष्टानुमानानुगृहीतया "तद्यथेऽ"त्यादिश्रुत्या "अक्षय्य"मिति श्रुतिः प्रलयपर्यन्तस्थायिफलाभिप्रायपरतयैव नेष्यत इत्यदोषः । आहुश्चाऽभियुक्ताः "आभूतसंप्लवं स्थानममृतत्वं हि

---

(१) इयं श्रुतिर्गौडपादाचार्यैरित्थं व्याख्याता—कदाचिदिन्द्रादिदेवानां कल्पः (समाजः) आसीत् कथं वयममृता अभूमेति, विचार्य यस्माद्वयम **अपाम सोमं**=पीतवन्तः सोमम्, तस्मात् **अमृता अभूम**=अमरा भूतवन्तः, किञ्च **अगन्म**=गतवन्तो लब्धवन्तो **ज्योतिः**=स्वर्गमिति, **अविदाम देवान्**=दिव्यान् ( पदार्थान् ) विदितवन्तः । एवञ्च-**किन्नूनमस्मान् कृणवदरातिः**=नूनं निश्चितं किमरातिः शत्रुरस्मान् कृणवत् कर्त्तेति, **किमु धूर्त्तिरमृतमर्त्त्यस्य**—धूर्तिर्जरा वा हिंसा वा किं करिष्यति, अमृतमर्त्त्यस्य=अमरशरीरस्येत्यर्थः ।

(२) ब्रह्माहःपर्यन्तं यत्स्थानं तदेवामृतमुपचारादुच्यते । अस्योपचारे बीजन्तु उत्तरार्धे दर्शितं यथा—"त्रैलोक्यस्थितिकालोऽयमपुनर्मार उच्यते" इति ।

भाष्यते" (विष्णुपु० अंश० २ अ० ५ श्लो० ९६ ) इति । धर्मस्य चाऽनित्यफलकत्वं ब्रह्मात्मैक्यज्ञानस्य मोक्षात्मकनित्यफलकत्वं श्रुत्यन्तरेष्वपि प्रसिद्धम् । "न कर्मणा न प्रजया न धनेन त्यागेनैके अमृतत्वमानशुः" ( कै० १।३) "प्लवा ह्येते अदृढा यज्ञरूपाः" (मुं०१।२।७) "यत्कर्मिणो न प्रवेदयन्ति रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते" (मुं० १।२।९) "परीक्ष्य लोकान्कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन"(मुं०१।२।१२) इत्यादिषु । स्मृतिश्च सवत्यस्यार्थस्य साधिका—

दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय ।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः॥(भ०गी०२।४९)इति।
"क्षीणे पुण्ये मर्त्यलोकं विशन्ति"(भ०गी० ९।२१) इति च।

मोक्षस्य प्राधान्यञ्च श्रीमद्भागवतस्य प्रथमस्कन्धे द्वितीयाध्यायेऽप्युक्तम्—

धर्मस्य ह्यापवर्ग्यस्य नार्थोऽर्थायोपकल्पते ।
नार्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृतः (९) ॥
कामस्य नेन्द्रियप्रीतिर्लाभो जीवेत यावता ।
जीवस्य तत्त्वजिज्ञासा नार्थो यश्चेह कर्मभिः (१०) ॥ इति

अस्यायमाशयः—यद्यपि "धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते"(महाभार०) इति वेदव्यासोक्तेः धर्मस्य फलमर्थः, अर्थस्य च कामः, तस्येन्द्रियप्रीतिरतः पुनरपि धर्मार्थादिपरम्परैव सेव्येत्याभाति तथापि भगवद्भक्तिद्वारा विवेकवैराग्यपर्यन्त एव परो धर्मो निषेवणीयः यतोऽपवर्गप्राप्तियोग्यतासम्पादनपरस्य धर्मस्यार्थप्राप्तिमात्रं फलं न शास्त्रासीष्टम्, तथाऽर्थस्याप्यैकान्तिकं फलं कामो न मन्तव्यः, सेव्यमानेऽपि कामे दुःखैकफलानां विषयवासनानामनिवृत्तेः । तदेतद् ययातिगीतेन सुस्पष्टम्—

( १ ) अत्र—"परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः"(यो० २।१५)इति पातञ्जलं वचोऽपि निध्यातव्यम्।

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ इति ।
(महाभार० १६९५३; १७९'१२)

ततश्चार्था नैकान्तभावेन कामफलाय व्यवहर्त्तव्याः किन्तु भगवदर्पणबुद्धयैव पात्रेषु विनियोजनीयाः—

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय ! तत्कुरुष्व मदर्पणम् ॥ (भ० गी० ९।२७)

इति भगवदुक्तेः। एवं कामस्यापि केवलमिन्द्रियप्रीतिरेव फलं न निश्चेतव्यम् तत्प्रीतेः काककुक्कुरादिजन्मसु सहस्रशोऽनुभूतचरत्वात् स्वरूपे वैषम्याभावाच्च । किन्तु यावता शरीरयात्रा-जीवनं निर्वहेत् तावानेव कामः सेव्य इतीदमेव तस्य फलम् । अत एव श्रीमद्भागवते द्वितीयस्कन्धे परीक्षितं प्रति शुकेनोक्तम्—

सत्यां क्षितौ किं कशिपोः प्रयासै-
र्बाहौ स्वसिद्धे ह्युपबर्हणैः किम् ।
सत्यञ्जलौ किं पुरुधान्नपात्र्या,
दिग्वल्कलादौ सति किं दुकूलैः ॥ (२।२।४)

इत्यादि ।

कोशकारवद्बन्धनप्रदैः कर्मभिर्न सुख्यं प्रयोजनम्, दुर्लभतरं मानुषं जन्म लब्ध्वाऽपि कामकर्मपरायणतैव नेष्टा अपि तु तत्त्वजिज्ञासैव कर्मणां फलं मन्तव्यम् । "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" (बृ० ४।४।२२) इति श्रुतेः । तस्मात् कर्मणां विविदिषोत्पादन एव मुख्य-उपयोगः शास्त्रसम्मतः। ग्रन्थकारोपि द्वितीयपरिच्छेदे धर्मस्य विद्योत्पत्तावेवापेक्ष्यता वदिष्यति—

तमेतमिति वाक्येन संयोगस्य पृथक्त्वतः ।
विद्योत्पत्तावपेक्ष्याणि कर्माणीति व्यवस्थया ॥

( वि० बि० २ । ३१० )

इत्यनेन । अधिकं तत्रैव व्याख्यास्यामः । श्रुतिरपि त्यागेऽनधिकारिणा कर्मकर्त्तव्यतां दर्शयति—

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳसमाः ।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ (यजु० ४०।२)

इत्येवंरूपा । पूज्यपादाश्च विवेकचूडामणौ अमृतीभावस्य कर्मऽसाध्यत्वं ब्रुवाणाः कर्मणां चित्तशुद्धिमेव मुख्यं फलमवतारयाम्बभूवुः ।

अमृतत्वस्य नाशास्ति वित्तेनेत्येव हि श्रुतिः ।
ब्रवीति कर्मणो मुक्तेरहेतुत्वं स्फुटं यतः ॥ ७ ॥ इति ॥
चित्तस्य शुद्धये कर्म न तु वस्तूपलब्धये ।
वस्तुसिद्धिर्विचारेण न किञ्चित्कर्मकोटिभिः ॥ ११ ॥ इति च ।

अत एवोपदेशसाहस्यामीक्षितृत्वप्रकरणे पद्यप्रबन्धे—

न ततोऽमृतताऽऽशास्ति कर्मणोऽज्ञानहेतुतः ।
मोक्षस्य ज्ञानहेतुत्वान्न तदन्यदपेक्षते ॥ ( ११ । १५ )

इति तस्य ज्ञानैकसाध्यत्वेन मुख्यत्वमाचचक्षिरे ।

अन्यत्रापि—

योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ॥ (भ०गी० ५।११)
कषायपक्तिः कर्माणि ज्ञानन्तु परमा गतिः ।
कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्त्तते ॥१॥

---

(१) श्रीमच्छारीरकभाष्य—( ब्र० सू० ३ । ४ । २६ )—गतमिदं स्मृत्युद्धरणम् ।

नैष्कर्म्यसिद्धावप्युक्तम्—

"शुध्यमानन्तु तच्चित्तमीश्वरार्पितकर्मभिः ।
वैराग्यं ब्रह्मलोकादौ व्यनक्त्याशु सुनिर्मलम्" ( नै० १।४७)

इत्यतः कर्मणां वेदनहेतुभाव एव मुख्यं,फलम्,अन्यत्त्वानुषङ्गिकम्। आह चापस्तम्बोऽपि "तद्यथाऽऽम्रे फलार्थे निमिते छायागन्धावनूत्पद्येते, एवं धर्ममपि चर्यमाणमर्था अनूत्पद्यन्ते । नो चेदनूत्पद्यन्ते न धर्महानिर्भवति । ( प्रथ० प्रश्न० पटल० ७ ) इति ।

अयमभिसन्धिः—सन्ति धर्मार्थकामा अपि पुरुषार्थाः, तेषां पुमर्थभावं न वारयामः किन्तु स्वरूपतः फलतोऽनित्याः, सावधयः, सान्ताः पर्यवसाने दुःखफलाश्चेति न नित्यानवधिकानन्दस्वरूपं मोक्षमतिशय्य वर्तन्ते इत्यप्रधानपुमर्थजातं परित्यज्य परमसुखार्थिभिः प्रधाने पुरुषार्थ एवाभिनिवेष्टव्यम, "प्रधाने च कृतो यत्नः फलवान् भवती"ति महाभाष्यकृदुक्तेः। एतदभिप्रायेणैव गीतायामप्युक्तम्—

उद्धरेदात्मनात्मानं नात्मनमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ( भ०गी० ६।५)
बन्धुरात्माऽऽत्मनस्तस्य येनात्मैवात्मना जितः ।
अनात्मनस्तु शत्रुत्वे वर्त्तेतात्मैव शत्रुवत् ॥ ( भ० गी० ६।६)

इति शिवोम् ॥५॥

**सङ्गति—अब जिज्ञासुजनों की विशेषप्रवृत्तिलाभ के अर्थ धर्मादि चार प्रकार के पुरुषार्थों के मध्य मोक्ष की प्रधानता कथन करते हैं—**

**पदार्थ**—धर्मार्थकाममोक्षेषु=धर्म, अर्थ, काम, मोक्ष नामक पुमर्थेषु=चार प्रकार के पुरुषार्थों के मध्य अन्तिमः=अन्त में

होने वाला अर्थात् मोक्ष परः=सबसे उत्कृष्ट (प्रधान पुरुषार्थ) है, नित्यानवधिकानन्दस्वरूपत्वात्=क्योंकि यह नित्य=त्रैकालिक बाध से रहित एकरस, अवधिशून्य=अनन्त तथा आनन्द-स्वरूप है, इति स्थितिः=यही वेदादि शास्त्र का सिद्धान्त है।

भाव यह कि—वेदविहित यागादि क्रिया, अथवा तज्जन्य स्वर्गादिफल के हेतुभूत अपूर्वविशेष का नाम "धर्म" है। भोग के साधन द्रव्यादि को "अर्थ" विषयोपभोग को "काम" तथा सकल दुःख की अत्यन्तनिवृत्ति परानन्दप्राप्ति (निरतिशय आनन्द) को "मोक्ष" कहते हैं। इन चारों की "पुरुषार्थ" सञ्ज्ञा इसलिये है कि—यही चारों पदार्थ पुरुष की इच्छा के विषयीभूत हैं, अन्य सब का (जिस को प्राणी चाहता है) इन्हीं चारों में अन्तर्भाव हो जाता है। परन्तु धर्मादि तीन पुरुषार्थ नाशवान अनित्यफलवाले, अतिशयादि दोषों से युक्त तथा पर्यवसान में दुःखरूप फल के देने वाले हैं। यद्यपि "धर्म" से स्वर्गादि इष्टफल की प्राप्ति कथन की गई है तथापि उस से अशरीरभाव (मोक्ष) की प्राप्ति नहीं हो सकती। जब तक अशरीरभाव प्राप्त नहीं होता तब तक जन्मपरम्परा की समाप्ति असम्भव है। अतः धर्म भी अन्त में दुःखरूप फल का देने वाला माना है, निरतिशयानन्द का हेतु नहीं।

गीता में भगवान् कथन करते हैं—" क्षीणे पुण्ये मर्त्यलोकं विशन्ति " (९।२१) अर्थात् पुण्य क्षय होने पर पुनः स्वर्गी जीव भी मर्त्यलोक को प्राप्त होते हैं। परन्तु मोक्षरूप पुरुषार्थ आनन्दघन एकरस अनन्तकालस्थायी ( निरवधि ) होने से " प्रधान " और अन्य तीन " अप्रधान " हैं । अतएव शास्त्रों में मोक्ष को " परमपुरुषार्थ " कहा है । जिज्ञासुजन के लिये उचित है कि वह धर्मादि तीनों में अभिनिवेश न करके मोक्ष में विशेष आग्रह करे । इस प्रकार मोक्ष की प्रधानता कथन करने से जिज्ञासु के मुमुक्षुत्वरूप विशेषण की दुर्लभता और अत्यावश्यकता अर्थसिद्ध जान लेनी ॥५॥

अत एव हि शास्त्रेषु मोक्षः प्रशस्यते यथा ।
न धर्मोऽपि न चार्थो वा कामः प्रशस्यते तथा ॥६॥

उक्तमेवार्थं द्रढयति—"अत एव" इति। अत एव=यस्मात् चतुर्विधेषु पुमर्थेषु मध्ये नित्यानवधिकानन्दस्वरूपत्वान्मोक्षस्यैव परत्वं सर्वश्रैष्ठ्यं तस्मात्, उक्तहेतुबलादेवेत्यर्थः यथा=येन प्रकारेण शास्त्रेषु=शास्ति अनधिगतमबाधितं हितमिष्टमिति शास्त्रमृग्वेदादि, तदनुषङ्गितयाऽन्यदपि ऋषिप्रणीतं स्मृत्यादि, तेषु शास्त्रेषु वेदादिग्रन्थेषु मोक्षः=तुरीयः पुरुषार्थः प्रशस्यते=स्तूयते मुख्यतया तात्पर्यविषयत्वेन प्रतिपाद्यत इति यावत्, तथा=तेन प्रकारेण तद्वदित्यर्थः, नापि धर्मः, न च अर्थः, न वा कामः प्रशस्यते=एकान्तफलकत्वेन धर्मादिरेव सेव्य इत्यत्र शास्त्रस्य तात्पर्यं नास्ति,

किन्तु मुक्तिमार्गप्रवणतासम्पादनायैव तत्र तत्र प्रथमादिभूमिकारूपेण धर्मादिरवान्तरः पुमर्थोऽवतारितः। उक्तश्च श्रीमद्भागवते—

धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः।

नोत्पादयेद्यदि रतिं श्रम एव हि केवलम् ॥ (१।२।८)

भगवताऽप्युक्तम्—

यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः।

तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥ (भ० गी० ३।९) इति।

कायेन मनसा वाचा केवलैरिन्द्रियैरपि।

योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये॥ (भ०गी० ५।११) इति।

श्रुतिरपि मोक्ष एव परः पुरुषार्थ इत्यभिप्रायेणाज्ञानिनो निन्दति—

असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः।

तांश्स्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥(यजु०४०।३)इति।

तथाचात्मज्ञानस्य महिमानमुद्घोषयन्ती शोकमोहात्ययं कथयति—

यस्मिन्सर्वाणि भूतान्यात्मैवाऽभूद्विजानतः।

तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ (यजु० ४०।७) इति।

बह्वृचब्राह्मणोपनिषदि च कर्मासक्तिभाजां प्रमादिनां घृणितं फलं प्रदर्शितम्। तथाहि—

"तस्मान्न प्रमाद्येत्तन्नातीयान्नह्यत्यायन् पूर्वे येऽत्यायंस्ते पराबभूवुः" इत्यारभ्य "या वै ता इमाः प्रजास्तिस्रोऽत्यायमायंस्तानीमानि वयांसि वङ्गावगधाश्चेरपादाः" इति विषयासक्तिभाजां प्रमादिनां निन्दया धर्मादीनां त्रयाणामप्राशस्त्यमेव व्यक्तीकृतमिति कृतधियां परामर्शः।

महर्षिणा मनुनापि—

यथोक्तान्यपि कर्माणि परिहाप्य द्विजोत्तमः।

आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान् ॥ (मनु० १२।९२)

इत्यनेनात्मज्ञानं प्रशंसता मोक्षस्यैव परमपुरुषार्थत्वं स्पष्टी-

कृतमित्यपि पूर्वापरपर्यालोचनेन सम्यगवसीयते । तस्माद्युक्तं मोक्षस्येतरापेक्षया प्रशस्तत्वमितरेषाञ्चाऽप्रशस्तत्वमतः स एवोपादेयो मनीषिभिः ।

"हिः" पादपूरणो वाक्यार्थनिश्चायको वेति ज्ञेयम् ॥६॥

सं०—अब उक्त अर्थ को अन्य प्रकार से दृढ करते हैं—

पदार्थ—अत एव=नित्य निरतिशयानन्दस्वरूप होने के कारण यथा=जैसे शास्त्रेषु=वेदादि शास्त्रों में मोक्षः=मोक्ष प्रशस्यते=प्रशस्त कहा गया है, तथा=वैसे नापि धर्मः=न ही धर्म न च अर्थः=न ही अर्थ को प्रशस्त कहा है, वा=और कामः=काम भी न प्रशस्यते=प्रशस्तरूप से कथन नहीं किया गया है।

भाव यह कि एकमात्र मोक्ष ही परमपुरुषार्थ है अन्य सब गौण पुरुषार्थ हैं।

इस श्लोक में "हि" पद पादपूरणार्थक अथवा वाक्यार्थ का निश्चायक जानना चाहिए ॥६॥

**धर्मः कथञ्चिदन्येषां हेतुरर्थस्तथाविधः ।**
**कामोऽनर्थप्रवृत्तेश्च तस्मात्तेषु न सत्क्रिया ॥७॥**

सम्प्रति कामस्यात्यन्तं वर्जनीयतां ब्रुवाण उक्तमेवार्थं द्रढयति—"धर्म" इति । धर्मः=वेदविहितो यागादिश्चोदनालक्षणोऽर्थः[1] कथञ्चित्=केनापि प्रकारेण अत्यन्तं बहिर्मुखतया निषिद्धप्रवृत्तिभाजां स्वर्गादिप्ररोचनाद्वारा, सन्मार्गे प्रवृत्तानां वाऽन्तः-

(१) "वेदप्रतिपाद्यः प्रयोजनवदर्थो धर्मः" इति फलितलक्षणः ।

करणशुद्धिद्वारा अन्येषाम्=अर्थकाममोक्षाणां हेतुः=कारणम् "अस्ती"ति शेषः। अर्थः=अर्थोऽपि द्रव्यादिः पूर्वोक्तः तथाविधः= अन्येषां धर्मादीनां कथञ्चिद्धेतुः दानेज्यादिसत्कर्मसु व्ययीकरणादर्थेनापि धर्माद्युत्पत्तेः। किन्तु कामः=विषयोपभोगः उपभोगजनिता विषयवासना वा अनर्थप्रवृत्तेश्च=अनर्थप्रवृत्तेरेव (हेतुः=कारणम्,) कामस्य मुख्यरूपत्वेन नरकद्वारत्वात्,"त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः। कामः" इति भगवदुक्तेः। तस्मात्=कारणात् तेषु= धर्मार्थकामेषु न=नैव सत्क्रिया=सत्कारः शास्त्रस्येति शेषः। धर्मादिषु त्रिषु वेदादिशास्त्रस्य तात्पर्यरूपत्वेनादरो नास्तीति भावः।

इदमत्राकूतकम्—"यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्। ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः॥ (यजु० ) इति मन्त्रे धर्मस्य स्वर्गादिकं फलमाम्नातम् तेन चार्थकामावाप्तिरप्यवश्यम्भाविनीति धर्मस्त्रयाणां हेतुः। "कुर्वन्नेवेह कर्माणि"= इति मन्त्रवर्णे भगवदर्पणबुद्ध्या क्रियमाणो धर्मः पापासंस्पर्शितया ऽन्तःकरणं शोधयन् वैराग्याद्युत्पादनमुखेन परम्परया मोक्षस्यापि कथञ्चिद् भवेत्कारणमित्युक्तम्। भगवतापि—

कर्मण्येवाऽधिकारस्ते मा फलेषु कदाचन।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि॥ (भ० गी० २.४७)

इति फलाभिसन्धिवर्जनपुरस्सरं कर्मोपदिशता अन्तःकरणशुद्धावेव धर्मस्य मुख्योपयोगिता आम्नाता। व्यासश्च भगवान् धर्मादेवार्थकामयोरवाप्तिं स्पष्टमाचष्टे—

ऊर्ध्ववाहुर्विरौम्येष न च कश्चिच्छृणोति मे।
धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते॥ (महा भार०) इति।

तदेवं धर्मस्य त्रितयहेतुत्वं कथञ्चिदवतारितमपि शास्त्रे,

कामस्तु सर्वथैवानर्थहेतुरिति सुतरां तस्य पुमर्थाभासतैवेति नात्र कापि विचारणा । तथा च काठके—

श्वोभावा मर्त्यस्य यदन्तकैतत्
सर्वेन्द्रियाणां जरयन्ति तेजः ।
अपि सर्वं जीवितमल्पमेव" ॥ (कठ० १।१।२६) इति ।
"न वित्तेन तर्पणीयो मनुष्यः ॥(कठ० १।१।२७) इति च–

यमम्प्रति नाचिकेताख्यानं विषयोपभोगं गर्हयत्कामस्य पुमर्थाभासतां त्याज्यताञ्च स्पष्टयत्, आत्मज्ञानार्थं नचिकेतस आग्रहञ्च प्रदर्शयत्, त्रिविधेष्वपि पुमर्थेषु शास्त्रस्य परमादरणीयतास्वारस्याभावमेव स्पष्टीकरोतीति मोक्षस्यैव परमपुरुषार्थत्वं सिद्धं भवति ॥ ७ ॥

सं०–उक्त अर्थ को पुनः प्रकारान्तर से स्पष्ट करते हैं—

पदार्थ—धर्मः=धर्म तो कथञ्चित्=किसी प्रकार से अन्येषाम्=अन्य अर्थादि पुरुषार्थों का हेतुः=कारण है, अर्थात् कामना सहित अनुष्ठान किया हुआ धर्म स्वर्गादि भोग देने से अर्थ और काम का हेतु है और निष्काम भाव-

---

(१) अयमर्थ इतिहासपुराणादिषु तत्र तत्रेन्द्रविश्वामित्रप्रभृतीनामुपाख्यानेषु स्पष्टमुद्घोषितः । अस्माभिस्तु ग्रन्थगौरवभीतिमासाद्य नेहावतार्यते । स च तत्रैव कर्णेहत्य निरीक्षणीयः । एतस्यैवार्थस्योपोद्बलिका—

विश्वामित्रपराशरप्रभृतयो ये चाम्बुपर्णाशना-
स्तेऽपि स्त्रीमुखपङ्कजं सुललितं दृष्ट्वैव मोहङ्गताः ।
शाल्यन्नं सघृतं पयोदधियुतं ये भुञ्जते मानवा-
स्तेषामिन्द्रियनिग्रहो यदि भवेद्विन्ध्यस्तरेत्सागरे ॥
(शृङ्गारशत० ८०)

इयमभियुक्तोक्तिरपि न कदाचिद् विस्मरणीया ।

द्वारा अनुष्ठान करने से अन्तःकरण की शुद्धि करता हुआ परम्परया मोक्ष का कारण होता है, एवं अर्थः=द्रव्यादि, भोगादि के साधनभूत पदार्थ तथाविधः=धर्म, वा काम का हेतु है, च= परंतु कामः=काम ( विषय वासना ) एकमात्र अनर्थप्रवृत्तेः=अनर्थप्रवृत्ति अर्थात् निषिद्धप्रवृत्ति का कारण है, ( जैसा कि—श्रीकृष्णभगवान् ने कहा है—

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥
( भ० गी० १६।२१ )

अर्थ—जीव की अधोगति का हेतु यह तीन प्रकार का नरकद्वार है—काम, क्रोध, और लोभ । इस लिये इन तीनों का परित्याग करे । ) तस्मात्= इस हेतु से तेषु=धर्म, अर्थ, और काम इन तीनों में न सत्क्रिया=उपादेयतारूप से शास्त्र का आदर (तात्पर्य) नहीं ॥७॥

**शेषशेषितयाऽप्येते सम्बद्धा हि परस्परम् ।**
**न शेषःकस्यचिन्मोक्षस्तस्मात्तस्य प्रधानता ॥८॥**

सम्प्रति धर्मादीनां त्रयाणां पुमर्थानां परस्परोपकार्योपकारकभावं कथयन् मोक्षस्य परमप्रधानतामुपसंहरति—"शेषशेषितया" इति । हि=यस्मात् एते=त्रयः धर्माद्याः पुमर्थाः परस्परम्=अन्योन्यम् शेषशेषितया अपि="शेषः" उपकारकः,"शेषी" उपकार्यः, शेषशेषिणोर्भावः शेषशेषिता तया, उपकार्योपकारकभावेनापीत्यर्थः सम्बद्धाः=सम्बन्धवन्त,"सन्तीति"शेषः । बहुवित्तव्ययायाससाध्य-

तया धर्मस्य, अर्थाद्यास्तस्य शेषभावं भजन्ते धर्मश्च तेषां शेषी । धर्मेणार्थादिलाभस्तदाऽर्थम्प्रति धर्मस्य शेषभावः, अर्थस्य च शेषिता, एवमेवान्यत्रापि यथादर्शनं योजनीयम् । ततश्च धर्मादित्रयाणां मध्ये कस्याप्यैकान्तिकः शेषिभावो नास्ति येन तेषु कोऽपि परमपुरुषार्थत्वेन विवक्ष्येत, सकलदुःखात्यन्तनिवृत्तिकामेन चाधिकारिणोपादीयेत, तस्मात्ते न मुख्याः पुरुषार्थाः ।

मोक्षः=चरमस्तु मोक्षाख्यः पुरुषार्थः कस्यचित्=कस्यापि धर्मादेः न शेषः=उपकारको नास्ति, अपितु उपकार्य एव, दुःखात्यन्तनिवृत्तिपरानन्दावाप्तिरूपत्वेन मोक्षस्य आ च ब्रह्मणः आ च स्तम्बात् प्राणिमात्रेणाभिलष्यमाणत्वात्, "दुःखाननुविद्धं सुखमेव मे सदा भूयात् दुःखं मा कदापि स्यात्" इत्येवंरूपायाः प्रत्यात्ममाशिषो दर्शनाच्च मोक्षः कस्यापि न शेषः, तच्छेषतयैव सर्वेषां विद्यमानत्वात् सुखार्थञ्च प्राणिमात्रस्य प्रवृत्तिदर्शनाच्च । तस्मात्=धर्मादिष्वन्यतमम्प्रत्यपि उपकारकाभावात् तस्य=मोक्षस्य प्रधानता=प्रधानभावः पुरुषार्थचतुष्टयमध्ये मुख्यत्वं परमपुरुषार्थत्वमेव युक्तमित्यर्थः । तथाह्याहुः—

पारार्थ्यं खलु शेषस्याऽमुख्यत्वे स्यात्प्रयोजकम् ।
शेषिणश्चाऽपरार्थत्वं मुख्यत्वे स्यात् प्रयोजकम ॥

---

(१) अर्थस्य धर्माद्युपकारकत्वं महाभारते शान्तिपर्वणि राजधर्मणि अष्टमेऽध्याये वन्धून् हत्वा शोकाकुलं धर्मपुत्रम्प्रति अर्जुनवाक्येनापि स्पष्टीकृतं भगवता व्यासेन महर्षिणा । तत्रत्यान् कतिपयान् श्लोकान् उद्धरामः—

अर्थेभ्यो हि विवृद्धेभ्यः सम्भृतेभ्यस्ततस्ततः ।
क्रियाःसर्वाः प्रवर्त्तन्ते पर्वतेभ्य इवापगाः ॥ १६ ॥
अर्थाद्धर्मश्च कामश्च स्वर्गश्चैव नराधिप ।
प्राणयात्राऽपि लोकस्य विना ह्यर्थं न सिद्ध्यति ॥१७॥

ननु—"मोक्षः शेषः पुरुषार्थत्वात् कामादिवद्" इत्यनुमानेन मोक्षस्यापि शेषत्वं स्यादिति चेन्न उक्तहेतोरनित्यत्वोपाधिग्रस्तत्वादिति युक्तमुक्तं "न शेषः कस्यचिन्मोक्षः" इति ॥८॥

---

अधनेनार्थकामेन नार्थः शक्यो विधित्सितुम् ।
अर्थैरर्था निबध्यन्ते गजैरिव महागजाः ॥२०॥
धर्मः कामश्च स्वर्गश्च हर्षः क्रोधः श्रुतं दमः ।
अर्थादेतानि सर्वाणि प्रवर्त्तन्ते नराधिप ! ॥२१॥
धनात्कुलं प्रभवति धनाद्धर्मः प्रवर्धते ।
नाधनस्यास्त्ययं लोको न परः पुरुषोत्तम ! ॥२२॥
नाधनो धर्मकृत्यानि यथावदनुतिष्ठति ।
धनाद्धि धर्मः स्रवति शैलादभिनदी यथा ॥२३॥
यः कृशार्थः कृशगवः कृशभृत्यः कृशातिथिः ।
स वै राजन् ! कृशो नाम न शरीरकृशः कृशः ॥२४॥

इत्यादि। अधिकन्तु तत एव कणेहत्य निरीक्ष्यम् । अत्रैव सप्तदशश्लोके "प्राणयात्रे"ति कथयता मुमुक्षूणां प्राणयात्राऽप्यर्थाधीनेति मोक्षोऽप्यर्थादेव भवतीति सूचितम्। एवमर्थस्य मोक्षम्प्रति शेषत्वं सुस्पष्टम्। तत्रैव दशमेऽध्याये-

अथ चेदात्मभाग्येषु नान्येषां सिद्धिमश्नुते ।
तस्मात्कर्मैव कर्त्तव्यं नास्ति सिद्धिरकर्मणः ॥ २६ ॥
अवेक्षस्व यथा स्वैः स्वैः कर्मभिर्व्यापृतं जगत् ।
तस्मात्कर्मैव कर्त्तव्यं नास्ति सिद्धिरकर्मणः ॥ २८ ॥

इत्यादिभीमवाक्येन धर्मकर्मण इतरान्प्रति, एकादशे च—

त्रिदिवं प्राप्य शक्रस्य स्वर्गलोके विमत्सराः ।
वसन्ति शाश्वतान् लोकाञ्जना दुष्करकारिणः ॥(२६)

इत्यर्जुनवाक्येन धर्मस्य स्वर्भोगम्प्रति, एवमेव द्वादशे नकुलवाक्येन धर्मादीनां परस्परं शेषशेषिभावः सम्यङ् निरूपितो ग्रन्थगौरवभयादिह दिङ्मात्रं प्रादर्शि। कामस्याऽनर्थप्रवृत्तिम्प्रति कारणता तु तत्रैव यौधिष्ठरैर्वैराग्यवचोभिर्निर्धार्येति शिवोम्।

सं०—अब मोक्ष की प्रधानता का उपसंहार कहते हैं–

पदार्थ–हि=जिस कारण से एते=यह धर्मादिक तीनों पुरुषार्थ परस्परम्=परस्पर शेषशेषितया=शेषशेषिभाव से अर्थात उपकार्योपकारकभाव के द्वारा अपि=भी सम्बद्धाः=सम्बन्ध वाले हैं, परन्तु मोक्षः=मोक्ष नामक चौथा पुरुषार्थ कस्यचित्=किसी धर्मादि के प्रति शेषः=उपकार करने वाला अर्थात गौण न=नहीं है, तस्मात्=तिस हेतु से भी तस्य=मोक्ष की ही प्रधानता=प्रधानता है।

भाव यह कि--जो किसी का उपकार करे वह "शेष" और जिस का उपकार किया जाय वह "शेषी" कहाता है शेष, गौण, उपकारक यह तीनों, तथा शेषी, मुख्य और प्रधान यह तीनों पर्याय=एकार्थवाची शब्द हैं। जब धर्म की प्रधानता विवक्षित होती है अर्थात् किसी धर्म का अनुष्ठान करना फलकामी पुरुष के लिये इष्ट होता है तब अर्थ आदि पुरुषार्थ धर्म के शेष कहाते हैं क्योंकि अर्थ ( धनादि पदार्थ ) धर्म के साधन हैं। धनादि के विना स्वर्गादि फल देने वाले यागादि कर्मों की सिद्धि नहीं हो सकती। जब इस शास्त्रीय अनुष्ठानद्वारा सिद्ध हुआ धर्म स्वर्गादि सुख का हेतु होता है तब वह अर्थादि पुरुषार्थों के प्रति उपकार करने से "शेष" हो जाता है और

अर्थादिक " शेषी " कहलाते हैं। इन तीनों में यही रीति जान लेनी। परन्तु निरतिशयानन्दरूप होने के कारण मोक्ष किसी के प्रति शेष नहीं हो सकता क्योंकि प्राणिमात्र की प्रवृत्ति सुखलाभार्थ हैं और मोक्ष के विना अन्य कोई भी पदार्थ निरतिशय सुखस्वरूप नहीं, अतएव सब पुरुषार्थों के मध्य मोक्ष ही शेषी=प्रधान है।

ननु—" मोक्ष शेष है, पुरुषार्थ होने से कामादि की न्याई "इस अनुमान द्वारा मोक्ष को भी शेष कह सकते हैं? ऐसी शङ्का न करनी चाहिये क्योंकि " अनित्यत्व " रूप उपाधि के लगने से उक्त हेतु साध्य का साधक नहीं हो सकता, इसलिये ठीक ही कथन किया हैं कि— "न शेषः कस्यचिन्मोक्षः" इत्यादि ॥ ८ ॥

**नाबद्धो मुच्यते कश्चिद्बद्ध एव हि मुच्यते।**
**बन्धस्य त्वविनाशित्वे न मोक्ष उपपद्यते ॥९॥**

इत्थमधिकारिविषयसम्बन्धप्रयोजनोपपत्तिपुरःसरं शास्त्रारम्भं समार्त्तथत, प्रयोजनस्य विशिष्टप्रतिपत्तये[1] धर्मादीन् चतुरोऽपि पुरुषार्थान् सूत्रयन् मोक्षस्यैव परमपुरुषार्थत्वं च समगरिष्ट, एतावतैव पूर्वमीमांसया उत्तरस्या अगतार्थत्वमप्यबूबुधत्। सम्प्रति मोक्षप्रतियोगिनो बन्धस्य मिथ्यात्वं व्युत्पादयिष्यन् सत्यत्वे बन्धस्य मोक्षानुपपत्तिं दर्शयति—

---

(१) शास्त्रारम्भम्प्रति प्राधान्यबोधाय।

"नावद्धः" इति। अवद्धः=न वद्धोऽवद्धः बन्धरहितः कश्चित्=कोऽपि प्राणी न=नैव मुच्यते=मुक्तो भवति, लोकेऽपि कारादेर्मुक्तेर्बन्धपूर्वकत्वदर्शनादिति भावः। एतदेवाह—हि=निश्चितोऽयमर्थो यद् "वद्व एव मुच्यते" इति। नन्वास्तां तावद् मोक्षस्य बन्धपूर्वकत्वं बद्धस्य च मुक्तत्वमिति प्रकृते किमायातमित्याह—"बन्धस्य तु"=इति। "तु" ना बन्धस्य सत्यत्वपक्षं प्रतिक्षिपति। बन्धस्य तु=अज्ञानमूलस्य रागद्वेषात्मकस्य प्रपञ्चस्य अविच्छिन्नप्रवाहस्य संसारस्य अविनाशित्वे=आत्मवत्कूटस्थनित्यत्वे, मोक्षः=दुःखात्यन्तनिवृत्तिपरानन्दावाप्तिरूपा मुक्तिः, न उपपद्यते=नैवोपपन्ना भवति न युज्यत इत्यर्थः। यदि बन्धः परामार्थसत्यः स्यात्तर्हि कदापि न निवर्त्तेत यथात्मेति भावः।

इदमत्राकूतकम्—अस्ति तावद् बन्धो नाम कश्चित्पदार्थः सर्ववादिसम्प्रतिपन्नो यन्निवृत्तये सर्वेषां तत्र तत्र प्रयत्नेष्वादरातिशयो लक्ष्यते। तत्र प्रत्यक्षप्रमाणमात्रशरणानां चार्वाकाणां मतेऽर्थशास्त्रविरुद्धाचरणेन विषयेन्द्रियसम्बन्धजनितं प्रतिकूलवेदनीयं दुःखमात्रं "बन्धः"। तस्यात्यन्तोच्छित्तिस्तु देहपात एवेति ते मरणं मोक्षमूचिरे।

बौद्धानां मते तु—चित्तचैत्तात्मकः पञ्चविधो रूपवि-

(१) इह भूतव्यतिरिक्तान्यमूर्त्तानि तत्त्वानि 'स्कन्ध'शब्देनोच्यन्ते। रूपादिषु पञ्चसु द्वितीयो विज्ञानस्कन्धश्चित्तम्। इतरे चत्वारः स्कन्धाश्चैत्ताः। इदमाकारं प्रवृत्तिविज्ञानं विषयाकारपरिणतं "रूपस्कन्ध"शब्देनोच्यते। रूप्यते परिच्छिद्यत ईदृशमिति तद्रूपमिति व्युत्पत्तेः। रूप्यतेऽनेनेति व्युत्पत्तेस्तु इन्द्रियाण्यपि "रूपस्कन्धः"। एतानि चैत्तान्येव न भौतिकानि। विज्ञानस्कन्धस्य रूपस्कन्धेन जायमाने सुखदुःखे "वेदनास्कन्धः"। सुखदुःखे तु चित्तपरिणामभूतेऽभौतिके। घटादि नाम "संज्ञास्कन्धः"। तत्र नामरूपात्मकांशद्वय-

ज्ञानवेदनासञ्ज्ञासंस्कारसञ्ज्ञकः स्कन्धः। तत्र वेदनास्कन्धनिबन्धना रागद्वेषादयः क्लेशा उपक्लेशाश्च मदमानादयो धर्माधर्मौ च संस्कारस्कन्ध इति सर्वमिदं मिलित्वा दुःखं दुःखायतनं दुःखसाधनञ्चेति "बन्ध" पदवाच्यम्।

आर्हतास्तु—मिथ्यादर्शनाऽविरतिप्रमादकषायवशाद्योगवशाच्चात्मा सूक्ष्मैकदेशावगाहिनामनन्तप्रदेशानां पुद्गलानां कर्मबन्धयोग्यानामादानमुपश्लेषणं यत्करोति स "बन्धः"। तथाच तत्त्वार्थसूत्रम् - "सकषायत्वाज्जीवः कर्मभावयोग्यान्पुद्गलानादत्ते

---

मध्ये रूपांशो भौतिकः,नामांशस्त्वभौतिकश्चैत्तः। रागद्वेषादयः "संस्कारस्कन्धः", एते चैत्ता एव। एष एव बन्धो बौद्धानां, यद्धानाय तैस्तत्र २ शून्यादिभावना उपदिष्टाः।

उक्तश्च मानमेयरहस्यश्लोकवार्त्तिके—( सौगतदर्शने )
निरोधो मुक्तिरेव स्यात् शुद्धज्ञानमहोदयः।
मार्गो भावनया तत्त्वज्ञानं तद्धेतुरुच्यते ॥ इति ॥

(१) मिथ्यादर्शनादिभिर्हेतुभिरयं जीवात्मा सूक्ष्माणामेकस्मिञ्शरीरे प्रविशतामनन्तावयवानां पुद्गलानामणुद्व्यणुकादीनां कर्मरूपेण परिणामयोग्यानामुपश्लेषणमविभागेन सम्बन्धं करोति। अयमेव "बन्धः" इत्युच्यते।

इदमेषां तात्पर्यम्—यथा पात्रविशेषे प्रक्षितानां विविधरसबीजपुष्पफलानां मदिरारूपेण परिणामो भवति, तथा पुद्गलानामप्यात्मनि स्थितानां योगकषायवशात् कर्मरूपेण परिणामो भवतीति। तदेतदुक्तम्—उमास्वामिनामकेनाचार्येणे याह—"सकषाय"ति।

(२) अस्यायमाशयः—कषायेण क्रोधमानादिना सह वर्तत इति सकषायः, तस्य भावः सकषायत्वम्। कषायस्य मन्दमध्यतीव्रत्वतारतम्येन बन्धेऽपि तारतम्यं भवति। सूत्रस्थं कर्मपदञ्चावर्त्तनीयम्। कर्मणो हेतोर्जीवः सकषायो भवति, सकषायत्वाच्च स कर्मभावयोग्यान्पुद्गलान् गृह्णाति स बन्ध इत्यर्थः। "अयं जीवकर्मणोः सम्बन्धोऽनादि"रिति नात्र हेतुर्विचारणीयः।

स बन्धः"—इत्याहुः।

साङ्ख्यानान्तु—"त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः" (१।१) इति वदतां मते स्फुटं त्रिविधं दुःखमेव "बन्धः"। तथैव योगानामिति न बहु विशेषः।

नैयायिकानां "तदत्यन्तविमोक्षोपवर्गः" (न्या० १।१।२२) इत्यपवर्गं लक्षयतां प्रसिद्धं दुःखमेव "बन्धः"। किंतु—शरीरम्, षड् इन्द्रियाणि, षड् विषयाः, षड् बुद्धयः, सुखं दुःखमित्येकविंशतिसङ्ख्यं तत्। एष एव नयः प्रायः काणादानाम्।

कर्ममीमांसकास्तु—"त्रेधा हि प्रपञ्चः पुरुषं बध्नाति। भोगायतनं शरीरम्, भोगसाधनानीन्द्रियाणि, भोग्याः शब्दादयो विषयाः। भोग इति च सुखदुःखविषयोऽपरोक्षानुभव उच्यते तदस्य त्रिविधस्यापि बन्धस्यात्यन्तिको विलयो "मोक्षः"। किमिदमात्यन्तिकत्वम्? पूर्वोत्पन्नानां शरीरेन्द्रियविषयाणां विनाशः, अनुत्पन्नानाञ्चात्यन्तिकोऽनुत्पादः उत्पादकयोर्धर्माधर्मयोर्निःशेषयोः परिक्षयात्तदत्यन्तानुत्पत्तिरिति सोऽयं प्रपञ्चसम्बन्धो 'बन्धः" (शास्त्रदीपिका १।१।५) इत्याहुः।

---

(१) सङ्ख्या प्रकुर्वते चैव प्रकृतिञ्च प्रचक्षते।
तत्त्वानि च चतुर्विंशत् तेन साङ्ख्याः प्रकीर्तिताः॥
(म० भा०)

(२) प्रकृतेः सप्तरूपाणि च बन्धपदेनोच्यन्ते। तथाहि—
रूपैः सप्तभिरेव तु बध्नात्यात्मानमात्मना प्रकृतिः।
सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेण॥
(साङ्ख्यकारिका ६३) इति॥

तानि च सप्त रूपाणि—धर्मो वैराग्यमैश्वर्यमधर्मोऽज्ञानमवैराग्यमनैश्वर्यमित्येतानि ज्ञेयानि।

माध्वा अपि—

यस्य प्रसादात्परमार्त्तिरूपादस्मात्संसारन्मुच्यते नापरेण।
नारायणोऽसौ परमो विचिन्त्यो मुमुक्षुभिः कर्मपाशादमुष्मात् ॥

इति नारायणश्रुतिं प्रमाणयन्तो घटीयन्त्रवदनारतं प्रवर्त्तमानं कर्मपाशात्मकं दुःखमयं संसारमेव "बन्ध" माहुः। बद्धमुक्तनित्यभेदात् त्रिविधं जीवं वदतां विशिष्टाद्वैतिनां मतेऽपि प्रायो बन्धस्य स्वरूपमिदमेव न बहु विशिष्यते। "उपाधिवशात्संसारः" "अनादिकर्मरूपाऽविद्याकृताऽचित्संसर्गादित्यर्थः" इत्यादि "यतीन्द्रमतदीपिका" तत्प्रकाशाख्यव्याख्याप्रभृतिषु ग्रन्थेषु बहु विलोक्यम्।

पाशुपतानां मते तु—

मिथ्याज्ञानमधर्मश्च सक्तिहेतुश्च्युतिस्तथा।
पशुत्वमूलं पञ्चैते तन्त्रे हेया विविक्तितः ॥

इति मिथ्याज्ञानाद्याः पञ्च पदार्था एव हेयत्वेन "बन्धः" उक्तः। अयमपि बन्धो दुःखस्वरूपान्नातिरिच्यते, अत एव तत्र दुःखान्ताय पाशुपतयोगविधिर्व्याख्यातः, आध्यात्मिकादिदुःखत्रयञ्च दुःखपदेन स्वीकृतमिति तेषामपि प्रसिद्धं दुःखमेव 'बन्धः' इति फलति।

शैवानां मतेऽपि मलकर्ममायारोधशक्तिभेदात् चतुर्विधः पाशो "बन्धः"।

---

(१) सक्तिहेतुः=विषयासक्तिहेतुर्विषयसन्निधानादिः। च्युतिः सदाचरणाद् भ्रंशः। पशुत्वस्य=जीवत्वस्य मूलं जीवत्वप्रापकोऽनादिसंस्कारः।

(२) आत्माश्रितो दुष्टभावो मलः। स मिथ्याज्ञानादिभेदेन पञ्चविधः। कर्म=धर्माऽधर्मरूपं प्रसिद्धम्। माया=सर्वस्य मूलकारणम्, इयमेवाऽविद्या प्रधानं प्रकृतिरिति चोच्यते। रोधशक्तिर्मलगतं दृक्क्रियाशक्त्यावरणसामर्थ्यम्।

प्रत्यभिज्ञादर्शिनां माहेश्वरविशेषाणां मतेऽपि संसार एव "बन्धः"। यतस्तैरेवोक्तम्—

एष प्रमाता मायान्धः संसारी कर्मबन्धनः।
विद्याविज्ञापितैश्वर्यश्चिद्घनो मुक्त उच्यते॥ इति।

इत्थं यतस्ततः पर्य्यालोच्यमाने चाऽस्मिन्बन्धरूपेऽर्थे[1] सर्वेषामपि मते जन्मपरम्परात्मकः प्रपञ्च एव बन्धः, स एव च जिहासितः। तत्रांशिके प्रकारवैषम्ये सत्यपि बन्धसामान्ये न कस्यापि विवादः।

इदन्तु विचारणीयम्—नायं बन्धः स्वभावसिद्धः तथा सति स्वभावस्यानपायित्वे मोक्षसाधनोपदेशानर्थक्यप्रसङ्गः, न ह्यग्नेः स्वभावसिद्धमौष्ण्यं शिल्पिसहस्रैरप्यपनेतुं शक्यम्। उक्तञ्चेश्वर-गीतायाम्—

यद्यात्मा मलिनोऽस्वच्छो विकारी स्यात्स्वभावतः।
न हि तस्य भवेन्मुक्तिर्जन्मान्तरशतैरपि॥ इति।

नच तथागतवच्चित्तस्यैवात्मत्वे आत्मनाशादेव मोक्षोऽस्त्विति वाच्यम् "अहं बद्धो मुक्तः स्यामिति" बन्धसामानाधिकरण्येनैव मोक्षस्य पुमर्थतासिद्धेः।

ननु—बन्धस्य स्वाभाविकत्वेऽपि श्रुतिबलादेव बाध्यत्वं स्यादिति चेन्न अशक्यासम्भवोपदेशानुपपत्तेः। नच कालोऽपि बन्धकारणं प्रपञ्चसत्यत्ववादिनां तस्य नित्यस्य व्यापिनः सर्वसम्बन्धतया मोक्षेऽपि बन्धप्रसङ्गात्। अथ कालादिनिमित्तकत्वेऽपि बन्धस्य सहकार्यन्तरसम्भवाऽसम्भवाभ्यां सुव्यवस्थेति ब्रूषे? तदा यत्सम्बन्धावच्छेदेन पुरुषे बन्धः स एव मुख्यो हेतु-

---

(१) संसारात्मकस्वरूपे।

रस्त्विति किमन्तर्गडुना कालेन। बन्धव्यवहारस्यौपाधिकत्वेनाऽपि साधयिष्यमाणत्वात्कालनिमित्तकल्पनाप्ययुक्तैव । एतेन दिग्योगोऽपि व्याख्यातः, समानन्यायात् ।

बाल्याद्यवस्थाविशेषोऽपि न बन्धहेतुः तासां देहधर्मत्वात्, असङ्गस्वभावस्य पुरुषस्य अवस्थादिसम्बन्धाऽनुपपत्तेः। न कर्मणाऽपि सः, अन्यधर्मस्य तस्य बन्धहेतुत्वे मुक्तानामपि बन्धापत्तेः। ननु चित्तस्यैव बन्धोऽस्त्विति चेत्? चिच्छायानापन्नस्य केवलस्य तस्य सुखदुःखभोगानुपपत्तेः । तस्मान्नित्यशुद्धमुक्तस्वभावे चिन्मात्रैकवपुष्यात्मनि बन्धप्रसङ्ग आविद्यक एवेति सर्वैरङ्गीकर्त्तव्यम्। तदेतदग्रे सुविपुलं स्फुटीभविष्यति॥ उक्तञ्च सौरे पुराणे—

यथाहि केवलो रक्तः स्फटिको लक्ष्यते जनैः।
रञ्जकाद्युपधानेन तद्वत्परमपूरुषः ॥ इति ।

परमार्थसारेऽपि—

मोहयतीवात्मानं स्वमायया द्वैतरूपया देवः।
उपलभते स्वयमेवं गुहागतं पुरुषमात्मानम् ॥३२॥
ज्वलनाद् धूमोद्गतिभिर्विविधाकृतिरम्बरे भाति ।
तद्वद्विष्णोः सृष्टिः स्वमायया द्वैतविस्तरा भाति ॥३३॥
जलधरधूमोद्गतिभिर्मलिनीक्रियते यथा न गगनतलम् ।
तद्वत्प्रकृतिविकारैरपरामृष्टः परः पुरुषः ॥३५॥

इत्येवं बन्धस्याऽऽविद्यकत्वे तन्मिथ्यात्वपक्ष एव सुदृढो भवतीति दिक् ॥ ९ ॥

---

(१) येतु—"नाऽविद्यातोऽवस्तुना बन्धायोगाद्" इति कुचोद्यमूचिरे ते स्वप्नादिदृष्टान्तैरपहस्तयितव्याः। किञ्च तैर्बुद्धिनेत्रमुद्घाट्य—

सं०—अब मोक्ष के प्रतियोगी प्रपञ्चरूप बन्ध को मिथ्या सिद्ध करने के लिये बन्ध को सत्य मानने वाले वादियों के मत में मोक्ष की अनुपपत्ति कथन करते हैं-

पदार्थ—अबद्धः=जो बद्ध नहीं है ऐसा कश्चित्=कोई भी न मुच्यते=मुक्त नहीं होता। (किन्तु) हि=निश्चय करके बद्धःएव=बद्ध ही मुच्यते=मुक्ति को प्राप्त होता है। बन्धस्य तु=यदि बन्ध अविनाशित्वे=अविनाशी=नाशवान न हो तो मोक्ष=मोक्ष न उपपद्यते=कदापि नहीं बन सकता।

भाव यह कि—यदि संसारात्मक बन्ध आत्मा की न्याईं परमार्थसत्य हो तो उसकी हेयता के लिये शास्त्र का उपदेश निरर्थक हो जायगा, और कोई भी जिज्ञासु विषयवासना के त्याग की इच्छा न करेगा। परन्तु बन्ध=दुःखात्मक प्रपञ्च के त्याग की इच्छा बनी रहने के कारण यह सिद्ध है कि वह नाशवान पदार्थ है, अतएव हेय भी है और हेय बन्ध की निवृत्ति का उपाय बोधन करने से शास्त्र का उपदेश भी निरर्थक नहीं ॥९॥

---

"तस्मान्न बध्यतेऽसौ न मुच्यते नापि संसरति कश्चित्।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः"
(साङ्ख्यकारिका ६२)

इति पुरुषेऽवास्तवं बन्धमुपपादयद्भिः स्वसिद्धान्त एव निरीक्षणीय इति नाऽधिकं ब्रूमः।

**मोक्षोपदेशसामर्थ्यान्न बन्धस्याविनाशिता ।**
**वक्तुं शक्या, ततस्तस्य विनाशित्वादनित्यता ॥१०॥**

बन्धस्य मिथ्यात्वं द्रढयिष्यन् तावद्विनाशित्वादेव तस्याऽनित्यतामाह–" मोक्षोपदेशे "ति । अथवा—बन्धस्य विनाशित्वे हेत्वन्तरमाह—" मोक्षोपदेशे"ति । मोक्षोपदेशसामर्थ्यात्=उपदिश्यते सदसत्तत्त्वमनेनेति "उपदेशो" वेदवाक्यम्, तदविरोधि स्मृत्यादिकञ्च । मोक्षस्य परमपुरुषार्थस्योपदेशः मोक्षप्रतिपादकं वेदवाक्यम्, तस्य सामर्थ्यं स्वतःप्रामाण्यरूपं तस्मात्, स्वतःप्रमाणभूतवेदवाक्यादपि हेतोः बन्धस्य=यावत्प्रपञ्चस्य अविनाशिता=अनश्वरभावो न=नैव वक्तुं शक्या=प्रतिपादनार्हेत्यर्थः । अविनाशित्वे तस्य हेयत्वाऽनुपपत्तेरिति भावः । किन्तु विनाशित्वमेवाऽस्तीति सिद्धान्तः ।

यदि बन्धोऽविनाशी अभविष्यत् तर्हि वेदो मोक्षात्मकं परं पुमर्थं नोपादेक्ष्यत् । नह्यविनाशिनो हानाय तदुपदेशो भवितुमर्हति, भ्रमप्रमादविप्रलिप्सादिदोषरहितस्य वेदस्याशक्याऽसम्भवोपदेशाऽनुपपत्तेः । तथाच—" तमेव विदित्वाऽतिमृत्युमेति " ( श्वे० ३ । ८ ) " तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् " ( ऋग्वेद ) " यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतम" । (क० ४ । १५) "आत्मरतिरात्मक्रीड" ( छां० ७ । २५ । २ ) "स्वेन रूपेणाऽभिनिष्पद्यते स उत्तमः पुरुषः " ( छां० ८ । १२ । ३ ) " तरति शोकमात्मवित् " ( छां० ७ । १ । ३ ) "भूयश्चान्ते विश्वमायानिवृत्तिः" (श्वेता० १ । १०) "ज्ञात्वा देवं सर्वपाशापहानिः " ( श्वेता० १ । ११ ) इत्येवमादिश्रुतीनाम्—

सर्वभूतात्मभूतस्य सम्यग्भूतानि पश्यतः ।
देवा अपि मार्गे मुह्यन्त्यपदस्य पदैषिणः ॥ ( म० भा० )
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते । ( भ० गी० ८।१६ )
इन्द्रियेभ्यश्च पञ्चभ्यो मनसश्चैव भारत ।
अतीतानागतेभ्यश्च मुक्तश्चेत्स सुखीभवेत् ॥
(म० भा० सनत्सुजातीये २ । ३४ )

इत्यादिस्मृतीनाञ्च मोक्षोपदेशो बन्धस्य विनाशित्व एव घटेत ।

मनुरप्याह--

प्रशासितारं सर्वेषामणीयांसमणोरपि ।
रुक्माभं स्वप्नधीगम्यं विद्यात्तं पुरुषं परम् ॥ (मनु० १२।१२२)
एवं यः सर्वभूतेषु पश्यत्यात्मानमात्मना ।
स सर्वसमतामेत्य ब्रह्माभ्येति परं पदम् ॥ (मनु० १२।१२५)इति

तद्यदि ब्रह्मसाक्षात्कारात्परं श्रेष्ठं पदं ब्रह्मरूपं मोक्षाख्यं लम्भनीयं नाऽभविष्यत् कथं सर्वज्ञानमयः श्रुतिख्यातमाहात्म्यो मनुर्भगवान्धर्मोपदेशस्यावसानं मोक्षमेवाकल्पयिष्यत्, तस्माद्युक्तमुक्तम्—" मोक्षोपदेशसामर्थ्यान्न बन्धस्याऽविनाशिता " इति ।

"ततः" इति । ततः=तस्माद्धेतोः मोक्षोपदेशसामर्थ्यादेव बन्धस्याऽविनाशित्वाभावकारणात् तस्य=बन्धस्य विनाशित्वात्=घटपटादिवद् विनश्वरस्वभावाद् अनित्यता=अनित्यत्वं कादाचित्कत्वं स्फुटमित्यर्थः । एवञ्च दृष्टाऽदृष्टसाधनसाध्यतया मन्दपुरुषार्थरूपत्वाद्बन्धस्य हेयतैवाभीष्टेति फलितम् ॥ १० ॥

सं०—बन्ध को मिथ्या सिद्ध करने के लिये प्रथम विनाशी होने से उस की अनित्यता कथन करते हैं—

पदार्थ—मोक्षोपदेशसामर्थ्यात्=मोक्षोपदेश के सामर्थ्य

से अर्थात् स्वतःप्रमाणभूत वेद के मोक्षात्मक परमपुषार्थ को ही उपादेय कथन करने से बन्धस्य=संसारात्मक बन्ध की अविनाशिता=नित्यता न=नहीं वक्तुं शक्या=कही जा सकती । ततः=इस हेतु से, विनाशित्वात्=विनाशी होने के कारण तस्य=बन्ध की अनित्यता=अनित्यता ही स्पष्ट है ।

भाव यह कि--वेदादिशास्त्र ने मोक्ष को ही परमपुरुषार्थ कथन करते हुए संसार की हेयता बताई गई है यदि जन्ममरणात्मक बन्ध आत्मा की न्याईं अविनाशी पदार्थ होता तो वेदशास्त्र उस को कदापि हेय कथन न करता निर्भ्रान्त स्वतः प्रमाणभूत वेद किसी असम्भव तथा अशक्य ( जो किया न जा सके ) अर्थ का उपदेश नहीं करता । एवं–वेद शास्त्र सम्बन्धी मोक्षोपदेश के सामर्थ्य द्वारा स्पष्ट सिद्ध है कि बन्ध अविनाशी नहीं किन्तु विनाशी है और विनाशी होने से घटपटादि पदार्थों की न्याईं अनित्य भी है ॥ १० ॥

नानित्ये सत्यताभीष्टा नासत्येऽस्त्यमृषात्मता ।
अनित्यत्वादसत्यत्वं ततस्तस्य मृषात्मता ॥११॥

बन्धस्याऽनित्यत्वं प्रसाध्येदानीमसत्यतामुखेन तन्मिथ्यात्वं स्थापयति—"नानित्ये" इति ।

अनित्ये=घटपटादौ शुक्तिरजतादौ वा सत्यता=त्रैकालाबाध्यता, अभीष्टा न=कस्याऽपि प्रमाणविदो नेष्टेत्यर्थः । अनित्ये सत्यत्वं न प्रमाणसम्प्रतिपन्नमिति भावः । असत्ये=परमार्थसत्ताशून्येऽवस्तुभूते शुक्तिरजतादौ, अमृषात्मता=मृषा आभासमात्रमात्मा स्वरूपं यस्य स मृषात्मा, तस्य भावो मृषात्मता मिथ्यात्वम्,न मृषात्मता अमृषात्मता अमिथ्यात्वं यथार्थता सत्यतेति यावत्,सा सत्यता न=नैव अभीष्टा अस्ति।नहि प्रतिभासमात्रशरीराणां शुक्तिरजतादीनां कोऽपि केनाऽपि प्रमाणेन सत्यतां साधयितुं शक्नोतीति भावः । एवं सति अनित्यत्वात्=अनित्यत्वहेतोः बन्धस्य असत्यत्वम्=स्वतन्त्रसत्ताशून्यत्वम् अधिष्ठानसत्तानतिरिक्तसत्ताकत्वं कल्पितत्वमिति यावद् अस्तीत्यनुषञ्जनीयम् । ततः=तस्मादसत्यत्वाद्धेतोः तस्य=बन्धस्य मृषात्मता=मिथ्यात्वं सिद्ध्यतीति शेषः ।

अत्रेमौ प्रयोगौ फलतः । "बन्धो न सत्यो भवितुमर्हति अनित्यत्वाद् घटादिवत्"। "बन्धो मिथ्या भवितुमर्हत्यसत्यत्वाच्छुक्तिरजतादिवद्" इति । नच–मिथ्यात्वानुमाने "बाधितत्व"मुपाधिः तस्य शुक्तिरजतादौ साध्यव्यापकत्वात् पक्षे घटादौ च साधनाव्यापकत्वादिति वाच्यम् "ब्रह्मैवेदम्" ( मुं० २।२।११ ) "न तु तद् द्वितीयमस्ति" ( बृ० ४ । ३ । २३-३० ) ,"अतोऽन्यदार्त्तम्" ( बृ० ३ । ४ । २ ) इत्यादिना श्रौतबाधसत्त्वेन साधनाव्यापकताऽसिद्धेः, व्याप्तिपक्षधर्मताबलान्मिथ्यात्वानुमाने बाधकाभावाच्च, उपाध्यभावेन साध्याभावानुमाने "सद्विविक्तत्वाभावस्य"उपाधित्वाच्चेति सूक्ष्ममीक्षणीयम् ॥११॥

सं०—बन्ध की अनित्यता सिद्ध करके "असत्य" हेतु द्वारा उसके मिथ्यात्व को स्पष्ट करते हैं—

पदार्थ—अनित्ये=अनित्य पदार्थ में सत्यता=सत्यता अभीष्टा न=किसी को इष्ट नहीं अर्थात् अनित्य में सत्यता प्रमाणसिद्ध नहीं, (और) असत्ये=असत्य पदार्थ में (स्वतन्त्रसत्ता से शून्य शुक्तिरजतादि पदार्थों में) अमृषात्मता=मिथ्यात्व का अभाव भी न आस्ति=नहीं है, अर्थात् वह मिथ्या ही होते हैं, इस प्रकार अनित्यत्वात्=अनित्य होने से बन्ध का असत्यत्वम्=असत्यत्व व्यवस्थित है और ततः=असत्य होने से तस्य=उस(बन्ध) का मृषात्मता=मिथ्यात्व भी स्पष्ट सिद्ध है ॥ ११ ॥

शुक्तिरजतदृष्टान्तेनान्वयव्याप्तिद्वारा परमते बाधं प्रदर्शयन्नुक्तमर्थं स्पष्टीकरोति—"अनित्यस्यापि" इति ।

**अनित्यस्यापि सत्यत्वं येन स्वीक्रियते यदा ।**
**सत्यत्वं शुक्तिरूप्यादेस्तेन स्वीक्रियतां तदा ॥१२॥**

"यदा" इति यदीत्यर्थे "तदा" इति तर्हीत्यर्थेऽव्ययम् । यदा=यदि, येन=येन केनापि वादिना, अनित्यस्य अपि=विनाशिनोऽपि घटपटादेः सत्यत्वम्=स्वतन्त्रसत्तावत्त्वम्, स्वीक्रियते=अङ्गीक्रियते, तदा=तर्हि तेन=वादिना, शुक्तिरूप्यादेः=शुक्तिरजतादेरपि प्रातिभासिकपदार्थस्य सत्यत्वम्=आत्मवदबाध्यत्वम्, स्वीक्रियताम्=मन्यतामित्यर्थः ।

तथा च—अनित्यत्वाऽसत्यत्वयोः, असत्यत्वमिथ्यात्वयोः शुक्तिरूप्यादौ स्फुटैव व्याप्तिः, तामपलपन् वादी निगृहीत एव स्यादित्यर्थः । इत्थञ्च—यथा शुक्तिबुद्धिपरित्यागेन रजतबुद्धिर्भ्रमजन्या तद्वद् ब्रह्मबुद्धिपरित्यागेन प्रपञ्चबुद्धिर्भ्रान्तिरेवेति भावः ।

उक्तश्चाचार्यपादैः "अपरोक्षानुभूतौ"—

"यथारज्जुं परित्यज्य सर्पं गृह्णाति वै भ्रमात्।
तद्वत्सत्यमविज्ञाय जगत्पश्यति मूढधीः" ॥ (९५) इति ॥

तथा चानुमानं फलितम्—"प्रपञ्चो न सत्योऽनित्यत्वाच्छुक्तिरजतवदिति ॥ १२ ॥

सं०—अब शुक्तिरजत दृष्टान्त से (व्याप्ति द्वारा) उक्त अर्थ की सिद्धि करते हैं—

पदार्थ—यदा=जब येन=जो (कोई) वादी अनित्यस्य अपि= अनित्य घटपटादि पदार्थों का भी सत्यत्वम्=परमार्थसत्यपना स्वीक्रियते=स्वीकार करे (करता है) अर्थात् बन्धात्मक प्रपञ्च को आत्मा की न्याईं परमार्थ सत्य माने तदा=तब तेन=उस (वादी) को शुक्तिरूप्यादेः=शुक्तिरजतादिक प्रातिभासिक पदार्थों का भी सत्यत्वम्=परमार्थसत्यत्व स्वीक्रियताम्= स्वीकार करना चाहिये।

भाव यह है कि—दृष्टान्तभूत शुक्तिरजतादिकों में अनित्यत्व असत्यत्व की, तथा असत्यत्व मिथ्यात्व की व्याप्ति स्पष्ट है। एवं उक्त दृष्टान्त के बल से "बन्ध" पक्ष में अनित्यत्व हेतु द्वारा असत्यत्व की सिद्धि और असत्यत्व हेतु द्वारा मिथ्यात्व की सिद्धि भी हो सकती है ॥१२

उक्तमेवार्थं व्याप्तियोजनामुखेन द्रढयति—"अनित्यत्वस्य" इति।

**अनित्यत्वस्य तुल्यत्वादुभयत्राप्यसत्यता।**
**स्वीकर्तुमुचितैव स्यादसत्यत्वान्मृषात्मता ॥१३॥**

उभयत्र अपि=दृष्टान्ते दार्ष्टान्तिके चेत्यर्थः,अर्थात् बन्धात्मके पक्षे शुक्तिरूप्यादिदृष्टान्ते च अनित्यत्वस्य=अनित्यत्वहेतोः तुल्यत्वात्=समव्याप्तत्वात् (उभयत्र) असत्यता=प्रतिभाससमात्रता स्वीकर्तुमुचिता एव=अङ्गीकर्त्तुं योग्यैव। "यदनित्यं तदसत् यथा शुक्तिरजतम्" इति व्याप्तेर्निर्दुष्टत्वादिति भावः। अतः, असत्यत्वात्=असत्यत्वहेतोर्बन्धस्य मृषात्मता स्यात्=मिथ्यात्वं भवेत्। "यदसत्तन्मिथ्या यथा शुक्तिरजत"मिति व्याप्तिरपि बन्धात्मके पक्षे पक्षधर्मता च, तस्मान्मिथ्यैव बन्ध इत्यर्थः[1]। "उभयत्र" इति पदं देहलीदीपकन्यायेन पूर्वत्रापरत्र च अन्वयनीयमिति युक्तं भाति॥ १३॥

**सं०—अब उक्त अर्थ को व्याप्ति की योजना द्वारा दृढ करते हैं-**

**पदार्थ**—उभयत्र अपि=दृष्टान्त तथा दार्ष्टान्त अर्थात् बन्धरूप पक्ष में और शुक्तिरजत दृष्टान्त में अनित्यत्वस्य=अनित्यत्व हेतु को तुल्यत्वात्=तुल्य होने से (उभयत्र=) दोनों में, असत्यता=परमार्थसत्ताशून्यत्व स्वीकर्तुम्=स्वीकार करने को उचिता=योग्य एव=ही है, अर्थात्-जैसे अनित्य होने से शुक्तिरजत असत् है, वैसे ही अनित्य होने से बन्ध भी असत् है। एवं असत्यत्वात्=असत्यत्व हेतु के द्वारा (असत्यत्वधर्मवाला होने के कारण) मृषात्मता स्यात्=बन्धरूप पक्ष का मिथ्यापन स्पष्ट है।

१—व्याप्तिपक्षधर्मताबलादित्यर्थः।

भाव यह कि–"जो अनित्य होता है वह शुक्तिरजतादि की न्याईं असत् होता है, और "जो असत् होता है वह अवश्य शुक्तिरजत की न्याईं मिथ्या होता है, सत्य नहीं"। यद्यपि लोक में घटादिक तथा शुक्तिरजतादिकों में यथाक्रम सत्यत्व तथा मिथ्यात्व की प्रसिद्धि से परस्पर विलक्षणता प्रतीत होती है तथापि घटादिकों में श्रौत बाध होने से विचार करने पर दोनों के मिथ्यात्व में विलक्षणता नहीं ॥ १३ ॥

ननु शुक्तिरजतादीनां प्रतिभासमात्रशरीराणामसत्यत्वमिथ्यात्वे स्याताम्, प्रपञ्चस्य त्वर्थक्रियाकारित्वदर्शनात्सत्यत्वमेवेति कथं तस्य मिथ्यात्वमितीमां शङ्कां परिहरति–"यथा" इति ।

**यथा शुक्तिधियः पूर्वं रजते सत्यताग्रहः ।**
**तथा नित्यात्मबोधात्प्रागनित्ये सत्यताग्रहः ॥१४॥**

यथा=यद्वत्, शुक्तिधियः=शुक्तिज्ञानात् पूर्वम्=प्राक् यावच्छुक्त्यात्मकाधिष्ठानसाक्षात्कारो न जायते ततोऽर्वागित्यर्थः, रजते=शुक्तौ प्रतीयमाने रजते, सत्यताग्रहः=सत्यताया ग्रहो ज्ञानं भवति रजते सत्यत्वबुद्धिस्तिष्ठति, तथा=तद्वत् नित्यात्मबोधात्=त्रैकालाबाध्यैकरसात्मसाक्षात्कारात् प्राक्=पूर्वम् यावदसौ बोधो न जायते तावत्कालपर्यन्तमित्यर्थः, अनित्ये=उत्पत्तिविनाशधर्मके देहादिप्रपञ्चरूपे बन्धेऽपि सत्यताग्रहः=सत्यत्वबुद्धिर्वर्त्तते, अधिष्ठानसाक्षात्कारं विना कल्पिते सत्यत्वबुद्धेरनिवृत्तेरिति भावः । एतदभिप्रायेणैव ब्रह्मविदो गाथां पूज्यपादा अप्युदधार्षुः (समन्वयाधिकरणे)—

गौणमिथ्यात्मनोऽसत्त्वे पुत्रदेहादिबाधनात् ।
सद्ब्रह्मात्माहमित्येव बोधे कार्यं कथं भवेत् ॥
अन्वेष्टव्यात्मविज्ञानात् प्राक् प्रमातृत्वमात्मनः ।
अन्विष्टः स्यात्प्रमातैव पाप्मदोषविवर्जितः ॥
देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः ।
लौकिकं तद्वदेवेदं प्रमाणन्त्वात्मनिश्चयात् ॥

इत्यात्मबोधात्प्रागेव सर्वो व्यवहारः सत्यो वस्तुतस्त्वनित्यत्वादिहेतुना तन्मिथ्यात्वमेवेति युक्तम् । नह्यर्थक्रियाकारित्वलिङ्गेन घटादिप्रपञ्चस्य सत्यत्वमिति वक्तुं युक्तं " यद्यदर्थक्रियाकारि तत्तत्सदि"त्यस्य स्वाप्नकान्तालिङ्गनादिषु व्यभिचारादिति शम्॥१४

(१) आचार्यसुन्दरपाण्ड्योक्तिरियमुद्धृता भगवत्पादैः समन्वयाधिकरण इति केचन साम्प्रतिका गवेषणाकाराः । अयमर्थः—सदबाधितं ब्रह्म पूर्णमात्मा विषयानादत्त इति सर्वसाक्ष्यहमित्येवं बोधे जाते सति पुत्रदेहादेः सत्ताबाधनात् मायामात्रत्वनिश्चयात्, पुत्रदारादिरहमिति स्वीयसुखदुःखभाक्त्वगुणयोगाद् गौणात्माऽभिमानस्य, "नरोऽहं कर्त्ता मूढः" इति मिथ्यात्माऽभिमानस्य च सर्वव्यवहारहेतोरसत्त्वे कार्यं विधिनिषेधादिव्यवहारः कथं भवेत्, हेत्वभावान्न कथञ्चिद्भवेदित्यर्थः। नन्वहम्ब्रह्मेति बोधो बाधितः अहमर्थस्य प्रमातुर्ब्रह्मत्वायोगादित्याशङ्क्य—प्रमातृत्वस्याज्ञानविलसितान्तःकरणतादात्म्यकृतत्वान्न बाध इत्याह—**अन्वेष्टव्येति** । '**य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकः सोऽन्वेष्टव्यः**' ( छां० ८ । ७ । १ ) इति श्रुतेर्ज्ञातव्यपरमात्मविज्ञानात् प्रागेवाज्ञानाच्चिद्धातोरात्मनः प्रमातृत्वम्, प्रमातैव ज्ञातः सन् पाप्मरागद्वेषमरणविवर्जितः परमात्मा स्यादित्यर्थः । प्रमातृत्वस्य कल्पितत्वे तदाश्रितानां प्रमाणानां प्रामाण्यं कथमित्यत आह **देहेति** । यथा देहात्मत्वप्रत्ययः कल्पितो भ्रमोऽपि व्यवहाराङ्गतया मानत्वेनेष्यते वैदिकैः तद्वत् लौकिकमध्यक्षादिकमात्मबोधावधि व्यवहारकाले बाधाभावात् व्यावहारिकं प्रामाण्यमिष्यतामिति भावः (**रत्नप्रभा**)॥

शङ्का—ननु शुक्तिरजतादि पदार्थों को, प्रतिभासमात्र होने के कारण "अनित्य" वा "असत्य" मानकर, उसके द्वारा मिथ्या मान सकते हैं परन्तु व्यवहार के साधक, सत्यबुद्धि के विषय, देहादि पदार्थ कैसे मिथ्या होसकते हैं ?

उत्तर—

यथा=जिस प्रकार शुक्तिधियः=शुक्तिज्ञान के पूर्वम्=पूर्व अर्थात् जब तक शुक्तिरूप अधिष्ठान का साक्षात्कार नहीं हुआ तब तक रजते=(शुक्ति में भ्रम से गृहीत) रजत में सत्यताग्रहः=सत्यत्वबुद्धि बनी रहती है तथा=वैसे ही नित्यात्मबोधात्=त्रैकालाबाध्य एकरस अद्वैत आत्मा के साक्षात्कार से प्राक्=पूर्व २ अनित्ये=अनित्य (दृष्टनश्वरस्वभाव) देहादि पदार्थों में भी सत्यताग्रहः=सत्यबुद्धि होती है।

जैसे शुक्तिरूप अधिष्ठान साक्षात्कार से "नेदं रजतम्" इस प्रकार बाधज्ञान होकर रजत में सत्यबुद्धि का अभाव हो जाता है और —"मिथ्यैवात्र मम रजतं प्रत्यभात्"= "शुक्ति में मुझ को मिथ्या ही रजत की प्रतीति हुई थी" ऐसा बोध होता है वैसे ही ब्रह्मसाक्षात्कार के उत्तरकाल में भी "नायं प्रपञ्चः परमार्थसन्"=यह प्रपञ्च परमार्थसत्य नहीं है—ऐसी बाधबुद्धि हो जाती है इस लिये दार्ष्टान्तभूत देहादि अनात्मप्रपञ्चरूप बन्ध और दृष्टान्तभूत शुक्तिरज-

तादिकों में अधिष्ठानज्ञान से पूर्व २ सत्यता की प्रतीति समान होने से दोनों मिथ्या हैं। भेद केवल इतना है कि—शुक्ति-रजतादिक तूलाऽविद्या के कार्य और देहादिक प्रपञ्च मूलाऽविद्या के कार्य हैं, परन्तु दोनों के अधिष्ठानज्ञानोत्तरबाध्यत्व में कोई विलक्षणता नहीं है ॥ १४ ॥

अधिष्ठानज्ञानात्पूर्वमध्यस्ते सत्यत्वबुद्धिं दर्शयित्वा अधिष्ठानज्ञानोत्तरं तत्र मिथ्यात्वबुद्धिं दृष्टान्तयति—"यथा" इति।

यथा शुक्तिधिया रूप्ये मिथ्यात्वमतिरिष्यते।
तथा नित्यधियाऽनित्ये मिथ्यात्वमतिरिष्यताम् ॥

यथा=येन प्रकारेण, शुक्तिधिया=अधिष्ठानभूतायाः शुक्तेः साक्षात्कारेण, रूप्ये=रजते मिथ्यात्वमतिः=मिथ्याज्ञानम्, इष्यते=काम्यते मन्यत इति यावत् सर्वैरेव वादिभिरिति-शेषः तथा=तेन प्रकारेण, नित्यधिया=नित्यस्य त्रैकालाबाध्यस्य ब्रह्मणः प्रपञ्चाधिष्ठानभूतस्य साक्षात्कारेण अनित्ये=नश्वरे प्रपञ्चे, मिथ्यात्वमतिः=मिथ्यात्वबुद्धिरपि इष्यताम्=काम्यताम्। अधिष्ठानाध्यस्तभावस्योभयत्रापि तुल्यत्वादिति भावः ॥ १५ ॥

सं०—पिछले श्लोक में दिखलाया गया है कि अधिष्ठानज्ञान से पूर्व २ अध्यस्त पदार्थ में सत्यत्व की प्रतीति होती है। अब अधिष्ठानज्ञान के उत्तर अध्यस्त पदार्थ में मिथ्याबुद्धि को उक्त दृष्टान्त से ही स्पष्ट करते हैं—

पदार्थ—यथा=जैसे शुक्तिधिया=शुक्ति के साक्षात्कार

से, रूप्ये=रजत में, मिथ्यात्वमतिः=मिथ्याबुद्धि इष्यते=मानी जाती है तथा=वैसे ही, नित्यधिया=ब्रह्मसाक्षात्कार के उत्तर अनित्ये=नश्वर प्रपञ्च में, भी मिथ्यात्वमतिः=मिथ्याबुद्धि, इष्यताम्=माननी चाहिये।

अर्थात् जिस प्रकार शुक्तिरजत का परस्पर अधिष्ठानाध्यस्तभाव होने से शुक्तिज्ञान रजतज्ञान का बाधक होता है वैसे ब्रह्मात्मा और प्रपञ्च (बन्ध) का भी परस्पर अधिष्ठानाध्यस्तभाव है, अतः ब्रह्मसाक्षात्कार को प्रपञ्चसहित प्रपञ्चज्ञान का बाधक होने से प्रपञ्च के मिथ्यात्व में कोई सन्देह नहीं (हो सकता है) ॥ १५ ॥

उक्तमर्थं निगमयति—"अनित्यत्वाद्"इति ।

**अनित्यत्वान्मृषा बन्धो यथा रज्जुभुजङ्गमः ।**
**तथा चायं तथा तस्मादित्येवमनुमीयते ॥१६॥**

अनित्यत्वात्=दृष्टनश्वरस्वभावत्वात् बन्धः=अहङ्काराद्यनात्मवर्गः (देहादिप्रपञ्चः) मृषा=मिथ्या, यथा=यद्वत्, रज्जुभुजङ्गमः=रज्जौ कल्पितः सर्पो मिथ्या भवति, रज्जुकल्पितः सर्पोऽपि दृष्टनश्वरस्वभावोऽनित्यो मिथ्या चेति तद्वत् बन्धोऽपीत्यर्थः। तथा चायम्=अयं बन्धोऽपि तथा नाम अनित्यत्वासत्यत्ववान्,तस्मात् तथा=अनित्यत्वादसत्यत्वाच्च तथा मिथ्येत्यर्थः । इत्येवम्, अनुमीयते="इति" इत्ययं शब्दः पञ्चावयववाक्यसमाप्तिं द्योतयति । एवं रीत्या

"बन्धो मिथ्या" "बन्धे मिथ्यात्वम्" इति वा अनुमीयते इत्यर्थः।

यद्यपि "नेह नानास्ति किञ्चन" (बृ० ४।४।१९॥ कठ० ४।११) "नतु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येत्" (बृ० ४।३।२३) इत्यादिश्रुतेः—

ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि।
तद्विद्यादात्मनो मायां यथाभासो यथा तमः॥(श्रीमद्भाग० २।८।३३)॥
यदन्यदन्यत्र विभाव्यते भ्रमादध्यासमित्याहुरमुं विपश्चितः।
असर्पभूतेऽहिविभावनं यथा रज्ज्वादिके तद्वदपीश्वरे जगत्॥
(अध्या० रा० उ० कां० ५।३७)

इत्यादिस्मृतेश्च परमास्तिकानां प्रपञ्चस्य मिथ्यात्वे न कोऽपि सन्देहः, तथापि—

न्यायचर्चेयमीशस्य मननव्यपदेशभाक्।
उपासैनैव क्रियते श्रवणानन्तरागता॥ (न्या० कु० १।३)

इत्याद्यभियुक्तोक्तेः परमतकुतर्ककुठारविभञ्जयिषया, तर्करसिकानाञ्च विनोदनार्थं पञ्चावयववाक्यद्वाराऽपि प्रपञ्चस्य मिथ्यात्वं साधितमित्यदोषः।

वार्त्तिकसारेऽप्युक्तम्—

वास्तवे शुक्तिशकले मायिकं रजतं यथा।
भासते तद्वदेवेदमद्वैते भेदभासनम्॥ इति॥

---

(१) अयमाशयः—द्व्याकाराऽनुमितिरभिमता कैश्चित् नैयायिकैः "पक्षो व्याप्यवान्" इति ज्ञानात् "पक्षः साध्यवान्" इत्याकारिका, "पक्षे व्याप्यः" इति ज्ञानात् "पक्षे साध्यम्" इत्याकारिका। तदनुसारेणेदमाकारद्वयप्रदर्शनम्।

(२) "प्रत्यक्षसिद्धमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः" इति वाचस्पतिमिश्राः। श्रुतिश्च नः प्रत्यक्षमित्याशयः।

सर्वेषामवयवानां लापनप्रकारस्त्वेवं ज्ञातव्यः—" प्रपञ्चो मिथ्या " इति प्रतिज्ञा । अनित्यत्वादसत्यत्वाच्चेति हेतुः । यद्यदनित्यमसत्यं वा तत्तन्मिथ्या यथा रज्जुभुजङ्गमः शुक्तिरजतादिकं चेत्युदाहरणम् । तथा चायम्=अयं प्रपञ्चः तथा अनित्यत्वाऽसत्यत्ववानित्युपनयः । तस्मात्तथा=अनित्यत्वाऽसत्यत्ववत्त्वान्मिथ्येति निगमनम् ।

एवञ्च—"प्रपञ्चो मिथ्या दृश्यत्वात्, जडत्वात् अनात्मत्वाच्छुक्तिरजतादिवद्" इत्येवमादीन्यपि बन्धमिथ्यात्वसाधकान्यनुमानानि बोध्यानि ।

अत्राह—न तावत्प्रपञ्च इति पक्षनिर्देशः, प्रपञ्चशब्देन ब्रह्मणोऽप्यभिधानेनं तस्यापि पक्षत्वोपपत्तौ बाधाद्यापत्तेः । नच प्रपञ्चपदेन विकारमात्रग्रहणेनादोषः इति वाच्यम्, परमते वियदादेः, सिद्धान्ते चाऽविद्यासम्बन्धादीनामविकारतया पक्षबहिर्भावेनापसिद्धान्तापत्तेः, शुक्तिरूप्यादेरपि पक्षत्वेनांशतः सिद्धसाधनाच्च ।

किञ्च—किमिदं नाम मिथ्यात्वम् ? न तावत् स्वसंसृज्यमानाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वम्, तथात्वस्याव्याप्यवृत्तिसंयोगादौ सर्वैरपि वादिभिः स्वीकारात् । नचाऽविद्याकार्यत्वं मिथ्यात्वम्, अविद्यादावव्याप्तेः । नापि ज्ञाननिवर्त्यत्वं तत् , सत्यस्यापि प्रपञ्चस्य परैर्ज्ञाननिवर्त्यत्वाऽभ्युपगमात् । अनिर्वचनीयत्वं तदिति चेत् ? तत्र—पृच्छ्यते, किं सद्विलक्षणत्वमनिर्वचनीयत्वम् ? असद्विलक्षणत्वम् ? सदसद्विलक्षणत्वं वा तत्त्वम् ? नाद्यः असतां शशशृङ्गादीनां सद्विलक्षणतयाऽप्यभि-

(१) अजन्यतयेत्यत्र तात्पर्यम् ।

(२) "स्व" पदेन यत्र मिथ्यात्वं साध्यं तस्य ग्रहः ।

थ्यात्वात् । न द्वितीयः—ब्रह्मणोऽप्यसद्विलक्षणत्वेन मिथ्यात्वापत्तेः न तृतीयः—सदसद्रूपप्रतियोग्यसिद्धेः, सदसदन्यतरनियमेन वस्तुनः, उभयभिन्नत्वस्यासम्भवपराहतत्वात् । इत्थञ्च—सत्त्वानधिकरणत्वे सत्यसत्त्वानधिकरणत्वं तत्त्वमित्यपि न, निर्धर्मके ब्रह्मण्यतिव्याप्तेः ।

किञ्च— किन्नाम दृश्यत्वम् ? न तावज्ज्ञानलक्षणफलव्याप्यत्वम्, अतीन्द्रियेषु तदसत्त्वेन भागाऽसिद्धेः । नापि वृत्तिविषयत्वं तत्, स्वप्रकाशस्यापि ब्रह्मणो वृत्तिविषयत्वाऽभ्युपगमेन व्यभिचारात् । एतेन जडत्व-कार्यत्व-विभक्तत्वादयो हेतवो निराकृता वेदितव्याः । तस्मादनुमानेन प्रपञ्चमिथ्यात्वसाधनमाशामोदकायितमित्येवं प्राप्तेऽभिदध्महे—

"प्रपञ्च" पदेन ब्रह्मभिन्नपदार्थमात्रविवक्षया ब्रह्मणः पक्षत्ववारणसम्भवेनादोषः । शुक्तिरूप्यादावांशिकसिद्धसाधनतावारणाय "मिथ्या" साध्ये सर्वं मिथ्येति विवक्षितम् । तथाच शुक्तिरूप्यादौ प्रपञ्चत्वेन ब्रह्मभिन्नतया साध्यासिद्धावपि सर्वस्याऽपि तत्त्वेन तदसिद्धेर्नैव सिद्धसाधनम् । अत एव घटादौ पृथिवीत्वेनेतरभेदनिश्चये सत्यपि सर्वपृथिवीत्वेन तदसिद्धेर्न सिद्धसाधनमिति नैयायिकोद्घोषोऽ[1]पि सङ्गच्छते । नन्वेवमपि अंशतः सिद्धसाधनमस्त्येवेति चेन्न, क्वचित् पक्षे शुक्तिरूप्यादौ मिथ्यात्व-

---

(१) यथा "सर्वा पृथिवी इतराभिन्ना गन्धवत्त्वाद् घटवद्" इत्यनुमाने सिद्धसाधनं न, एवमेव ब्रह्मभिन्नसर्वत्वावच्छेदेन साध्यस्वीकारेऽपि सिद्धसाधनं नास्तीत्यर्थः । पक्षैकदेशे साध्यनिश्चयस्य पक्षमात्रे साध्यानुमितिम्प्रत्यप्रतिबन्धकत्वादिति तु निगूढगदितम् ।

(२) नचैवं शुक्तिरूप्यस्यापि पक्षत्वेन कथं दृष्टान्ततेति वाच्यम् निश्चितसाध्यकत्वेन सपक्षत्वाविरोधात् ( शिखा० म० ) अस्यायमाशयः—पक्षभिन्नत्वे

निश्चयेऽपि पक्षतावच्छेदकनानात्वाभावात्, पक्षतावच्छेदकनानात्व एव तदभ्युपगमात् । अतएवाऽनित्ये[1] वाङ्मनसे इत्यत्रांशतः सिद्धसाधनमिति परस्यापि राद्धान्तः । एवं शुक्तिरूप्यस्यापि पक्षत्वेन कथं दृष्टान्ततेति परास्तम् तस्य निश्चितसाध्यकत्वेन सपक्षत्वाऽविरोधात् ।

वस्तुतस्तु—पक्षैकदेशे भवन्साध्यनिश्चयः न पक्षतावच्छेदकावच्छेदेन साध्यानुमितिम्प्रति प्रतिबन्धको भवतीति नियमः, अतोऽभेदानुमाने पक्षस्य दृष्टान्ततायाः सत्त्वेऽपि न दोषः ।

ननु—दृष्टान्तेऽपि न मिथ्यात्वसिद्धिः प्रमाणाभावात्, अनुमानान्तरेण तन्निश्चिये तु तत्राप्युत्तरोत्तरं दृष्टान्तान्तरेण मिथ्यात्वसाधनेऽनवस्थापातः । एवं व्याप्तिग्रहस्थलाभावान्न प्रपञ्चमिथ्यात्वसिद्धिरिति चेन्न, शुक्तिरूप्यस्य "नात्र रजतम्" इति त्रैकालिकाभावप्रतीतिविषयतया प्रत्यक्षप्रमाणेनैव मिथ्यात्वस्य निश्चितत्वाद्भवदुक्तदोषानवकाशात् ।

मिथ्यात्वञ्च—" स्वाश्रयत्वेनाभिमतयावन्निष्ठात्यन्ताभाव-

सति निश्चितसाध्यकत्वं दृष्टान्तत्वप्रयोजकमिति न वक्तव्यम् तदपेक्षया निश्चितसाध्यकत्वस्यैव दृष्टान्तत्वप्रयोजकत्वे लाघवात्, पक्षभिन्नत्वस्य च व्यर्थत्वात् ।

(१) "अनित्ये वाङ्मनसे इन्द्रियत्वाच्चक्षुरादिवद्"इत्यत्र वाक्त्वमनस्त्वरूपपक्षतावच्छेदकयोर्नानात्वेनांशतः वागंशे सिद्धसाधनमित्यर्थः ।

(२) इदञ्चाऽनिर्वचनीयख्यातिवादे स्फुटीभवितुमर्हति । उपलक्षणञ्चेदम्, अर्थापत्तिप्रमाणेनापि शुक्तिरूप्यमिथ्यात्वस्य साधयितुं शक्यत्वात् । शुक्तिरजतनिष्ठनिषिध्यमानत्वं , मिथ्यात्वं विनाऽनुपपन्नं सत्तन्मिथ्यात्वं कल्पयतीत्यर्थः । अधिकन्तु—समणिप्रभाशिखामण्यादिषु द्रष्टव्यम् ।

प्रतियोगित्वम्"। अभिमतपदमसम्भववारणाय। यावत्पदमर्थान्तरवारणाय। अत्र "स्व" पदेनाश्रितस्य ग्रहणम्, नतु कार्यं विवक्षितम् तथा सत्यविद्यादावव्याप्तेः। तथाच—आश्रिताश्रयत्वेनाभिमतयावति स्थितात्यन्ताभावप्रतियोगित्वमित्यर्थः। यावति स्वाश्रये स्वात्यन्ताभावासम्भवादभिमतपदमावश्यकम्। तथाच-वस्तुतो रजताद्यनाश्रयेऽपि शुक्त्यादौ रजताद्याश्रयत्वेनाभिमते वर्तमानरजताद्यत्यन्ताभावप्रतियोगित्वं शुक्तिरजतादेरस्तीति तत्सार्थक्यमेव। नचाऽनाश्रिताकाशादिषु लक्षणस्याऽव्याप्तिः, वियदधिकरणन्यायेन तस्यापि कार्यतया कारणाश्रितत्वस्यावश्यमभ्युपेतत्वात्।

यदि तु स्वाश्रये स्वरूपेण तदत्यन्ताभावाभावेऽपि पारमार्थिकत्वावच्छिन्नतदत्यन्ताभावसत्त्वान्न बाध इत्यभिमतपदं व्यर्थमिति तदाऽस्मिन्पक्षे स्वरूपेणैव ब्रह्मणि प्रपञ्चाभावोऽभ्युपगत इति ध्येयम्।

लक्षणे यावत्पदाभावे कपिसंयोगाद्याश्रयत्वेनाऽभिमतवृक्षे मूलावच्छेदेन वर्त्तमानात्यन्ताभावप्रतियोगित्वं शाखावच्छेदेन स्थितकपिसंयोगादेरस्तीति सत्यत्वाऽविरोधि प्रतियोगितदभाव-

---

(१) वियदधिकरणेति—ब्रह्मसूत्रीयद्वितीयाध्यायस्थतृतीयपादीयप्रथमाधिकरण इत्यर्थः। तत्र हि—"न वियदश्रुतेः" (ब्र० सू० २।३।१) इत्यादिना पूर्वपक्षयित्वा—"प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः" (ब्र०सू० २।३।६) इत्यादिना वियदुत्पत्तिः सिद्धान्तिता। आकाशादिप्रपञ्चस्य सर्वस्यापि अव्यतिरेकात्=ब्रह्माभिन्नत्वात् प्रतिज्ञाया एकविज्ञानप्रतिज्ञाया अहानिर्भवति, आकाशस्य ब्रह्माऽकार्यत्वे तु सा प्रतिज्ञा हीयेत, तस्मादस्त्युत्पत्तिराकाशस्य, शब्देभ्यः="ऐतदात्म्यमिदꣳ—" (छां० ६।८।७) इत्यादिशब्देभ्यश्च सा प्रतिज्ञासिद्धिरवगम्यते इति सूत्रार्थः।

सामानाधिकरण्यरूपार्थान्तरसिद्धिवारणाय तदुपात्तम्। तदुक्तमाचार्यैः—

सर्वेषामपि भावानां स्वाश्रयत्वेन सम्मते।
प्रतियोगित्वमत्यन्ताभावं प्रति मृषात्मता॥

इति। यद्वा—"अयं पटः एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी अवयवित्त्वात् (पटत्वात्) पटान्तरवत्" इत्यनुमानमपि मिथ्यात्वे प्रमाणम्। तदुक्तं तैरेव—

अंशिनः स्वांशगात्यन्ताभावस्य प्रतियोगिनः।
अंशित्वादितरांशिवद्दिगेषैव गुणादिषु॥

अत्रायमाशयः—यत्र यत्र पटादिष्ववयवित्वरूपो धर्मोऽस्ति तत्र तत्र एतत्सहस्रतन्तुकानिष्ठात्यन्ताभावप्रतियोगित्वमप्यस्ति। अवयवित्वञ्च धर्मः सहस्रतन्तुकपटेऽपि समानः। स एव च प्रकृताऽनुमाने पक्षधर्मतारूपेण प्रतीयते। तादृशपक्षधर्मताबलात्सहस्रतन्तुकपटस्यापि सहस्रतन्तुनिष्ठात्यन्ताभावो वक्तुं शक्यते, तादृशात्यन्ताभावप्रतियोगित्वरूपञ्च मिथ्यात्वं सहस्रतन्तुकपटे विद्यत एव।

अत्रेदं पदकृत्यं बोध्यम्—पटमात्र पक्षीकृत्यैतत्तन्तु-

---

(१) उक्तेऽर्थे चित्सुखाचार्याणां सम्मतिमाह—"सर्वेषाम्" इति। सर्वेषां भावानां मृषात्मता मिथ्यात्वमिदं यत्स्वाश्रयत्वेन सम्मतेऽत्यन्ताभावप्रतियोगित्वं नित्यमविद्यमानत्वमिति योजना।

(२)अंशिनोऽवयविनः, स्वावयवनिष्ठात्यन्ताभावप्रतियोगिन इति प्रतिज्ञायां हेतुमाह—"अंशित्वात्" इति। दिगिति—एवमेवैतद्गुणकर्मजात्यादयोऽपि तत्तत्तन्तुनिष्ठात्यन्ताभावप्रतियोगिनः तत्तद्रूपादिमत्त्वादितरतत्तद्रूपादिवदित्यादयोऽपि प्रयोगा ऊहनीयाः॥

निष्ठात्यन्ताभावबोधनेऽर्थान्तरता, पटान्तरस्यैतत्तन्तुनिष्ठत्वविरहादिति पक्षतावच्छेदककुक्षौ "अय" मित्येतत्पदस्य पक्षीकारः। एतत्तन्तुनिष्ठान्योन्याभावध्वंसादिप्रतियोगिताया एतत्पटे परेणाप्यङ्गीकारात् सिद्धसाधनतावारणाया"ऽत्यन्ताभावपदम्"। तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वोक्तावपि तन्त्वन्तरमादायार्थान्तरमित्ये"तत्तन्तुनिष्ठत्वेना"त्यन्ताभावो विशेषितः। पटान्तरे एतत्पटानारम्भकतन्तुभिरारब्धे एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वप्रसिद्ध्या नाऽप्रसिद्धविशेषणत्वमपीति हृदयम्।

न चैतत्संयोगिनि पटान्तरेंऽशित्वरूपहेतो; सत्त्वात् तत्रचैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वविरहाद् व्यभिचार इति वाच्यम्, तत्समवेतस्य तन्निष्ठात्यन्ताभावप्रतियोगित्वमभ्युपयतस्तत्संयोगिनस्तन्निष्ठात्यन्ताभावप्रतियोगित्वस्यावश्यमङ्गीकरणीयतया पक्षसमत्वात्, पक्षे पक्षसमे च व्यभिचारस्य कथकसम्प्रदायानुरोधेनाऽनुद्भाव्यत्वाच्च।

साध्याभावनिश्चयवति हेतुसन्देहे हेतोर्निश्चये वा तस्य दूषकत्वम्, नतु साध्यसन्देहवति पक्षे पक्षतानवच्छेदकधर्मवति सन्दिग्धसाध्यके धर्म्यन्तरे वा, तस्याऽनुमितौ प्राचीनमतासिद्धपक्षतामुद्रयाऽऽनुकूल्यादिति तत्त्वम्।

नाप्यव्याप्यवृत्तित्वेनार्थान्तरताशङ्का पटतदभावयोरेकाधिकरणवर्त्तित्वाभ्युपगमे विरोधकथाया अपि जगत्युच्छेदप्रसङ्गात्। वस्तुतस्तु संयोगतदभावावपि नैकाधिकरणवृत्ती अवच्छेदकभेदेनैव तयोः समावेशाङ्गीकारात्।

१—अत्र—"पक्षसमत्वञ्च प्रतिज्ञाविषयभिन्नत्वे सति साध्यसन्देहवत्त्वम्" इति निगूढोऽभिप्रायः ॥

संयोगतदभावयोरैकाधिकरण्याङ्गीकारे तु एतत्तन्तुत्वावच्छिन्नवृत्तिकत्वमत्यन्ताभावविशेषणं देयम्, एतत्कालीनत्वविशेषणदाने च पटोत्पत्तिपूर्वकालीनं तन्तुवृत्तिकपटाभावमादाय नार्थान्तरम् ।

एवञ्च—यत्कालावच्छेदेन यद्देशावच्छेदेन येन रूपेण येन सम्बन्धेन च यद्वस्तु वादिना सदित्युच्यते तत्कालावच्छेदेन तद्देशावच्छेदेन तेन रूपेण तेन सम्बन्धेन च तस्य वस्तुनोऽभावो मिथ्यावादिभिरभ्युपेयत इति पर्यवसन्नम् । नचैतादृशमिथ्यात्वसाधने "इह तन्तुषु पटः" इति प्रत्यक्षबाधः, तस्य चन्द्रप्रादेशिकत्वादिप्रत्यक्षवदतात्त्विकतया विपरीतज्ञानजन्यत्वेन चाऽप्रामाण्यज्ञानास्कन्दिततयाऽबाधकत्वात्, व्यवहारस्य चाऽतात्त्विकत्वेऽपि मरुमरीचिकागन्धर्वनगरस्वाप्नप्रियाश्लेषतच्चुम्बनकटाक्षभ्रूक्षेपादिवदेवोपपत्तेः। नचैवं मिथ्याभूताद्ब्रह्मज्ञानात्कथं सत्यमोक्षप्राप्तिरिति वाच्यम्,तस्मादपि तदुपपत्तेः। अत एव मधुसूदनसरस्वतीभि वेंदान्तकल्पलतिकायाम्—"कल्पितेनापि प्रतिबिम्बेन वास्तवबिम्बानुमानप्रामाण्याच्च स्वप्नार्थस्याप्यरिष्टादिसूचकत्वाच्च, क्वचित्तदुपलब्धमन्त्रादेर्जागरेऽप्यनुवृत्तेरबाधाच्च, एवं मिथ्याभूतादपि ज्ञानात् पारमार्थिकी ब्रह्मप्राप्तिर्न विरुध्यते, पारमार्थिकत्वे बाधाभावस्यैव प्रयोजकत्वाद्"इत्युक्तमिति सर्वमनवद्यम् ।

"दृश्यत्वं" नामाऽस्वप्रकाशत्वम् । स्वप्रकाशत्वं हि स्वाऽपरोक्षत्वे सति स्वातिरिक्तसत्तानपेक्षत्वम्, "यत्साक्षादपरोक्षाद् ब्रह्म" ( बृ० ३ । ४ । १ ) इति श्रुतेः । तथा चान्यानधीनापरोक्षत्वं पर्यवस्यति, तन्निरूपितभेदवत्त्वं हेतुः, तच्च नित्यपरोक्षे

१—ध्वंसप्रागभावाधिकरणेऽप्यत्यन्ताभावसत्त्वमिति मतमभ्युपेत्येदमुक्तमिति ध्येयम् ।

अन्याधीनापरोक्षे च घटादावस्तीति नासिद्धिः। अथवा—"वृत्तिव्याप्यत्वम्"एव दृश्यत्वमस्तु। न चैतस्मिन् पक्षे "दृश्यते त्वग्र्यया बुद्ध्या" (कठ० १।३।१२) इति श्रुतेर्ब्रह्मणोऽपि दृश्यत्वात्, तत्र मिथ्यात्वाभावेन हेतोर्व्यभिचार इति वाच्यम्, शुद्धस्य ब्रह्मणोऽदृश्यत्वात् "यत्तदद्रेश्यम्" (मुं० १।१।६) इति श्रुतेः। उपहितस्य दृश्यत्वे तु मिथ्यात्वमिष्टमेव, नहि वृत्तिदशायामनुपहितं भवतीति कुतो व्यभिचारः। नचैवं सति शुद्धसिद्धिर्न भविष्यतीति साम्प्रतम्, तस्य स्वप्रकाशत्वेन स्वतःसिद्धत्वात्। अधिकमद्वैतसिद्ध्यादौ मन्निर्मित-वेदान्ततत्त्वसमीक्षादौ च द्रष्टव्यम्। एतेन जडत्व-कार्यत्व-विविक्तत्वादयो हेतवोऽपि सूपपन्ना भवन्ति पूर्ववत्परिष्कारस्य कर्त्तुं शक्यत्वादिति दिक्।

सं०—अब उक्त अर्थ का पक्ष में निगमन करते हैं।

पदार्थ—अनित्यत्वात्=अनित्य होने से बन्धः=प्रपञ्च मृषा=मिथ्या है,यथा=जैसा कि रज्जुभुजङ्गमः=रज्जु सर्प (मिथ्या है) तथाचायम्=यह बन्ध भी अनित्यत्व तथा असत्यत्वरूप धर्मवाला है, तस्मात् तथा=अनित्यत्व तथा असत्यत्वरूप धर्मवाला होने से ही मिथ्या भी है। इत्येवम्=इस प्रकार (उक्त रीति के अनुसार) अनुमीयते=बन्ध का मिथ्यात्व अनुमान किया जाता है।

यहां इतना विशेष ध्यान रहे कि यद्यपि "नेह नानास्ति किञ्चन" इत्यादि अनेक श्रुतियों द्वारा बन्ध के मिथ्यात्व में आस्तिक जनों को कोई सन्देह नहीं तथापि अनुमान

रसिक जो वादी, उन के मुखमुद्रणार्थ, तथा जिन (अधम) जिज्ञासुजनों के हृदय में विशेष (करके) तर्क उत्पन्न होते हैं उनके असम्भावनादिदोषनिवृत्त्यर्थ मननरूप अनुमानयुक्ति से भी बन्ध का मिथ्यात्व दर्शाया गया है, श्रुतिवत् स्वतन्त्र नहीं।

किञ्च—पञ्चावयववाक्य का निम्न रीति से प्रयोग जानना चाहिये। तथाहि—

"प्रपञ्चो मिथ्या"=प्रपञ्च मिथ्या है यह "प्रतिज्ञावाक्य" है। "अनित्यत्वादसत्यत्वाच्च"=अनित्य, वा असत्य होने से, यह हेतुवाक्य है। "यद्यदानित्यं अथवा यद्यदसत्यं तत्तन्मिथ्या यथा रज्जुभुजङ्गम:"=जो जो अनित्य अथवा असत्य होता है वह वह अवश्य मिथ्या होता है जैसे रज्जुसर्प, वा शुक्ति-रजत, यह "उदाहरण वाक्य" है। "तथा चायम्"=यह प्रपञ्च अनित्यत्व तथा असत्यत्वधर्म वाला है—यह "उपनय वाक्य" है। "तस्मात्तथा"=अनित्यत्व, असत्यत्वधर्मवाला होने से ही यह प्रपञ्च वैसा अर्थात् मिथ्या भी है—यह "निगमनवाक्य" है। इस पञ्चावयववाक्यरूप परार्थानुमान-द्वारा दूसरे पुरुष को भी प्रपञ्चनिष्ठ मिथ्यात्व ज्ञान की दृढता हो सकती है॥ १६॥

सम्प्रति मोक्षोपदेशसार्थक्येन व्यतिरेकद्वाराऽपि बन्धस्य सत्यत्वं प्रतिषेधति—"सत्यत्वे" इति।

**सत्यत्वे नैव नाशः स्यादनाशे नैव मुक्तता ।**
**अमुक्तत्वे तु नो सिध्येन्मोक्षोपदेशसार्थता ॥१७॥**

"बन्धस्य" इति प्रकरणाल्लभ्यते । बन्धस्य प्रपञ्चात्मकस्य बन्धस्यात्मवत् सत्यत्वे= त्रैकालाबाध्यत्वे सति, नैव नाशः स्यात्= कदापि बाधो निवृत्तिर्वा न भवेत् । नहि सत्यस्य ज्ञानेन निवृत्तिः क्वापि दृष्टचरीति भावः । अनाशे=बन्धस्य अनिवृत्तौ, मुक्तता= मोक्षभावोऽपि नैव=नोपपद्यत इत्यर्थः ।

ननु—माऽस्तु कोऽपि मुक्तः बन्धस्तु सत्य एव तिष्ठत्वित्या-शङ्कयामाह—"अमुक्तत्वे तु" इति । "तु" ना बन्धसत्यत्वपक्षं व्यावर्त्तयति । अमुक्तत्वे तु=मोक्षस्याभावे तु, "मोक्षोपदेशसार्थता= मोक्षप्रतिपादकवेदशास्त्रस्य प्रामाण्यम्(अर्थात्) मोक्षोपदेश एव, नो सिध्येत्= नैव सिद्धा भवेत् । नहि वेदोक्तमुन्मत्तप्रलपित-मिति भावः ।

यतो वेदस्मृत्यादिग्रन्थेषु आञ्जस्येन मोक्षस्यैव परमपुरु-र्थताऽतोऽस्त्येव मुक्तता । तस्याश्च सत्यां बन्धस्य नाशप्रतियोगि-त्वम्, नाशप्रतियोगित्वे च बन्धस्याऽसत्यत्वम्, असत्यत्वे च शुक्तिरूप्यादिवन्मिथ्यात्वमेव पर्यवस्यतीति परः सारः ॥१७॥

सं०—अब मोक्षोपदेश की प्रमाणता[1] कथन करते हुए व्यतिरेक द्वारा बन्ध को मिथ्या दर्शाते हैं—

पदार्थ—सत्यत्वे=बन्ध के सत्य होने पर, नाशः उस का कभी नाश न एव=नहीं स्यात्=हो सकता (जैसा कि सत्य आत्मा का नाश नहीं होता ) अनाशे=नाश के अभाव से

(१) अनित्य बन्ध की सत्यता में बाधक युक्ति कथन करते हैं ।

मुक्तता न एव=मुक्ति की सिद्धि नहीं हो सकती, अमुक्तत्वे तु=यदि मोक्ष कोई पदार्थ न होता अर्थात् मोक्ष परमपुरुषार्थ न होता तो मोक्षोपदेशसार्थता=मोक्षोपदेश करने वाले वेदादि शास्त्र की प्रमाणता, नो सिध्येत=सार्थक न होती।

सार यह कि--मोक्ष के अभाव से मुक्ति प्रतिपादक शास्त्र व्यर्थ हो जाता, परन्तु शास्त्र में व्यर्थापत्ति दोष के अभाव से बन्ध को मिथ्या मानाना ही समीचीन है ॥१७॥

ज्ञाननिवर्त्यत्वादपि बन्धस्य मिथ्यात्वमित्याह[1]—"अपिच" इति।

**अपि च ज्ञाननाश्यं हि बन्धं शास्ति स्वयं श्रुतिः।**
**ज्ञाननाश्यस्य सत्यत्वं न दृष्टं न च युज्यते ॥१८॥**

अपि च=किञ्च, हि=निश्चयेन श्रुतिः="ज्ञात्वा देवं सर्वपाशापहानिः" इत्यादिर्वेदो भगवान् स्वयम्=स्वयमेव स्पष्टं बन्धम्=सुखदुःखात्मकं प्रपञ्चं ज्ञाननाश्यम्=ज्ञानेन नाश्यं निवर्त्यं बाध्यमिति यावत् शास्ति=उपदिशति।

भवत्वेवं प्रकृते किमायातमित्याह—"ज्ञाननाश्यस्य" इति। ज्ञाननाश्यस्य=ज्ञाननिवर्त्यस्य सत्यत्वम्=अबाध्यत्वं, न=नैव दृष्टम्=प्रमाणसम्प्रतिपन्नम्। न च=न वा युज्यते=युक्तियुक्तमस्तीत्यर्थः।

अयमाशयः—"य इत्तद्विदुस्तेऽमृतत्वमानशुः" (ऋ० २।३।१८।२३) "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" (यजु०३१।१८;श्वे०३।८;६।१८)"तमेव विद्वान् न बिभाय मृत्योः"(अथर्व०

(१) बन्धस्य मिथ्यात्वे हेत्वन्तरमप्याहेत्यर्थः।

१०।५।४४ ) अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते " ( कठ० ३ । १५ ) " यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति " ( मुं० ३ १ । ३ ) " ब्रह्मविदाप्नोति परम्" ( तै० २ । १ ) " तरति शोकमात्मवित् " ( छां० ७ । १ । ३ ) " य एतद्विदुरमृतास्ते भवन्ति " ( श्वे० ३ । १ ) " यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति" (श्वे०६ । २०) "यस्तु विज्ञानवान् भवति समनस्कः सदाशुचिः । स तु तत्पदमाप्नोति यस्माद्भूयो न जायते " (कठ० १ । ३ । ८) "स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति " ( मुं० ३ । २ । ९ ) " तद्यो यो देवानां प्रत्यबुद्ध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम् " ( बृ० १ । ४ ।१० ) इत्यादयः परःशतमागमा ब्रह्मज्ञानस्यैव निःश्रेयससाधनतामुपदिशन्ति । तद्यदि बन्धः सत्योऽभविष्यत् कदापि भगवान्वेदस्तस्य ज्ञाननिवर्त्यत्वं नोपादेक्ष्यत् । उपदिशति चासौ निःश्रेयसं, तत्साधनं ब्रह्मज्ञानं, तन्निवर्त्यं चोच्चावचयोनिप्राप्तिपरिहारलक्षणं बन्धापरपर्यायं संसारम् ,तेन ज्ञाननाश्यस्य तस्य मिथ्यात्वमेवेति श्लिष्यते । अत्रायं प्रयोगः—"बन्धो मिथ्या ज्ञाननिवर्त्यत्वाच्छुक्तिरूप्यवद् " इति ॥ १८ ॥

सं०—बन्ध के मिथ्यात्व में अन्य हेतु कथन करते हैं—

पदार्थ—अपिच=किंच हि=निश्चय करके श्रुतिः=वेद भगवान बन्धम्=बन्ध को ज्ञाननाश्यम्=ज्ञान से निवृत्त होने

(१) शिवमिति पाठान्तरम् । विज्ञानभगवत्कृतविवरणे " शिवमविज्ञायेत्यस्मिन्पाठे "ज्ञात्वा शिवं शान्तिमत्यन्तमेति" इत्युक्तत्वात्। प्रकृतिप्राकृतमलैरनास्कन्दितस्वरूपं शिवमविज्ञाय इत्यर्थः" इत्युक्तत्वात् ।

योग्य स्वयम्=स्वयमेव स्पष्ट शास्ति=कथन करता है (और) ज्ञाननाश्यस्य=ज्ञानद्वारा निवर्त्तनीय पदार्थ का सत्यत्वम्=सत्य पना, न=न तो कभी दृष्टम्=देखा ही गया है, न च=और ना ही युज्यते=सत्य का ज्ञान से निवृत्त होना युक्तियुक्त हो सकता है।

यहां अनुमान का आकार ऐसा जानना--" बन्ध मिथ्या है, ज्ञानद्वारा निवृत्ति के योग्य होने से, शुक्ति रजत की न्याईं और " यद्यद्यज्ज्ञाननाश्यं तत्तन्मिथ्या"= " जो २ ज्ञान से निवर्त्तनीय है वह २ मिथ्या होता है " यह व्याप्ति का आकार जानना ॥१८॥

ज्ञाननाश्यत्वहेतुना बन्धमिथ्यात्वमुपसंहरति "तथा च" इति ।

**तथा च ज्ञाननाश्यत्वाद्बन्धो मिथ्याऽहिवत्स्रजि ।**
**अन्यथा रज्जुसर्पादेः सत्यत्वं केन वार्यते ॥१९॥**

तथा च=इत्थं दर्शितरीत्या स्रजि=रज्जौ मालायां वा अहिवत्=सर्पवत् ज्ञाननाश्यत्वात्=ज्ञाननिवर्त्यत्वाद्धेतोः बन्धः=प्रपञ्चः मिथ्या=प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगी ज्ञानप्रयुक्तावास्थितिसामान्यविरहप्रतियोगी वा अस्तीति शेषः ।

विपक्षे दण्डमाह—"अन्यथा" इति । अन्यथा=ज्ञाननाश्यस्य मिथ्यात्वानङ्गीकारे, रज्जुसर्पादेः=रज्ज्वाद्यधिष्ठाने कल्पितभुजङ्गादेः सत्यत्वम्=अबाध्यत्वं केन=केन वादिना प्रमाणेन वा, वार्यते=निवार्यतेत्यर्थः । यदि ज्ञाननिवर्त्यस्य बन्धस्यापि सत्यत्वमिष्येत तर्हि वादिना रज्जुसर्पादीनामपि सत्यत्वमङ्गीक्रियेतेति सोपहासोक्तिः ॥१९॥

सं—अब "ज्ञाननाश्यत्व" हेतु से बन्ध के मिथ्यात्व का उपसंहार करते हैं।

पदार्थ—तथा च=इस प्रकार दर्शित रीति के अनुसार स्रजि=माला व रज्जु में प्रतीयमान अहिवत्=सर्प की न्याई ज्ञाननाश्यत्वात्=ज्ञान द्वारा निवर्त्तनीय होने के कारण बन्धः= देहादि अनात्मप्रपञ्च मिथ्या=मिथ्या है। अन्यथा=यदि ऐसा न माना जाय तो, रज्जुसर्पादेः=रज्जु में प्रतीयमान कल्पित सर्पादि पदार्थ की सत्यत्वम्=सत्यता, केन=किस प्रमाण द्वारा कोई भी वादी वार्यते=दूर कर सकता है।

यदि वादी ज्ञाननाश्य होने पर भी बन्ध को सत्य माने तो उसे रज्जुसर्पादि कल्पित पदार्थ भी सत्य मानने चाहिये। पर ऐसा किसी वादी को भी इष्ट न होने से उक्त-हेतु द्वारा बन्ध का मिथ्यात्व ही सिद्ध होता है, सत्यत्व नहीं ॥ १९ ॥

ननु-ज्ञानप्रागभावोऽपि ज्ञाननाश्यः, न चासौ मिथ्या, अत-स्तत्र व्यभिचार इत्याशङ्क्याह-"प्रागभावस्य"इति।

**प्रागभावस्य नाशो हि कार्यजन्मक्षणस्ततः।**
**तत्सामग्रीविनाश्योऽतो न हेतोर्व्यभिचारिता॥२०**

हि=यतः, कार्यजन्मक्षणः=कार्यस्य वृत्तिज्ञानस्य यज्जन्मोत्पत्ति-स्तस्य क्षण एव क्षणो यस्य नाशस्य स तादृशः कार्यजन्मक्षणः प्रागभावस्य=ज्ञानप्रतियोगिकप्रागभावस्य नाशः=निवृत्तिर्ध्वंसो

वाऽस्ति, ततः=तस्मात्कारणात् तत्सामग्रीविनाश्यः=ज्ञानोत्पत्तिसामग्रीविनाश्यः प्रागभावो नतु ज्ञानमात्राऽपनोद्यः। नह्यनुत्पन्नः प्रतियोगी कस्यचिदपनोदकः सम्भवितुमर्हतीति भावः। अतः=ज्ञानमात्रापनोद्यत्वाभावात्, हेतोः=मिथ्यात्वसाधकस्य "ज्ञाननाश्यत्व" रूपहेतोः न व्यभिचारिता=व्यभिचारित्वं नास्ति साध्याभाववद्वृत्तित्वरूपो व्यभिचारो नास्ति। तद्व्यभिचारित्वाख्यानन्तु वादिनः सिद्धान्ताऽज्ञानमूलकमेवेत्यर्थः।

ज्ञानप्रागभावो न केवलं ज्ञाननाश्यः, अपि तु ज्ञानोत्पत्तिसामग्रीविनाश्योऽपि, इह तु नियमेन ज्ञानमात्रबाध्यत्वं विवक्षितमिति परः सारः॥२०॥

सं०—ननु "ज्ञाननाश्यत्व" रूप हेतु व्यभिचारी है क्योंकि "मिथ्यात्व" रूप साध्य के अभाव का अधिकरण जो ज्ञानप्रागभाव, उस में भी उक्त हेतु विद्यमान है। जो हेतु साध्याभाव के अधिकरण में वृत्तिमान् हो वह "व्यभिचारी" हेत्वाभास कहाता है। इस आशङ्का की निवृत्ति के लिये अग्रिम ग्रन्थ को लिखते हैं—

पदार्थ—हि=जिस कारण से, प्रागभावस्य=ज्ञान प्रागभाव का नाशः=नाश, कार्यजन्मक्षणः=कार्य की उत्पत्तिकाल में होने वाला है ततः=इस कारण से तत्सामग्रीविनाश्यः=ज्ञान (वृत्तिज्ञान) की सामग्री[1] द्वारा विनाश्य है। अतः=इस कारण से हेतोः="ज्ञाननाश्यत्व" हेतु की व्यभिचारिता=व्यभिचारिता, न=नहीं हो सकती।

(१) सा चेन्द्रियसम्प्रयोगादिरूपा।

भाव यह है कि—"जिस प्रतियोगी की उत्पत्ति नहीं हुई वह अपने प्रागभाव का नाशक कदापि नहीं हो सकता" इस नियम के अनुसार ज्ञानप्रागभाव ज्ञानमात्र द्वारा विनाश्य नहीं किन्तु उसके नाश में इन्द्रियसम्प्रयोग तथा आद्यक्षण का सम्बन्ध भी हेतु है। प्रकृत प्रपञ्च के मिथ्यात्व अनुमान में तो एकमात्र "ज्ञाननाश्यत्व" हेतु के द्वारा ही पक्ष में बाध्यत्वरूप साध्य विवक्षित है, इसलिये वादी का उक्त हेतु को व्यभिचारी कथन करना केवल सिद्धान्त के अज्ञान से ही जानना चाहिये ॥२०॥

ननु नायमेकान्तनियमो यज्ज्ञाननिवर्त्यस्य मिथ्यात्वमेवेति, सत्यस्यापि ब्रह्महत्याख्यपापस्य सेतुदर्शनेन निवृत्तिस्मरणात्। तथाच—"बन्धो न निवृत्तिप्रतियोगी सत्यत्वादात्मवद्" इति सत्प्रतिपक्षताऽपि हेतोरित्याशङ्कामपवदितुमाह—"सेतुं दृष्ट्वा" इति।

**सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति।**
**इति यत्स्मर्यते तत्र दृष्टः कर्मसमुच्चयः ॥२१॥**

समुद्रस्य=सागरस्य सेतुम्=सेतुबन्धं दृष्ट्वा=आलोक्य ब्रह्महत्याम्=ब्राह्मणहननजनितं पाप्मानम्, व्यपोहति=दूरीकरोति प्रायश्चित्तीति शेषः, इति=एवंरूपेण यत् स्मर्यते=मन्वादिभिर्महर्षिभिः श्रुतिदृष्ट एवार्थः स्मृत्योपनिबध्यते तत्र[1]=तस्मिन् सेतुदर्शने कर्म-

1 तत्रेति मूलस्थपदस्य ब्रह्महत्याप्रायश्चित्तविधायके पराशरादिस्मृतिशास्त्रे इत्यर्थोऽपि ग्राह्यः। अस्मिन् पक्षे "दृष्टः" इति पदं "विहितः" इत्यर्थकं ग्राह्यम्।

समुच्चयः=तद्दर्शनाङ्गभूतः क्रियाकलापोऽपि दृष्टः=प्रमाणसिद्धोऽस्तीति शेषः।

न हि सेतुदर्शनमात्रस्य पापनाशकत्वम्, तथा सति तत्रत्यम्लेच्छादीनामपि पापनाशप्रसङ्गात्। किन्तु तत्र छत्रपादुकादिवर्जन-दोषोद्घोषण-दूरदेशगामित्व-भिक्षाभोजित्वादिकर्मकलापस्यापि कृतिसाध्यतया तद्विशिष्टसेतुदर्शनस्यापि कृतिसाध्यत्वमेवेति विशिष्टरूपेण सेतुदर्शनस्य विधानमुपलभ्यते। आत्मज्ञाने तु नास्ति किञ्चिद्विशेषणम्, यस्य कृतिसाध्यतया तद्विशिष्टज्ञानस्यापि विधेयत्वं प्रतिपद्येमहि। निराकरिष्यते च कर्मणां समुच्चयः। सूत्रकारोऽपि—"उपमर्दश्च" (ब्र०सू० ३।४।१६) इत्यत्र विद्यायाः कर्मशेषत्वं व्युदस्यन् समस्तस्य प्रपञ्चस्याऽविद्याप्रत्युपस्थापितस्य क्रियाकारकफललक्षणस्य विद्याबलेन स्वरूपोपमर्दमनुशास्ति। तथा चास्य विषयवाक्यभूता श्रुतिरपि—

---

२ तथा चोक्तं पराशरेण—

चातुर्विद्योपपन्नस्तु विधिवद्ब्रह्मघातके।
समुद्रसेतुगमनं प्रायश्चित्तं विनिर्दिशेत्॥
सेतुबन्धपथे भिक्षां चातुर्वर्ण्यात्समाहरेत्।
वर्जयित्वा विकर्मस्थाञ्छत्रोपानद्विवर्जितः॥
अहं दुष्कृतकर्मा वै महापातककारकः।
गृहद्वारेषु तिष्ठामि भिक्षार्थी ब्रह्मघातकः॥
गोकुलेषु च गोष्ठेषु ग्रामेषु नगरेषु च।
तपोवनेषु तीर्थेषु नदीप्रस्रवणेषु च॥
एतेषु ख्यापयेदेनः पुण्यं गत्वा तु सागरम्।
ब्रह्महापि प्रमुच्येत स्नात्वा तस्मिन्महोदधौ॥ इत्यादि।

"यत्र वा अस्य सर्वमात्मैवाऽभूत् तत्केन कं पश्येत् केन कं जिघ्रेत्" (बृ० ह०२।४।१४) एत्येवंरूपा ज्ञाननाश्यस्य मिथ्यात्वपक्ष एव घटते।

इदमत्रावधानीयम्—अविद्यादिद्वैतलक्षणः सर्वोऽप्ययं प्रपञ्चबन्धो मिथ्यैव। यथा—जीवतो देवदत्तस्य गृहाऽसत्त्वं बहिःसत्त्वाभावेऽनुपपद्यमानं बहिःसत्त्वं कल्पयति, यथा वा—विनश्वरायाः यागादिक्रियाया देहान्तरभोग्यस्वर्गसाधनत्वश्रुतिरनुपपद्यमानाऽऽन्तरालिकमपूर्वं कल्पयति, एवमेव श्रौतं बन्धस्य ज्ञाननिवर्त्यत्वं तस्य सत्यत्वेऽनुपपद्यमानं तन्मिथ्यात्वमप्यर्थापयति।

एवं बन्धस्य मिथ्यात्वे सिद्धे अग्निहोत्रप्राणोपासनादि सर्वं बाह्यं मानसं वा कर्मजातं तन्निवर्हणाय नैव क्षमं भवितुमर्हति। तथा चायं प्रयोगः—"बन्धो न कर्मनाश्यो मिथ्यात्वाद्रज्जुसर्पादिवद्" इति। नच स्वाप्नमुद्गरादिप्रहारक्रियाया मिथ्याभूतस्वाप्नघटादेर्नाशदर्शनाद्धेतोरनैकान्तिकतेति शङ्कनीयम् स्वप्ने घटवन्नाशस्यापि जाग्रत्संस्कारसंस्कृतान्तःकरणपरिणामरूपत्वेन तस्मिन्नुद्बुद्धसंस्काराद्यतिरेकेण मुद्गरप्रहारादेरन्वयव्यतिरेकाऽसम्भवादहेतुत्वे तज्जन्यताप्रतीतेरारोपपौर्वापर्यमात्रनिबन्धनत्वात्। अत एव स्वप्ने नष्टस्य क्वचित्पुनरुन्मज्जनप्रत्ययः, जागरे पुत्रवधादेश्च "न मे पुत्रो हतः" इति बाधश्चोपपद्यते। जाग्रद्घटादेर्वस्तुनो मिथ्याभूतस्य मुद्गरप्रहारनाश्यत्वेऽपि परेषां मिथ्यात्वसम्प्रतिपत्तेर्व्यभिचारोद्भावनस्यासम्भवपराहतत्वात्। अस्तु वा कारणीभूताज्ञाननिवृत्त्यधीननिवृत्तिलक्षणात्यन्तिकनाशस्यैव साध्यघटकत्वम्, मुद्गरप्रहारादिना च घटादेः सूक्ष्मावस्थापत्तिः रूपतिरोधानमात्रं नात्यन्तिको विनाशः। अन्यथा नष्टघटादेर्ज्ञानं न स्यात् असतोः सम्बन्धायोगादित्याद्यन्यत्र विस्तरः।

अयमभिसन्धिः—"ये जनाः पुण्यकृतः स्वर्गं लोकं यन्ति तेषामेतानि रूपाणि नक्षत्राणि" (　　　　　　)इति श्रुत्या स्वर्गित्वेन प्रसिद्धानां नक्षत्राणां पातदर्शनेन कृतकत्वहेतुनाऽनुमानेन च, नित्यस्य साधनापेक्षाऽनुपपत्तिप्रसूतार्थापत्त्या "तद्यथेह कर्मजितो लोकः" (छां० ८ । १ । ६) "प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो नाभिनन्दन्ति मूढाः जरामृत्युं ते पुनरेवाऽपियन्ति" (मुं० १ । २ । ७) "दूरमेते विपरीते विषूची" (क० १ । २ । ४) "अविद्यायामन्तरे वर्त्तमाना" (क० १ । २ । ५) "न कर्मणा न प्रजया धनेन" (कै० २; महाना० २।१२।३) "नास्त्यकृतः कृतेन" मुं० १ । २ । १२) "अमृतस्य तु नाशास्ति वित्तेन" (बृ० २ । ४ । २;४ । ५।३) इत्यादिश्रुतिशतैः "ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति" (भ०गी०९।२१) इत्यादिस्मृतिभिश्च स्वर्गादेः कर्मफलस्य अनित्यतायां न कोऽपि शङ्कावकाशः । निश्चिते च तदनित्यत्वे "यन्न दुःखे न सम्भिन्नम्" इत्यादि श्रुतेः[१] "आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते" इतिस्मृतिर्दर्शितदिशा आपेक्षिकनित्यत्वपरत्वमेवाचष्टे । अक्षय्यश्रुतिरपि न स्वर्गस्याऽक्षय्यत्वमाह, किन्तु सुकृतस्य । तत्तु न स्वतः पुरुषार्थः । वस्तुतस्तु सुकृतस्याक्षय्यत्वं न सम्भवति फलनाश्यत्वनिश्चयात् । जन्यभावस्य विनाशित्वनियमात् । "अतोऽन्यदार्त्तम्" (बृ० ३ । ४ । २; ३ । ५ । १; ३। ७ । २३) इत्यात्मातिरिक्तस्य नश्वरत्वश्रुतेश्च । तस्मादसावर्थवादो लक्षणया चिरस्थायिफलत्वप्रतिपादनेन कर्म

१ "यन्न दुःखेन सम्भिन्नम्" इति भट्टवार्तिकमिति केचित्, स्मृतिरियमिति विज्ञानभिक्षवः, परिमलादिषु प्रामाणिकग्रन्थेषु श्रुतित्वेन व्यवहारादर्थवादरूपा श्रुतिरियमिति मादृशाः" इत्याहुः साङ्ख्यतत्त्वकौमुदीटिप्पण्यां श्रीस्वामिबालरामोदासीनाः ।

प्ररोचनार्थो न बहुतरप्रमाणविरुद्धमर्थं साधयितुं क्षमते। नच "तद्यथे" ति श्रुतिवचनानां भवदभिमतं कर्मोपासनाङ्गभूतात्मप्रशंसार्थत्वान्न स्वार्थे प्रमाण्यमिति वाच्यम्, औपनिषदस्यात्मनोऽन्यशेषत्वाभावात्। नह्यशनायाद्यतीतमपेतब्रह्मक्षत्रादिभेदमात्मतत्त्वं कर्माङ्गभावं भजते, प्रत्युत कर्त्तृत्वाद्यध्यासजातविरोधिज्ञानविषयत्वात्कर्मजातमुपमृद्नात्येवेति युक्तमुत्पश्यामः। "कर्मणैव हि संसिद्धिमास्थिता जनकादयः" (भ०गी० ३। २०) इतिस्मृतिरपि चित्तशुद्ध्यादिद्वारा ज्ञानोपायतया मोक्षे कर्मणामावश्यकत्वं दर्शयन्ती नैवोपेयज्ञानस्य मोक्षफलं प्रति स्वातन्त्र्यंप्रत्याचष्टे समुच्चयं वाऽभिधत्ते। किञ्च—सञ्चितागामिकर्मणां भोगानारम्भाभ्यामपि नैवेष्टसिद्धिः अनेककोटिजन्मसञ्चितानां स्वर्गादिष्वभुक्तफलानामपि बहुतरजन्मारम्भककर्मराशीनां सम्भवादित्यवोचाम।

कार्त्तिक्यां कृत्तिकायोगे यः कुर्यात्स्वामिदर्शनम्।
सप्तजन्मसु विप्रः स्याद्धनाढ्यो वेदपारगः॥
श्वशूकरखरोष्ट्राणां गोजाऽविमृगपक्षिणाम्।
चाण्डालमृतपानाश्च ब्रह्महा योनिमृच्छति॥

इत्यादिस्मृतेरेकैकस्यापि अनेकविचित्रजन्मारम्भकस्य सुकृतदुष्कृतकर्मणः सम्भवाच्च। श्रुतिरपि—"तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा, अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा शूकरयोनिं वा चाण्डालयोनिं वा"। (छां० ५। १०। ७) "अथैतयोःपथोर्न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्त्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानम्" (छां० ५। १०। ८) इति सानु-

शयानामारोहावरोहादि दर्शयति। प्रपञ्चितञ्चैतत् "कृतात्यये ऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवञ्च" (ब्र० सू० ३।१।८) इत्यत्र सूत्रभाष्ये। किञ्चैवं सति विधिनिषेधानधिकारिणां श्वशूकरादीनां सञ्चितकर्मानवशेषात् भोगेन च प्रारब्धक्षपणादनायासेनैव मुक्तिः स्यात्। तस्माद्-"एतं ह वाव न तपति किमहꣳसाधु नाकरवम् किमहं पापमकरवम्" (तै० २।९) इत्यादिश्रुतेः, "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन" (भ० गी० ४।३७) इत्यादिस्मृते श्च सर्वकर्मोच्छेदक्षमं ज्ञानमेव मोक्षस्य साधनं, तच्च बन्धस्य सत्यत्वेऽनुपपद्यमानं तन्मिथ्यात्वं साधयतीति स्थितो राजमार्गः।

यत्तु—समुच्चयवादिभिर्मोक्षे ज्ञानकर्मणोः समुच्चयः, स च केषाञ्चिन्मते ज्ञानं प्रधानमप्रधानं कर्म, केषाञ्चित्कर्म प्रधानमप्रधानं ज्ञानम्, अपरेषान्तु द्वयोः साम्यमिति त्रिविधः। तत्र भर्त्तृप्रपञ्चादिकानां प्राचां वृत्तिकाराणामयमाशयः—यदाम्नायस्य क्रियार्थत्वादित्युक्तेः सकलस्यापि वेदस्य क्रियापरत्वमास्थेयम्। इयांस्तु विशेषो यद्वेदस्य पूर्वो राशिः शरीरसाध्यां यज्ञादिक्रियां विधत्ते परो राशिस्तूपासनाख्यां मानसीं क्रियाम् "आत्मानमेव लोकमुपासीत" (बृ० १।४।१५) इत्यादि दर्शनात्। अतो यानि वाक्यानि तत्त्वमस्यादीन्यात्मस्वरूपमात्रपर्यवसायीनि भान्ति

---

१ सूत्रार्थस्तु—कृतस्य=स्वर्गप्रापककर्मजातस्य भोगेन अत्यये नाशे अनुशयवान्=अनुशयशब्देनामुष्मिकफलप्रापककर्मातिरिक्तं कर्मोच्यते तद्वानेवावरोहति इति शेषः। कुतः दृष्टस्मृतिभ्याम्=श्रुतिस्मृतिभ्याञ्चेत्यर्थः। श्रुतिः—"तद्य इह रमणीयचरणा" इत्यादिका, स्मृतिः—"प्रेत्यकर्मफलमनुभूय ततः शेषेण" इत्यादिका, ताभ्यामनुशयवन्त एवाऽवरोहन्तीत्यर्थः। ते चावरोहिणः यथेतमनेवञ्च=यथागतं धूमादिमार्गेण, अनेवञ्च तद्विपर्ययेण वक्ष्यमाणाभ्रादिमार्गेणावरोहन्तीत्यर्थः।

तत्रापि तत्तत्क्रियाध्याहारेणैकवाक्यताऽध्यवसातव्येति रीत्या प्रसङ्ख्यानमेव मोक्षकारणं मन्यामहे किन्तु—"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" ( छां० १ । १ । १० ) इति श्रुतेः केवलकर्मणामनित्यं फलं कर्मसमुच्चितं सत्कर्मोपकृतं तन्नित्यफलप्रदमित्येकः समुच्चयपक्षः ।

भाट्टास्तु—यद्यपि सर्वो वेदो न क्रियामात्रपरः क्वचित्सिद्धार्थप्रतिपादकेष्वपि वेदवाक्येषु प्रामाण्यदर्शनात्सिद्धार्थेऽपि सङ्गतिग्रहस्यावर्जनीयत्वात्तथापि अधीतसाङ्गवेदो विधिवद्विचारितवेदार्थ एव कर्माधिकारीति नात्र विवदामहे, अर्थाज्ज्ञातौपनिषदात्मतत्त्वस्यैव कर्माधिकार इति ज्ञानं कर्म चेति सममेवामृतभावहेतुर्न तयोः परस्परमङ्गाङ्गिभावः "विद्याश्चाऽविद्याश्च" (ईश० ११) इति श्रुतेः

उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः ।
तथैव ज्ञानकर्मभ्यां प्राप्यते शाश्वती गतिः ॥

इत्याद्यभियुक्तोक्तिश्चेत्याहुः ।

तदेतदसङ्गतमिव पञ्चास्योरणयोरिव बाध्यबाधकभावेन तयोरेकदेशानवस्थानात्समुच्चयाऽनुपपत्तेः । तथाचोक्तं वार्त्तिकसारे ( तृतीयाध्यायस्थतृतीयब्राह्मणे )

हेतुस्वरूपकार्येषु विरोधस्त्वनयोःस्फुटः ॥ २० ॥
अभ्यासःकर्मणोहेतुः प्रमाणं बोधकारणम् ।
न भासकं कर्मरूपं बोधरूपं तु भासकम् ॥
कर्मकार्यं भाविजन्म तन्निवृत्तिस्तु बोधजा ।
समुच्चितात्केवलाद्वा नातो मोक्षोऽस्ति कर्मणः ॥२२॥ इति ।

---

१ तत्=प्रसङ्ख्यानम् । २ द्वयोरप्युपरिदर्शितो वाद इत्यर्थः ।

अत्रायं सिद्धान्तसारः—"कर्मणा पितृलोको विद्यया देवलोकः" (बृ० १।५।१६) इतिश्रुतेः, "ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इति (भ० गी० ९।२१) स्मृतेः, "यत्कृतकं तदनित्यम्" इत्यनुमानानुग्रहाच्च अमृतभावम्प्रति कर्मणां मोक्षसाधनत्वप्रत्याशाऽऽकाशलेहनन्यायमनुरुन्ध इति परमास्तिकानां न काऽपि संशीतिः। किन्तु कर्मानुष्ठानद्वारा शुद्धचित्तस्य ज्ञानेऽधिकार इति तत्त्वज्ञानं स्वोत्पत्तौ सापेक्षमपि स्वं मोक्षाख्यं फलं प्रसोतुं नान्यत् किमप्यपेक्षते। नचोपास्तिक्रियाद्वाराऽप्यसंसारिभावलाभ उपनिषदामभीष्टः "तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" (केन० १।४) इत्यादिश्रुतेरुपास्यत्वनिषेधात्। तस्मात्प्राणाद्युपास्तीनां कामं कर्मसमुच्चयः सम्भवेदपि, नतु ब्रह्मविद्यासमुच्चयः कथमपि सम्भावयितुं शक्यः।

यच्च—"विद्यां चाऽविद्याञ्च" इति ज्ञानकर्मणोः समुच्चये प्रमाणमभिहितं तदपि तत्तात्पर्याज्ञानसमुत्थम्, "ईशा वास्यम्" (ईश० १) इत्युपक्रम्य "तेन त्यक्तेन भुञ्जीथाः" इतिवाक्यशेषोपसंहारे ब्रह्मविद्याङ्गभूतस्य संन्यासस्य विधानात्। समुच्चयपक्षे तु कर्मणां सन्न्यासस्य च युगपद्विधानमसम्भवानुष्ठानमापद्येतेति सर्वोपि शास्त्रार्थो व्याकुलीभावमानीयेत। मन्त्रगतेन "त्यक्तेन" इत्यत्र भावार्थकक्तप्रत्ययेन "सर्वकर्मत्यागेन सन्न्यासेनात्मानं भुञ्जीथाः=पालयेथाः" इति वाक्यार्थद्वारा कर्ममात्रनिषेधस्याभीष्टतरत्वात्। एवञ्च "मा गृधः कस्य स्विद्धनम्" (ईश० १) इति वाक्यशेषोऽप्यस्मत्पक्ष एवाञ्जस्येनानुकूल्यं भजते। इत्थञ्च—"कुर्वन्नेवेह" (ईश० २) इत्यादिना कर्मणां विधानन्त्वविरक्तविषयमेवेति वेदितव्यम्, अन्यथाऽनात्मज्ञनिन्दापूर्वकं "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" (ईश० ७) इति ब्रह्मविद्योपसंहार उपक्रमेण विरु-

द्धयेत । नचैतदिष्टमुपक्रमोपसंहारयोरैक्यस्य सर्वतन्त्रकारैः स्वीकृतत्वात् । कर्मसमुच्चितज्ञानपक्षे तु "पूषन्नेकर्षे" (ईश० १६) इत्यादिनोत्तरमार्गप्रार्थनाप्यसङ्गता "न तस्य प्राणा उत्क्रामन्ति" (वृ० ४ । ४ । ६) इत्यादिना ब्रह्मविदो गतिनिषेधात् । तस्मान्मोक्षसाधनभूते तत्त्वज्ञाने कथमपि कर्मणां न प्रवेश इति ज्ञाननि-

१ नच—ज्ञाननिवर्त्यत्वस्य मिथ्यात्वे उत्तरज्ञाननिवर्त्ये पूर्वज्ञानेऽतिव्याप्तिः, मुद्गरपातादिनिवर्त्ये च घटादावव्याप्तिः, ज्ञानत्वेन ज्ञाननिवर्त्यत्वविवक्षायामप्यव्याप्तिः, नह्युत्तरज्ञानस्य ज्ञानत्वेन पूर्वज्ञाननिवर्तकत्वम्, किन्तु उत्तरवृत्तियोग्यविभुविशेषगुणत्वेन इच्छादिसाधारणत्वेन वा, तस्माद् घटादावव्याप्तिस्तदवस्थैव । शुक्तिरजतादौ चाऽधिष्ठानसाक्षात्कारत्वेन निवर्त्ये ज्ञानत्वेन ज्ञाननिवर्त्यत्वाभावात् साध्यविकलता । ज्ञानत्वव्याप्यधर्मेण ज्ञाननिवर्त्यत्वविवक्षायां ज्ञानत्वव्याप्येन स्मृतित्वेन ज्ञाननिवर्त्यसंस्कारेऽतिव्याप्तिः—इति वाच्यम्, "ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वं" हि ज्ञाननिवर्त्यत्वं, यतः । प्रकृतेऽवस्थितिर्द्विःप्रकारा, स्वरूपेण=अज्ञानतत्प्रयुक्तस्वरूपेणेत्यर्थः । कारणात्मना च=अर्थात् स्थूलावस्थाकारणीभूता ये संस्कारास्तद्रूपेण च । कुतः सत्कार्यवादाभ्युपगमात् ।

अत्रायमाशयः—यावदधिष्ठानतत्त्वसाक्षात्कारो न भवति तावत्कार्यस्य किञ्चिद्रूपं तिष्ठत्येव, अतएव "तद्धेदं तर्ह्यव्याकृतमासीत्" (वृ०१।४।७) इत्याद्याः श्रुतयोऽपि सङ्गच्छन्ते । ज्ञानप्रयुक्ताऽवस्थितिसामान्यविरहप्रतियोगित्वात्मकलक्षणकरणे तु यद्यपि मुद्गरपातोत्तरं घटस्य स्वरूपेणावस्थितिर्नास्ति तथापि संस्कारात्मना तु अवस्थितिविरहविरहान्नोक्तदोषः अर्थात्—अज्ञानप्रयुक्ततत्संस्कारान्यतराभावरूपावस्थितिसामान्याभाव एव ज्ञानप्रयुक्तः अतोऽतीतघटादौ नाव्याप्तिः । एवं—यथाश्रुतसाध्यानङ्गीकारे (किन्तु दर्शितरीत्या परिष्कृते साध्यस्वरूपे) उत्तरज्ञाननिवर्त्ये पूर्वज्ञाने न सिद्धसाधनम्, न वा

वर्त्त्यस्य मिथ्यात्वमकामेनाप्येष्टव्यमतो "बन्धो न निवृत्ति-प्रतियोगी सत्यत्वादात्मवद्" इति सत्प्रतिपक्षताख्यानं भ्रान्ति-मूलकमेवेति दिक् ॥२१॥

शङ्का—ननु जिसकी ज्ञान से निवृत्ति हो वह अव-श्य मिथ्या होता है । ऐसा नियम ठीक नहीं, क्योंकि स्मृति में सेतुदर्शन द्वारा ब्रह्महत्यारूप सत्यपाप की निवृत्ति कथन करने से वह (नियम) व्यभिचारी है ? उत्तरः—

पदार्थ—समुद्रस्य=समुद्र के सेतुम्=सेतुबन्ध को दृष्ट्वा =देखकर ब्रह्महत्याम्=ब्रह्महत्या को व्यपोहति=दूर करता है

वियदादौ ब्रह्मज्ञाननाश्यत्वेऽपि तद्वदेव मिथ्यात्वाऽसिद्ध्याऽर्थान्तरम् । उत्तर-ज्ञानेन लीनस्य पूर्वज्ञानस्य तु कारणात्मनाऽवस्थानादवस्थितिसामान्य-विरहानुपपत्तेः । विशेषाभावकूटस्यैव सामान्याभावम्प्रति प्रयोजकत्वाच्च । शशविषाणादाववस्थितिसामान्यविरहेऽपि तस्य ( तादृशविरहस्य ) ज्ञानप्रयुक्त-त्वाभावान्नातिव्याप्तिः ।

ननु शुक्तिरजतादीनामपि शशशृङ्गवदलीकतया तत्र ज्ञानप्रयुक्ताव-स्थितिसामान्यविरहप्रतियोगित्वरूपसाध्याभावात् साध्यवैकल्यमेवेति चेन्न शुक्ति-रजतादेश्च अपरोक्षप्रतीत्यन्यथाऽनुपपत्त्या स्वप्रतिभासकाले अवस्थित्यङ्गीकारात् बाधकज्ञानं विना न तद्विरह इति न साध्यविकलता। अतएवोक्तं विवरणाचार्यैः— "अज्ञानस्य स्वकार्येण प्रविलीनेन वर्त्तमानेन सह ज्ञानस्य निवृत्तिर्बाधः" इति ।

नचैकाज्ञानपक्षे शुक्तिरजतादीनां ब्रह्मज्ञानं विना बाधाभावात् अन्यथा ब्रह्मज्ञानं विनाऽपि मोक्षापत्तेः, एवञ्च शुक्तिरजतादौ प्रथमं ज्ञाननिवर्त्यत्वा-ऽग्रहणाद्व्याप्तिग्रहस्यैवाऽसम्भवे साध्यवैकल्यं तदवस्थमिति वाच्यम् अस्मि-न्पक्षे रूप्योपादानानामज्ञानानां भेदाऽभ्युपगमादिति दिक् ।

अर्थात् द्रष्टा पुरुष की जो ब्रह्महत्या, उसकी निवृत्ति होजाती है इति=इस प्रकार यत्=जो स्मर्यते=ऋषियों ने स्मरण(धर्मशास्त्र में कथन) किया है, तत्र=उस सेतुदर्शन (ज्ञान) में कर्मसमुच्चयः= कर्मों का समुच्चय भी दृष्टः=देखा गया है।

भाव यह है कि—स्मृतिग्रन्थों में ब्रह्महत्या करने वाले के लिये समुद्रसेतु का दर्शन प्रायश्चित्तरूप से कथन किया है, परन्तु वहां सेतुदर्शनमात्र पाप का निवर्त्तक नहीं माना। यदि ऐसा होता तो सेतुबन्ध में रहने वाले चाण्डालादि की शुद्धि स्वतः ही हो जाती किन्तु प्रायश्चित्ती के लिये उसके अङ्गभूत अनेक कर्मों का विधान भी साथ किया गया है जैसा कि—स्वकर्मनिष्ठ चार वर्णोंसे भिक्षा मांगना, छत्र, उपानत्=जूता आदि को त्याग देना, और "मैं ब्रह्म-हत्या करने वाला हूं" इस प्रकार अपने पाप की घोषणा करते जाना, इत्यादि स्मृत्युक्तविधिपूर्वक सेतु का दर्शन ही पाप का नाशक है केवल नहीं। प्रकरण में तो ज्ञानमात्र से बन्ध की निवृत्ति कही गई है जैसा कि—रज्जुज्ञान-मात्र से सर्प की निवृत्ति। इसलिये ज्ञानबाध्य होने से रज्जुसर्पादि की न्याईं प्रपञ्च मिथ्या है सत्य नहीं। ॥२१॥

(१) यहां पर 'तत्र' शब्द का अर्थ "स्मृतिशास्त्र में" इस प्रकार भी हो सकता है। इस पक्ष में "दृष्टः" इस पद का अर्थ "विहित है" इस प्रकार कर लेना।

अभ्युपगम्य वृत्तिज्ञानस्योत्पत्तिविनाशौ पूर्वं प्रागभावस्य नाशे हेतोर्व्यभिचार उद्भूतः सम्प्रति स्वरूपभूतस्य ज्ञानस्य नित्यत्वं ख्यापयन् परं समाधानमाह—"अपि च" इति।

**अपि च ज्ञानमस्माकं नैवोत्पत्तिविनाशवत्।**
**नित्यकूटस्थरूपत्वाज्जन्मनाशमतिर्भ्रमः॥ २२॥**

अपि च=किञ्च, अस्माकम्=औपनिषदानाम्, ज्ञानम्=स्वरूपचैतन्यम्, उत्पत्तिविनाशवत्=उत्पत्तिश्च विनाशश्च उत्पत्तिविनाशौ तौ विद्येतेऽस्येत्युत्पत्तिविनाशवत् प्रागभावप्रतियोगित्वमुत्पत्तिमत्त्वं, ध्वंसप्रतियोगित्वं विनाशवत्त्वञ्चेत्यर्थः तादृशं नैव=नास्ति, ज्ञानस्वरूप आत्मा न प्रागभावप्रतियोगी, नापि ध्वंसप्रतियोगीत्यर्थः। उक्तार्थे हेतुमाह—"नित्ये"ति। नित्यकूटस्थरूपत्वात्=नित्यश्चासौ कूटस्थरूपश्चेति नित्यकूटस्थरूपः तत्त्वादित्यर्थः, अतो हेतोः, जन्मनाशमतिः=ज्ञानविषये जन्मनाशयोर्या मतिः बुद्धिर्घटज्ञानमुत्पन्नं पटज्ञानं नष्टमित्येवंरूपा, भ्रमः=भ्रान्तिरेव अन्यस्मिन्नन्यबुद्धित्वादित्यर्थः।

अयमाशयः—अस्ति किञ्चित्परिणामि नित्यं यस्मिंस्तत्त्वं न विहन्यते यथा साङ्ख्यानां गुणाः। अस्ति च परमार्थनित्यमविकारि यथा चितिः। सोऽयं चिद्रूप आत्मा कूटस्थनित्यः "साक्षी चेताः केवलो निर्गुणश्च" (श्वे० ६।११) "नवा अरे अहं मोहं ब्रवीम्यविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा" (बृ० ४।५।१४) "अयमात्मा ब्रह्म सर्वाऽनुभूः" (बृ० २।५।१९) "न जायते म्रियते वा विपश्चित्" (कठ० १।२।१८) इत्यादिश्रुतिषु

ज्ञानस्वरूपमत्यन्तं निर्मलं परमार्थतः।
तदेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्॥ (विष्णु० पु०)

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।
विनाशमव्ययस्यास्य न कश्चित्कर्त्तुमर्हति ॥ (भ०गी० २।१७)

इत्यादिस्मृतिषु च तस्य कूटस्थनित्यज्ञानस्वरूपतायाः प्रतिपादनादिति निर्विवादम् । अतएव पूज्यपादैर्भाष्यकारैरपि चतुःसूत्रीभाष्ये उक्तम्—"सर्वं विनश्यद्वस्तुजातं पुरुषान्तं विनश्यति, पुरुषो विनाशहेत्वभावान्न विनश्यति" (ब्र० सू० १।४) इति । तत्र–"उत्पन्नं घटज्ञानं विनष्टं पटज्ञानम्" इति ज्ञानस्योत्पत्तिविनाशप्रतीतिर्घटाद्याकारवृत्त्युत्पत्तिविनाशप्रतीत्यौपाधिकी भ्रान्तिरेव तस्माज्ज्ञानप्रागभावस्य प्रतियोगिनाश्यत्वेनोक्तहेतोर्व्यभिचारित्वोद्भावनं सिद्धान्ताऽज्ञानमूलकमेव । उक्तञ्च परमार्थसारे—

शान्त इव मनसि शान्ते
हृष्टे हृष्ट इव मूढ इव मूढे ।
व्यवहारस्थो न पुनः
परमार्थत ईश्वरो भाति ॥ ३४ ॥

राहुरदृश्योऽपि यथा शशिविम्बस्थः प्रकाशते जगति ।
सर्वगतोऽपि तथात्मा बुद्धिस्थो दृश्यतामेति ॥ १८ ॥

जन्मविनाशनगमनागममलसम्बन्धवर्जितो नित्यम् ।
आकाश इव घटादिषु सर्वात्मा सर्वदोपेतः ॥ ५१ ॥ इति ।

स्पष्टश्चाऽयमर्थो "नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः" (ब्र० सू० २।३।१७) "ज्ञोऽत एव" (ब्र० सू० २।३।१८) इत्यत्रात्माधिकरणे

---

(१) आत्मा जीवो नोत्पद्यते कुतः अश्रुतेः=उत्पत्तिप्रकरणेषु जीवोत्पत्तिश्रुतेरभावात् ताभ्यः="स वा एष महाजन आत्मा" (बृ० ४।४। २२,२४, २५)इत्याद्याभ्यस्ताभ्यो नित्यत्वाच्च=नित्यत्वावगमाच्चेत्यर्थः ।

(२) अतएव=अनुत्पत्तिमत्त्वादेव जीवो ज्ञः=स्वयम्प्रकाशः । नच जानातीति ज्ञः इति ज्ञानक्रियां प्रति कर्त्तृत्वेन तदाश्रयत्वेन च ज्ञानाधिकरण एवात्मा न ज्ञानस्वरूप इति वाच्यम्, कृतिज्ञानविषयस्य ज्ञानस्य ज्ञानान्तरविषयत्वेऽनवस्थापत्तेः ।

ज्ञाधिकरणेऽन्नत्यभामतीकल्पतर्वादौ चेति शिवम् ॥ २२ ॥

सं०—अब सिद्धान्त पक्ष का आश्रयण करते हुए "ज्ञाननाश्यत्व" हेतु के व्यभिचार का उद्धार दर्शाते हैं—

पदार्थः—अपिच=किञ्च हे वादिन् ! अस्माकम्= हमारे औपनिषद् सिद्धान्त में ज्ञानम्=ज्ञान अर्थात् ज्ञानस्वरूप आत्मा उत्पत्तिविनाशवत=उत्पत्ति विनाश वाला नैव=नहीं है, नित्यकूटस्थरूपत्वात्=क्योंकि वह नित्यकूटस्थ स्वरूप है इसलिये जन्मनाशमतिः=ज्ञान के जन्म तथा नाश की बुद्धि भ्रमः=भ्रान्ति रूप जाननी चाहिये।

सार यह है कि जब आत्मस्वरूप ज्ञान कूटस्थ नित्य अपरिणामी है तो उसका प्रागभाव कैसे होगा? (अर्थात् कदापि नहीं हो सक्ता) जो पदार्थ प्रागभाव तथा ध्वंस का प्रतियोगी होवे वही पदार्थ उत्पत्तिविनाश वाला होता है। ज्ञानस्वरूप आत्मा के उत्पत्तिविनाश सकलश्रुतिस्मृति प्रमाणों से निषिद्ध हैं। इसलिये अन्तःकरणवृत्ति के उत्पत्ति विनाश के कारण जो (आत्मा) ज्ञान के उत्पत्ति विनाश की प्रतीति होती है वह औपाधिक होने से भ्रान्ति मात्र ही है परमार्थ नहीं। अतः उक्त हेतु को व्यभिचारी कथन करना समीचीन नहीं। यह बात ब्रह्मसूत्र (२। ३। १७, १८ के) आत्माधिकरण तथा ज्ञाऽधिकरण में

विस्तारपूर्वक स्पष्ट की गई है। अधिक के जिज्ञासु हमारे बनाए "शङ्करभाष्य भाषानुवादं" का अवलोकन करें। ॥२२॥

उक्तमेवार्थं द्वाभ्यां स्पष्टीकरोति—"लौकिकः" इति।

**लौकिकः प्रत्ययो यस्तु ज्ञानोत्पत्तिविनाशयोः।**
**वृत्त्युत्पत्तिविनाशाभ्यां सोऽन्यथैवोपपद्यते ॥२३॥**

यस्तु=यश्च ज्ञानोत्पत्तिविनाशयोः=ज्ञानस्य उत्पत्तौ विनाशे चेत्यर्थः लौकिकः=इन्द्रियसन्निकर्षादिना जनितः प्रत्ययः=घटज्ञानमुत्पन्नं पटज्ञानं नष्टमित्याकारा प्रतीतिः, सः=प्रत्ययः वृत्त्युत्पत्तिविनाशाभ्याम्=परिणामस्वभावस्याऽन्तःकरणस्य वृत्तेर्यावुत्पत्तिविनाशौ ताभ्यां कृत्वा अन्यथैव=प्रकारान्तरेण आत्मनि ज्ञाने भ्रान्त्यैव उपपद्यते=उपपन्नो भवति, परमार्थतो ज्ञानस्योत्पत्तिविनाशौ नैव विद्येत इति भावः ॥२३॥

सं०—उक्त अर्थ को ही दो श्लोकों द्वारा स्पष्ट करते हैं—

पदार्थ—यस्तु=जो ज्ञानोत्पत्तिविनाशयोः=ज्ञान के उत्पत्ति तथा विनाश को विषय करने वाली लौकिकः=लोकव्यवहारसिद्ध प्रत्ययः=प्रतीति होती है। जैसा कि "घट ज्ञान उत्पन्न हुआ है, पटज्ञान नष्ट होगया है," सः=वह प्रतीति वृत्त्युत्पत्तिविनाशाभ्याम्=परिणामस्वभाव वाले अन्तःकरण की वृत्ति के उत्पन्न तथा नष्ट होने के कारण=अन्यथा एव उपपद्यते=प्रकारान्तर से ही सिद्ध है अर्थात् उक्त प्रतीति ज्ञान-

(१) यह पुस्तक अभी तक मुद्रित नहीं हुई है।

स्वरूप आत्मा में भ्रान्ति से भासती है. वस्तुतः ज्ञान (ज्ञान-स्वरूपभूत आत्मा) की उत्पत्ति वा विनाश नहीं हैं ॥२३॥

**निरावरणचैतन्यं ज्ञानमित्यभिधीयते।**
**तस्य वृत्तेरुपाधित्वात्तत्र तद्धर्मविभ्रमः॥ २४॥**

निरावरणेति। निरावरणचैतन्यम्=आवरणरहितं शुद्धं ब्रह्मचैतन्यम्, ज्ञानमिति=ज्ञानपदेन अभिधीयते=श्रुत्या प्रतिपाद्यते इत्यर्थः। तथा च श्रुतिः—"सत्यं ज्ञानमनन्तम्ब्रह्म" (तै० २। १) "विज्ञानमानन्दं ब्रह्म" (बृ० ३। ९। २८) इत्यादिका। तस्य=निरावरणचैतन्यस्यैव वृत्तेः=अन्तःकरणवृत्तेः उपाधित्वात्=परिचायकत्वात् तत्र=ज्ञाने तद्धर्मविभ्रमः=तस्य वृत्तिधर्मस्योत्पत्तिविनाशरूपस्य विभ्रमः=विशेषेण भ्रमो भ्रान्तिर्भवति यथा जपाकुसुमोपरागात्स्फटिके लौहित्यभ्रमो भवतीति भावः। तथाचोक्तं परमार्थसारे—

विगतोपाधिः स्फटिकः स्वप्रभया भाति निर्मलो यद्वत्।
चिद्दीपः स्वप्रभया तथा विभातीह निरुपाधिः ॥६०॥ इति।

अपरोक्षानुभूतौ च—

पोतेन गच्छतः पुंसः सर्वं भातीव चञ्चलम्।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥८६॥

इत्यज्ञानवशात एव देहाद्यनात्मताप्रत्यय उक्तः।

नच—कथं शुद्धं चैतन्यं निरावरणमित्युच्यते यावता तत्रैवाज्ञानकृतावरणविक्षेपसत्त्वात्, उक्तश्च सर्वज्ञात्ममुनिभिः—

आच्छाद्य विक्षिपति संस्फुरदात्मरूपं-
जीवेश्वरत्वजगदाकृतिभिर्मृषैव। (सं० शा०१। २०)

इति तु न शङ्कनीयम्, वस्तुतश्चैतन्यस्य निरावरणत्वविवक्षणात् मृषैवेत्युक्तेश्चेति दिक् ॥२४॥

पदार्थ—निरावरणचैतन्यम्=वस्तुतः आवरणशून्य शुद्ध चेतन ज्ञानमिति=ज्ञान शब्द से अभिधीयते=श्रुति ने कथन किया है तस्य=उस ज्ञान की वृत्तेः, उपाधित्वात्=वृत्ति उपाधि होने से तत्र=शुद्ध चेतनस्वरूप ज्ञान में तद्धर्मविभ्रमः= वृत्ति के उत्पत्ति विनाश धर्म की भ्रान्ति होती है, अर्थात् जिस प्रकार जवाकुसुम की उपाधि से स्फटिक में लौहित्य की प्रतीति भ्रमरूप है वैसे ही वृत्ति की उपाधि से आत्म-ज्ञान में उत्पत्ति विनाश भ्रमसिद्ध जानने चाहिये। जैसा कि–"परमार्थसार" में कहा भी है कि—

विगतोपाधिः स्फटिकः स्वप्रभया भाति निर्मलो यद्वत्।
चिद्दीपः स्वप्रभया तथा विभातीह निरुपाधिः ॥ ६० ॥

अर्थ–जिस प्रकार जवाकुसुमादि उपाधि से रहित हुआ स्फटिक अपनी प्रभा से निर्मल प्रतीत होता है इसी प्रकार उपाधि से रहित चिद्दीप=स्वयम्प्रकाश आत्मा शुद्ध भासता है, वस्तुतः वह उपाधि के धर्मों से कदापि संस्पृष्ट नहीं होता। ॥ २४ ॥

ननु—निरावरणचैतन्यस्य ज्ञानरूपत्वे तस्यैवाज्ञानसाधकत्वाज्ज्ञानेनाज्ञाननाशः कदापि न स्याद्विचारशास्त्रारम्भश्च निष्फलो भवेत्, भवतां सिद्धान्तश्च भज्येतेतीमामाशङ्कां परिहर्तुमाह—"काष्ठारूढकृशानुः" इति।

**काष्ठारूढकृशानुर्हि यद्वद्दाहनियामकः।**
**वृत्त्यारूढचितिस्तद्वद्बन्धनाशनियामिका ॥२५॥**

यद्वत्=यथा काष्ठारूढकृशानुः=काष्ठे दारुणि आरूढ उत्थितः कृशानुर्वह्निः हि=निश्चयेन दाहनियामकः=दाहस्य भस्मीकरणस्य नियामकः कारको भवतीति शेषः। तद्वत्=तथा वृत्त्यारूढचितिः=वृत्तावारूढा वृत्त्यारूाढा सा चासौ चितिरिति समानाधिकरणसमासः, वृत्तीद्धं चैतन्यं वृत्तीद्धो बोध इति यावत्, बन्धनाशनियामिका=बन्धनाशस्य सविलासाऽज्ञानबाधस्य नियामिका हेतुभूतेति न कथमपि सिद्धान्तभङ्गशङ्कावकाशः।

इदमत्राकूतकम्—अविद्यानिवर्त्तकं स्वप्रकाशब्रह्मस्वरूपज्ञानमात्रमिति नाऽभ्युपगच्छामः सामान्यचैतन्यस्य तत्साधकत्वेनाऽविरोधित्वात् "अहमज्ञः" इति प्रत्यात्मवेदनीयत्वात्। किन्तु श्रवणादिसाध्यापरोक्षब्रह्माकारवृत्तिसमारूढं चैतन्यमेव तद्विरोधि।

नच—स्वप्रकाशचैतन्यमविद्यानिवर्त्तकं चेत् ? तस्येदानीमपि सत्त्वम्। तदाकाराऽपरोक्षा वृत्तिर्निवर्त्तिका चेत् ? असत्यात्सत्यसिद्धेरयोग—इति वाच्यम् वृत्त्युपारूढचितः चित्प्रतिबिम्बधारिण्या वृत्तेर्वा निवर्त्तकत्वाङ्गीकारात्। असत्यात्सत्योत्पादकत्वविरोधोऽपि न,अभावस्य भावजनकत्ववदस्याऽपि सम्भवात्, प्रातिभासिकस्याङ्गनालिङ्गनादेर्व्यावहारिकसुखजनकत्वदर्शनाच्च।

१ "विजातीयस्य विषमसत्ताकस्य वा जनकत्वमिव व्यञ्जकत्वमव्याहतमिति ब्रूमः" इति गौडब्रह्मानन्दी। "अद्वैतसिद्धा" वपि चतुर्थे परिच्छेदे ननु—"न जानामि" इति ज्ञप्तिरूपचिद्विरोधानुभवः चिदसंसृष्टवृत्तेर्विरोधित्वस्यानङ्गीकारात्" इत्यादिना स्फुटीकृतोऽयमर्थः।

नन्वेवं वृत्तेः स्वनिवर्त्तकत्वे स्थितिविरोधः यतः स्वोपादाननिवर्त्तकत्वं न दृष्टचरमिति चेन्न अन्यत्राहृष्टस्याप्यत्र प्रमाणबलेनाङ्गीकारात् " मायां तु प्रकृतिं विद्यात् " ( श्वे० ४ । १० ) इत्यवगतमायोपादानकत्वस्याप्यात्मतत्त्वसाक्षात्कारस्य " तरति शोकमात्मवित्" (छां० ७ । १ । ३) "सोऽविद्याग्रन्थिं विकिरतीह सोम्य" ! (मु०२।१।१०)इत्यादिना तन्निवर्त्तकत्वस्यापि च प्रमाणसिद्धत्वात्। वृत्त्यारूढचितो निवर्त्तकत्वपक्षे तु नोक्तशङ्कावकाशः, तदुक्तमाचार्यैः—

तृणादेर्भासिकाप्येषा सूर्यदीप्तिस्तृणं दहेत् ।
सूर्यकान्तमुपारुध्य तं न्यायं तत्र योजयेत्" ॥ इति ॥

नच—निवर्त्तकज्ञानं न शुद्धविषयम् तस्याऽहश्यत्वात्, न विशिष्टविषयं तस्याऽध्यस्तत्वेन भ्रमत्वापत्तेः—इति शङ्कितुमपि शक्यम्, उपहितस्य विषयत्वेऽपि उपाधेरविषयत्वेनाभ्रमत्वात् ।

अयमाशयः—भ्रमत्वमापाद्यते ? अज्ञाननिवर्त्तकताविरोधिभ्रमत्वं वा ? तत्र स्वोपहितविषयकाऽज्ञानं प्रति स्वोपहितविषयकज्ञानस्यैव निवर्त्तकत्वेनोपहितविषयकभ्रमत्वमिष्टमेव, अन्त्यमनङ्गीकारपराहतमित्येवमात्मतत्त्वसाक्षात्कारेण सविलासाऽज्ञाननिवृत्तौ क्व वन्धसत्यत्वम् ? कुतो वा विचारशास्त्रारम्भनैष्फल्यम्? कथं वा सिद्धान्तभङ्ग इति सर्वमवदातम् । नचैवं ब्रह्मणो ज्ञानविषयत्वेन जडत्वापत्तिः, चैतन्यविषयताया एव जडत्वापादकत्वात् नतु वृत्तिविषयताया अपि, "यतो वाचो निवर्त्तन्ते" ( तै० २।९ ) "तन्त्वौपनिषदं पुरुषं पृच्छामि" ( बृ० ३।९।२६ ) इत्याद्युभयविधश्रुत्यनुसारेण तथाकल्पनादित्याद्यधिकं "वेदान्त कल्पलतिका " दिषु द्रष्टव्यम् ॥२५॥

शङ्का—ननु निरावरण शुद्ध चैतन्य (ज्ञान) तो अज्ञान

का साधक है, फिर उस से अज्ञानात्मक बन्ध का नाश कैसे होगा ? उत्तरः—

पदार्थ—(सामान्य अग्नि काष्ठ का विरोधी नहीं तो भी) यद्वत्=जिस प्रकार हि=निश्चय करके काष्ठारूढकृशानुः=काष्ठ में आरूढ हुआ अग्नि दाहनियामकः= दाह का नियामक अर्थात् कारण होता है तद्वत्=वैसे ही ( यद्यपि सामान्य चैतन्य अज्ञान का साधक अर्थात् अविरोधी है तो भी) वृत्त्यारूढचितिः=वृत्ति में आरूढ हुआ चैतन्य बन्धनाशनियामिका= बन्धनाश का अर्थात् सविलास अज्ञान की निवृत्ति का कारण है।

भाव यह कि—वृत्ति में आरूढ चैतन्य, अथवा चैतन्यप्रतिबिम्बविशिष्ट वृत्ति अज्ञान की निवर्त्तक है सामान्य चैतन्य नहीं, यह वेदान्त का सिद्धान्त है । जैसा कि—

---

(१)—सामान्य अग्नि की सार्वभौम व्यापकता दृष्टान्तरूप से श्रुति ने भी प्रतिपादन की है तथाहि **"अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव।"** ( कठ० २ । २ । ९ )

(२)—यहां पर तात्पर्य यह है कि जिस प्रकार वायु आकाश में सर्वत्र परिपूर्ण हो रहा है उसी प्रकार सामान्य अग्नि भी सर्वत्र व्यापक है । परन्तु वह (सामान्य अग्नि) तब तक दाहादि विशेष कार्य करने में समर्थ नहीं होती जब तक कि वह काष्ठादि स्वोपाधि में विशेष रूप से अभिव्यक्त न हो जाय। इसी भान्ति सामान्यकूटस्थ ( ज्ञानापरनामक ) चैतन्य भी सर्वत्र समान रूप से परिपूर्ण है परन्तु वह तब तक अज्ञान की निवृत्ति का साधक नहीं होता जब तक कि महावाक्यजन्य अखण्डाकार वृत्ति में समारूढ हो कर अभिव्यक्त न हो जाय।

आचार्यों का कथन है कि—

तृणादेर्भासिकाऽप्येषा सूर्यदीप्तिस्तृणं दहेत् ।
सूर्यकान्तमुपारुह्य तं न्यायं तत्र योजयेत् ॥

अर्थ—जैसे तृणादिक पदार्थों का प्रकाश करने वाली सूर्य की दीप्ति=ज्योतिः सूर्यकान्तमणि के द्वारा उनका दाह करदेती है वैसे ही सामान्य चेतन अज्ञान का साधक होने पर भी वृत्ति-आरूढ हुआ उसका बाधक हो जाता है ॥२८॥

मिथ्यात्वसाधकस्य "ज्ञाननाश्यत्व" हेतोर्व्यभिचाराभाव-मुपसंहरति—"अतः" इति ।

**अतो ज्ञानस्य नास्त्येव प्रागभावः सदास्थितेः ।**
**तथा च ज्ञाननाश्यत्वहेतोः क्व व्यभिचारिता ? ॥२६॥**

अतः=यस्मात् सिद्धान्ते आत्मनः स्वरूपभूतस्य ज्ञानस्य उत्पत्तिविनाशौ न स्तोऽतो हेतोः ज्ञानस्य=वस्तुभूतज्ञानस्य सदास्थितेः=सदैवाऽवस्थानात् कूटस्थनित्यत्वादित्यर्थः प्रागभावः= उत्पत्तेः पूर्वं कार्यस्य भविष्यतीतिप्रत्ययवेद्योऽनादिसान्तः संसर्गाभावः, नास्त्येव=नैव भवतीत्यर्थः । तथाच=एवं सति अर्थात् ज्ञानस्य सदावस्थानादेव, तत्प्रागभावाभावाच्च ज्ञाननाश्यत्वहेतोः= मिथ्यात्वसाधकस्य "ज्ञाननाश्यत्व"रूपोक्तहेतोः क्व=कुत्र व्यभिचारिता=व्यभिचारः । यदा ज्ञानमेव नित्यं तदा कथं तदभावः, तदभावे कुतस्तत्प्रागभावः, तदभावे च कुतस्तरां हेतोर्व्यभिचारः, तदभावे च कुतस्तमां मिथ्यात्वाऽसिद्धिरिति शुक्तिरजतादिवज्ज्ञाननाश्यत्वाद् बन्धस्य मिथ्यात्वे नैव सन्देह इति भावः ॥ २६ ॥

सं०—अब "ज्ञाननाश्यत्व" हेतु के व्यभिचाराभाव का उपसंहार करते हैं—

पदार्थ—अतः=जिस कारण सिद्धान्त में आत्मस्वरूप ज्ञान उत्पत्तिविनाश से रहित है अतः सदास्थितेः=सदैव स्थिति बनी रहने के कारण ज्ञानस्य=ज्ञान का प्रागभावः=प्रागभाव नास्त्येव=नहीं हो सकता । तथाच=जब उसका प्रागभाव ही नहीं अर्थात् सदा अवस्थित=कूटस्थ एकरस होने के कारण ज्ञान के प्रागभाव का अभाव है तो ज्ञानना-श्यत्वहेतोः=मिथ्यात्व सिद्धि के लिये प्रयुक्त किये गए "ज्ञाननाश्यत्व" हेतु का क्व=कहां व्यभिचारिता=व्यभि-चार हो सकता है, अर्थात् उक्त हेतु का किसी स्थल में व्यभिचार दोष नहीं, अतएव शुक्तिरजत की न्याईं ज्ञान-नाश्य होनेसे बन्ध के मिथ्यात्व में भी कोई सन्देह नहीं ॥२६॥

व्यभिचारोद्धारं दर्शयित्वा ज्ञाननाश्यत्वहेतुं निगमयति— "तस्माद्" इति ।

**तस्माद्बन्धो मृषायुक्तो ज्ञाननाश्यत्वहेतुतः ।**
**यथा रज्जूरगो दृष्टस्तथा चायं ततस्तथा ॥२७॥**

तस्मात्=यस्मान्नास्ति व्यभिचारः तस्मात् ज्ञाननाश्यत्वहे-तुतः=" ज्ञाननाश्यत्व" कारणात् बन्धः=प्रपञ्चो मृषायुक्तः=मिथ्या-त्वोपेतः मिथ्येत्यर्थः । यथा=येन प्रकारेण अधिष्ठानज्ञाननिवर्त्त्य-

(१)– अथवा **मृषा युक्तः** इति द्वे पदे । एवञ्च **मृषा**=मिथ्या **युक्तः**=युक्तियुक्तः उपपन्न इत्यर्थः ।

त्वेन रज्जूरगः=रज्जूसर्पः रज्जौ कल्पितो भुजङ्गमः दृष्टः=मिथ्या ज्ञातः, तथा चायम्=अयं बन्धोऽपि तथा ज्ञाननाश्यः, ततः=तस्मात् ज्ञाननाश्यत्वादित्यर्थः तथा=मिथ्यैवेति[1] निगमनम्, हेतुसाध्यवत्तया पक्षप्रतिपादकं वचनमित्यर्थः ॥२७॥

सं—व्यभिचार का उद्धार कर के "ज्ञाननाश्यत्व" हेतु का पक्ष में निगमन करते हैं—

पदार्थ—तस्मात्=जिस प्रकार दर्शित रीति के अनुसार व्यभिचार का उद्धार किया गया है अत एव ज्ञाननाश्यत्वहेतुतः="ज्ञाननाश्यत्व" हेतु से बन्धः=प्रपञ्च मृषायुक्तः=मिथ्यात्वधर्म वाला[2] है यथा=जैसा कि रज्जूरगः=रज्जु में कल्पित सर्प दृष्टः=अधिष्ठानभूत रज्जू के साक्षात्कार से निवर्त्त्य=नाश होने योग्य होने के कारण मिथ्या होता है। तथा चायम्=वैसे ही यह बन्ध भी "ज्ञाननाश्य" है, ततः=इस लिए अर्थात् ज्ञाननाश्य होने से तथा=वैसा अर्थात् मिथ्या है सत्य नहीं ॥ २७ ॥

बन्धमिथ्यात्वे हेत्वन्तरमाह—"कर्मणा" इति । अथवा—श्रुतार्थाऽनुपपत्त्याऽपि बन्धस्य मिथ्यात्वमाह—"कर्मणा" इति ।

---

(१)—अबाधितत्वादिकं निगमनप्रयोजनमिति तु न विस्मरणीयम् ।

(२)—"मृषायुक्तः" इसे एक समस्त पद मान कर 'मिथ्यात्वधर्मवाला' यह अर्थ किया गया है। वस्तुतः यह दो पद हैं । और उनका अर्थ यह है—"मृषा"=मिथ्या "युक्तः"=युक्तियुक्त है ॥

**कर्मणा बन्धविच्छित्तेः प्रतिषेधश्रुतेरपि ।**
**बन्धो मिथ्याऽन्यथा मोक्षो न निषिध्येत कर्मणा ॥**

कर्मणा=यागदानादिकर्मणा, बन्धविच्छित्तेः=बन्धस्य विच्छित्तिः बन्धविच्छित्तिः बन्धनाशः तस्य बन्धनाशस्य प्रतिषेधश्रुतेः अपि=प्रतिषेधश्रवणादपि बन्धः=प्रपञ्चः मिथ्या=ज्ञानबाध्य एवेत्यर्थः । विपक्षे दण्डमाह—"अन्यथा" इति । अन्यथा=यदि बन्धो मिथ्या न स्यात् तदा कर्मणा=कर्महेतुना मोक्षः=मुक्तिः न=नैव निषिध्येत=प्रतिषिध्येत, नहि मिथ्या रज्जुसर्पादिः क्रियानिवर्त्यः केनापि क्वापि दृष्टचरः सत्यस्य ज्ञानाऽनिवर्त्यत्वादित्यर्थः ।

तथाच श्रुतिः—"न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" (कै० २) इति कर्मणा बन्धविच्छित्तिं प्रतिषेधति । उक्तश्च पूज्यपादैरपि विवेकचूडामणौ—

अमृतत्वस्य तु नाशास्ति वित्तेनेत्याह हि श्रुतिः ।
ब्रवीति कर्मणो मुक्तेरहेतुत्वं स्फुटं यतः ॥ ७ ॥
चित्तस्य शुद्धये कर्म न तु वस्तूपलब्धये ।
वस्तुसिद्धिर्विचारेण न किञ्चित्कर्मकोटिभिः ॥ ११ ॥ इत्यादि ।

इत्थञ्च यथा ज्योतिःशास्त्रावगतशतवर्षजीविनो देवदत्तस्य गृहाऽसत्त्वं बहिःसत्त्वं विनाऽनुपपद्यमानं बहिःसत्त्वं कल्पयति तथैव कर्मकरणकबन्धविच्छेदप्रतिषेधश्रवणं बन्धमिथ्यात्वं विनाऽनुपपद्यमानं तस्य मिथ्यात्वं कल्पयतीति भावः । एष एवार्थापत्तिन्यायो मोक्षाऽनुपपत्तावपि योजनीयः ॥२८॥

---

(१) इदन्तु बोध्यम्—उपपाद्यस्य ज्ञानेनोपपादककल्पना अर्थापत्तिप्रमा । तत्करणमर्थापत्तिः प्रमाणम् । अर्थात् उपपाद्यज्ञानं करणमुपपादक-

सं०—अब बन्ध के मिथ्यात्व में कारणान्तर कथन करते हैं अथवा अर्थापत्ति प्रमाण के द्वारा भी बन्ध का मिथ्यात्व दर्शाते हैं।

पदार्थ—कर्मणा= ("न कर्मणा न प्रजया" इत्यादि श्रुतिवाक्यों में) कर्म द्वारा बन्धविच्छित्तेः=बन्ध के नाश का प्रतिषेधश्रुतेः, अपि=प्रतिषेध श्रवण करने से भी बन्धः=बन्ध मिथ्या=मिथ्या ही सिद्ध होता है। अन्यथा=यदि ऐसा न होता तो (श्रुति में) कर्मणा=कर्मों से मोक्षः=मोक्ष का न निषिध्येत=कदापि निषेध न किया जाता।

सार यह कि—"अमृतत्वस्य तु नाशास्ति वित्तेन" (बृ० २।४।२) (अर्थात् वित्त=धनसाध्य कर्मों से मोक्ष की कोई आशा नहीं) इत्यादि श्रुतियों में मोक्ष के प्रति कर्मों

---

ज्ञानं फलमित्युभयत्रापि अर्थापत्तिशब्दो वर्त्तते। उक्तञ्च "वेदान्त-सञ्ज्ञावल्याम्"—

ज्ञानेनैवोपपाद्यस्य योपपादककल्पना।
अर्थापत्तिप्रमा सा तत्करणं च तदाह्वयम्॥
यद्विनाऽनुपपन्नं यत्तत्र तच्चोपपाद्यकम्।
यदभाववशाद्यस्याऽनुपपत्तिः स चापरः॥
दृष्टश्रुतविभेदेन सेयं द्वेधा प्रकीर्त्तिता।
शुक्तिरूप्यादिके त्वाद्या तरतीत्यादिकेऽपरा॥इत्यादि॥

की साधनता का निषेध किया है "न कर्मणा न प्रजया" (कै० २) इत्यादि श्रुतिवाक्यों में "कर्मों से बन्ध की निवृत्ति नहीं होती" यह भी स्पष्ट ही कथन किया है। सो यदि बन्ध सत्य होता तो उसकी निवृत्ति कर्मों से कथन करते और श्रुतिभगवती मोक्षप्राप्ति के प्रति कर्मों की साधनता का निषेध भी न करती, पर ऐसा न करने से सिद्ध है कि बन्ध मिथ्या है सत्य नहीं ॥२८॥

उक्तमेवार्थं प्रकारान्तरेण स्पष्टीकरोति त्रिभिः-"मिथ्यार्थः"इति।

**मिथ्यार्थो न विनाश्योऽस्ति विशिष्टैरपि कर्मभिः।**
**नहि रज्जूरगो नाश्यो जपहोमार्चनादिभिः ॥२९॥**

मिथ्यार्थः=मिथ्याभूतो दृष्टनश्वरस्वभावोऽनर्थोऽप्यर्थवद्भासमानो बन्धरूपः पदार्थः विशिष्टैः अपि=वेदादिशास्त्रविहितैरपि सद्भिः कर्मभिः="तस्माद् ब्राह्मणोऽहोरात्रस्य संयोगे सन्ध्यामुपास्ते" (षड्विंश ब्रा० ४ । ५) "अहरहः सन्ध्यामुपासीत" (तै० ) "यज्ञोपवीती नित्योदकः सन्ध्यामुपासीत वाग्यतः" (आश्व० गृ० ३।७।३) "अग्निहोत्रं जुहुयात्स्वर्गकामः (तै० सं० ३।५) इत्यादि नित्यकाम्यप्रभृतिभिरुत्तमैः कर्मभिः न=नैव विनाश्यः अस्ति=निवर्त्तनीयो भवति। अत्रार्थे दृष्टान्तं दर्शयति—"नहि"इति। जपहोमार्चनादिभिः= तत्र जपः मन्त्राभ्यासः उपांशुजपादिभेदः, होमः विधिवदग्नौ हविःप्रक्षेपः, अर्चनम् आवाहनादिषोडशोपचारेण देवानां पूजनम्; आदिना वन्दनादिपरिग्रहः; इत्यादिभिः कर्मभिः रज्जूरगः=रज्ज्वज्ञानेन रज्जौ भासमानः सर्पः नहि=नवै

नाश्यः=बाधनीयो भवतीत्यर्थः । यावद्रज्ज्वात्मकाधिष्ठानसाक्षात्कारो न जायेत तावत् शतशो जपादिभिः कर्मभिर्यथा कल्पितस्य सर्पस्य न निवृत्तिर्भवति तद्वत् आत्माज्ञानसमुत्थस्याऽस्य प्रपञ्चस्यापि जपादिभिर्विशिष्टैरपि कर्मभिर्निवृत्तिरसम्भाव्येति भावः उक्तश्च पूज्यपादैः "विवेकचूडामणौ"—

सम्यग्विचारतः सिद्धा रज्जुतत्त्वावधारणा ।
भ्रान्तोदितमहासर्पभयदुःखविनाशिनी ॥१२॥
अर्थस्य निश्चयो दृष्टो विचारेण हितोक्तितः ।
न स्नानेन न दानेन प्राणायामशतेन वा ॥१३॥ इति ॥२९॥

सं०—अब प्रकारान्तर से उक्त अर्थ को तीन श्लोकों द्वारा स्पष्ट करते हैं—

पदार्थ—मिथ्यार्थः=दृष्टनश्वरस्वभाव मिथ्याभूत प्रपञ्चरूप पदार्थ विशिष्टैः कर्मभिः=( वेदादिशास्त्रविहित सन्ध्यावन्दन अग्निहोत्रादि ) उत्तम कर्मों के द्वारा अपि=भी न विनाश्यः=कदापि विनाश करने योग्य नहीं अस्ति=है । इस अर्थ में दृष्टान्त कथन करते हैं—रज्जूरगः=रज्जूकल्पितसर्प जपहोमार्चनादिभिः=प्रणवादि जप, होम, तथा षोडशोपचार द्वारा देवताओं का अर्चन पूजन इत्यादि कर्मों से नहि नाश्यः=विनाश नहीं किया जा सक्ता, अर्थात् जैसे कल्पित सर्प की निवृत्ति कर्मों से नहीं होती किन्तु रज्जुरूप अधिष्ठान के साक्षात्कार से ही होती है

ऐसे ही आत्मा के अज्ञान से भासमान प्रपञ्चात्मक मिथ्या बन्ध की निवृत्ति भी कर्मों से नहीं होसक्ती, किन्तु एकमात्र बन्धनिवृत्ति का साधन आत्मज्ञान है, और ज्ञानद्वारा निवर्त्त्य होने से बन्ध भी मिथ्या है । २९॥

**अतः कर्मप्रजार्थानां प्रतिषेधपरा श्रुतिः ।**
**बन्धो मिथ्येत्यभिप्रेत्य सन्न्यासं विदधाति सा॥३०**

"अतः" इति । अतः=यस्मान्मिथ्यार्थो विशिष्टैरपि कर्मभिर्न विनाश्योऽतो हेतोः, कर्मप्रजार्थानां प्रतिषेधपरा=कर्मप्रजाद्यर्थानां या प्रतिषेधं ब्रुवाणा सा=प्रसिद्धा श्रुतिः=वेदः बन्धो मिथ्या=प्रपञ्चो मिथ्यैव इति=एवंरूपम् अभिप्रेत्य=निश्चित्य निश्चितप्रपञ्चमिथ्याभावा सतीत्यर्थः सन्न्यासम्=कर्मन्यासरूपं तुरीयमाश्रमं विदधाति= ब्रह्मविद्याया अङ्गत्वेनाधिकारिविशेषणतया प्रतिपादयतीति ऋजुरर्थः ।

अयमत्राशयः । बृहदारण्यकस्य चतुर्थाध्यायस्य चतुर्थे ब्राह्मणे मन्त्रब्राह्मणाभ्यां सहेतुकौ बन्धमोक्षावभिधाय, श्लोकैश्च पुनर्विस्तरेण मोक्षस्वरूपं प्रतिपाद्यैतस्मिन्नेवार्थे सर्वस्य वेदस्योपयोग इत्येतस्यार्थस्य प्रतिपादनाय द्वाविंशतितमकण्डिकाया आरम्भः कृतः। तच्च यथात्रैव प्रपाठकेऽभिहितं सप्रयोजनमनूद्य अत्रैवोपयोगः सर्वस्य वेदस्य काम्यराशिवर्जितस्येत्येवमर्थ उक्तार्थाऽनुवादः"स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु"(बृ०४।४।२२)इत्यनेन प्रादर्शि। तत्र केवलानां कर्मणां ज्ञानसमुच्चितानां वा कर्मणां, कर्मसमुच्चितस्य वा ज्ञानस्य मोक्षाऽहेतुत्वं वाञ्छन् वेदो भगवान् मोक्षा-

(१) योऽयं विज्ञानमयः=विज्ञानोपाधिको जीवः ।

भिव्यञ्जकज्ञाननिष्ठां प्रत्यप्यकारणतैव तेषामित्यभिसन्धाय ज्ञाननिष्ठाहेतुभूतविचारापरपर्यायपुरुषप्रयत्नाङ्गतया सर्वकर्म-सन्न्यासमेव तद्धेतुत्वेनाऽवगत्य "तमेतं वेदाऽनुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" ( बृ० ४।४।२२ ) इति वचनेन वेदानुवचनादिकर्मणां वेदनेच्छास्प्रत्यङ्गभावमाचष्टे । तत्र वेदने-च्छातः किम्भवेदित्याकाङ्क्षां प्रशमयन् "एतमेव विदित्वा मुनि-र्भवति" ( बृ० ४।४।२२ ) इत्यभ्यधात् । यज्ञाद्यनुष्ठानाद्विशुद्धिद्वारा विविदिषोत्पत्तौ गुरुपादोपसर्पणश्रवणादिक्रमेण एतं मन्त्रब्राह्म-णोक्तमात्मानमेव विदित्वा न तु कर्मादिकमपि, मुनिः=मनन-शीलो योगी भवतीति यावत् । आत्मविच्च न कर्मीत्याह—"एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति(बृ० ४।४।२२)इति । एतमेव लोकमात्म-लोकमेवेच्छन्तः प्रार्थयन्तो विविदिषन्तः प्रव्राजिनः प्रव्रजनशीला मुमुक्षवः प्रव्रजन्ति=प्रकर्षेण सर्वाणि कर्माणि न्यस्यन्तीति "आग्ने-योऽष्टाकपालो भवति" इतिवत् सन्न्यासो विधीयते । कथमेतन्निर्णेतुं शक्यते यदात्मलोकार्थिनः कृते सर्वकर्मसन्न्यासो विधीयत इत्यत-स्तदर्थनिर्णयहेतुभूतं तस्यार्थवादमाह—"एतद्ध स्म वै तत्पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति"। ( बृ० ४।४।२२ ) इत्यादि । तदेतत्पारिव्राज्ये स्पष्टं कारणं ह किल वै स्मार्यते । पूर्वेऽतिक्रान्तकालिका विद्वांसः=आत्मज्ञाः प्रजां प्रजोपलक्षिते कर्मवित्ते च न कामयन्ते स्म=पुत्रादिसाधनानि नानुतिष्ठन्ति । केनाऽभिप्रायेणेत्यतः आह श्रुतिः—किमिति । येषां नोऽस्माकं परमार्थदर्शिनामयं नित्यसान्निहितोऽशनायाद्यतीत आत्मैवायं लोकः पुरुषार्थस्ते वयं पुत्रादिभिः किं करिष्याम इत्यभि-प्रायसमाप्तिद्योतक इतिशब्दः । तर्हि ते किं कृतवन्त इत्यत आह

(१) प्रव्रजन्तीत्यित्र लेडर्थे लडिति भावः ।

"ते ह स्म" इत्येतदादि "एषणे एव भवतः" इत्यन्तम्।

एतावतेदं सिद्धं भवति यदुक्तार्थवाद एव सन्न्यासविधिनिश्चायकस्तस्य विधिमन्तरेणान्वयासम्भवात्। तस्मात्संन्यासादिनैवाऽऽत्मलोकः प्राप्यो न कर्मादिना, आत्मलोकस्योत्पाद्यादिचतुर्विधकर्मफलविलक्षणत्वादित्याशयेनैवाह "स एष नेति नेति" इत्यादिना "न रिष्यति" इत्यन्तेन शाकल्यब्राह्मणोक्तार्थकेन। पूज्यपादा अपि—"यथा च बाह्यलोकत्रयार्थिनः प्रतिनियतानि पुत्रादीनि साधनानि विहितान्येवमात्मलोकार्थिनःसर्वैषणानिवृत्तिःपारिव्राज्यं ब्रह्मविदो विधीयते एव" इति "आत्मा च आत्मत्वादेव न केनचित्साधनेनोत्पाद्य आप्यो विकार्यः संस्कार्यो वा" इति चैवमादिना प्रकारेण सविस्तरममुमर्थं व्याख्यातवन्तः। तद्यदि बन्धो मिथ्या नाऽभविष्यत् तदा कर्मप्रतिषेधपरत्वेन श्रुतिर्मिथ्याभूतबन्धनिवृत्तिहेतुभूतात्म साक्षात्काराङ्गं कर्मसन्न्यासं कदापि न व्यधास्यत्, नापि च सन्न्यासविधिस्वरूपान्वयार्थमर्थवादवाक्यञ्च निरदेक्ष्यत्। तदित्थं सन्न्यासविध्यन्यथाऽनुपपत्त्या अपि बन्धो मिथ्येति सिद्धं भवतीति युक्तमुक्तम् "अतः कर्मप्रजार्थानाम्" इति।

अत्र केचिदेवमाचक्षते—कर्मणां सन्न्यासो न न्याय्यः "यावज्जीवमग्निहोत्रं जुहोति" "यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" "वीरहा वा एष देवानां योऽग्निमुद्वासयते" आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः" (तै० १।११) "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳसमाः" (ईश० २) "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते" इत्यादिश्रुतिभिः—

नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते।

मोहात्तस्य परित्यागस्तामसः परिकीर्तितः॥ (भ० गी० १८।७)

यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ( भ० गी० १८।५ )
न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते । ( भ० गी० ३।४ )

इत्यादिस्मृतिभिश्च नित्यनैमित्तिककर्मत्यागस्य निषिद्धत्वात् । सन्न्यासशास्त्रन्तु कर्मानधिकृतविधुरादिविषयं, काम्यकर्मत्यागविषयं, सर्वकर्मफलत्यागविषयं वा । उक्तञ्च भगवता—

काम्यानां कर्मणां न्यासं सन्न्यासं कवयो विदुः ।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ इति । ( भ० गी० १८।२)

नच सन्न्यासमन्तरेण श्रवणाद्यसम्भवात् तदावश्यकत्वं गृहस्थादेरपि कर्मानवरुद्धकाले श्रवणादेः कर्त्तुं शक्यत्वात् प्रतर्दनादेर्गार्हस्थ्यदशायामेव श्रवणादेः, जनकयाज्ञवल्क्याजातशत्रुप्रभृतीनां गृहस्थानामेव ब्रह्मनिष्ठत्वस्य च श्रवणादिति ।

अत्र सिद्धान्तानुयायिनः—छान्दोग्ये"त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति" (छां०२। २३।१) एवमाश्रमत्रयं प्रस्तुत्य "सर्वे एते पुण्यलोका भवन्ति" (छां० २।२३।१)इति तेषां पुण्यलोकत्वं निर्दिश्य"ब्रह्मसंस्थोऽमृतत्वमेति" ( छां० २।२३।१ ) गृहस्थाद्याश्रमत्रयस्य पुण्यलोकावाप्तिरुक्ता ब्रह्मसंस्थशब्दितस्य सन्न्यासिनः एवामृतभावप्राप्तिः स्पष्टमाम्नाता । नच ब्रह्मसंस्थशब्देन यौगिकेन केवलं सन्न्यासिन एवाभिधानं न भवेदिति शङ्कनीयम् ब्रह्मणि संस्थेत्यस्यान्यव्यापारोपरमरूपा तन्निष्ठेत्यभिधानात् । तच्च त्रयाणामाश्रमिणां न सम्भवति तेषां स्वाश्रमविहितकर्माननुष्ठाने प्रत्यवायश्रवणात् । परिव्राजकस्य तु विधिना सर्वकर्मसंन्यासात्प्रत्यवायाभावःशमादिसंहितब्रह्मनिष्ठत्वमेव तस्य स्वाश्रमानुरूपं कर्मेति बोध्यम् ।

तथा चाहुः—

आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तया ।
दद्यान्नावसरं कश्चित्कामादीनां मनागपि ॥ इति ।

"त्रयो धर्मस्कन्धा" (छां० २ । २३ । १) इत्यादिना धर्ममात्राधिकृतत्वेन प्रस्तुतानां त्रयाणामाश्रमाणां "सर्वे एते पुण्यलोका भवन्ति" (२ । २३ । १) इति निरविशेषं परामृश्य पुण्यलोकभाक्त्वेन विनियुक्तानां निराकाङ्क्षाणां न पुनर्ब्रह्मशब्देन परामर्शः सम्भवतीति परिशेषादाकाङ्क्षितत्वाच्च संन्यासिन एव परामर्शः ।

एतेन गृहस्थादीनामपि श्रवणादिसम्भवं प्रत्याशा निरस्ता । आख्यायिकासु प्रतर्दनप्रभृतिगृहस्थानां श्रवणादिदर्शनलिङ्गन्तु प्राप्तिसापेक्षं न प्रापकशास्त्रविरुद्धं तेषां ज्ञानाधिकारं कल्पयितुं क्षमते । अन्यथा—"गावो वै सत्रमासत" इत्यादिलिङ्गाद् गवादीनामपि कर्माधिकारकल्पनाप्रसङ्गात् । तथा चोक्तं वार्त्तिके—

त्यक्ताशेषक्रियस्यैव संसारं प्रजिहासतः ।
जिज्ञासोरेव चैकात्म्यं त्रय्यन्तेष्वधिकारिता ॥ (सम्बन्ध वा० १२)

इति ।

अस्तु वा जन्मान्तरे जनकादिभिः सन्न्यासपूर्वकं श्रवणाद्यनुष्ठितमेव प्रतिबन्धकवशात्तु तदा ज्ञानं नाभूत्, इह जन्मनि तु तेषां प्रतिबन्धकापगमाद् गार्हस्थ्येऽपि सकृच्छ्रवणमात्रेण ज्ञानमुत्पन्नमिति कल्पनम् । तथाच स्मृतिः—

"पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्त्तते" ॥ इति (भ० गी ६।४४)

---

१ योगस्य जिज्ञासुरपि, शब्दब्रह्म=कर्मकाण्डं वेदम् अति-

"प्रयत्नाद् यतमानस्तु योगी संशुद्धकिल्विषः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम्" ॥( भ० गी० ६ । ४५ )

इति चेत्याद्यनेकश्रुतिस्मृतिप्रभृतिप्रमाणशतसिद्धः सन्न्यासो दुरपह्नवः ।

किञ्च—"न्यास इति ब्रह्मा, ब्रह्मा हि परः, परो हि ब्रह्मा, तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत्" ( महाना० ७८ ) "वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद्यतयः शुद्धसत्त्वाः" ( मुं० ३ । २ । ६; महाना० १२ । ३; कै० ४ ) न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" ( कै० २; महाना० १२ । ३ ) "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" ( बृ० ४ । ४ । २२ ) "त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक्परं पदम्" इत्यादयो विविदिषासंन्यासविधायिन्यः, "एतद्धस्म वै तद्विद्वांस आहुः ऋषयःकावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे" "एतद्ध स्म वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहवाञ्चक्रिरे" "एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति" ( बृ० ३ । ५ । १ ) "एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यो विजहार" ( बृ० ४ । ५ । १५ ) इत्यादयो विद्वत्संन्यासपराः,तत्रापि काश्चित् "ब्रह्मचर्यं समाप्य गृही भवेद् गृहाद्वनीभूत्वा प्रव्रजेद्"(परमहंसपरि०;याज्ञवल्क्यो०) इति क्रमिकसंन्यासविधिपराः, अन्याश्च—"यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद्वा वनाद्वा" (परमहंसपरि०;याज्ञ०)"यदहरेव विरजेत् तदहरेव प्रव्रजेत्"(परमहंसपरि०;याज्ञ०) "खलु वेदार्थं विद्वान् सोपनयनादूर्ध्वं स तानि प्राग् वा विसृजेत् पितरं पुत्रमग्न्युपवीतं कर्म कलत्रम्, कुटीचको ब्रह्मचारी कुटुम्बं विसृजेत्, त्रिदण्डं

---

वर्तते अतिक्रम्य वर्तते अर्थात् वेदोक्तकर्मानुष्ठानफलं मुञ्चति निष्कामो भवतीत्यर्थः । एतेनाऽपि ज्ञानकर्मसमुच्चयो निराकृत इति द्रष्टव्यम् ।

कमण्डलुं शिक्यं पात्रे जलपवित्रं शिखां यज्ञोपवीतं चेत्येतत्सर्वं भूः स्वाहेत्यप्सु परित्यज्यात्मानमन्विच्छेत्" (                    ) इत्याश्रमक्रमं विना स्मार्त्तसन्न्यासोत्तरं चोत्कटवैराग्योत्तरकालमेव पारमहंस्यविधिपराश्च श्रुतयोऽपि कर्मन्यासपरा द्रष्टव्याः।

नचासां श्रुतीनां विधुरादिविषयत्वं प्रजापतिनाऽपि शक्यं कल्पयितुम्। "अथ पुनरव्रती वा व्रती वा स्नातकोऽस्नातको वा उत्सन्नाग्निरनग्निको वा" (परमहंसपरि०; याज्ञवल्क्यो० ) इति तेषां पृथक् सन्न्यासविधानात्, भगवतापि "नैष्कर्म्यसिद्धिं परमां सन्न्यासेनाधिगच्छति" ( भ० गी० १८। ४९ ) इत्यादिना विविदिषासन्न्यासः, "योगारूढस्य तस्यैव शमः कारणमुच्यते" ( भ० गी० ६। ३ ) सर्वकर्माणि मनसा सन्न्यस्यास्ते सुखं वशी" ( भ० गी० ५। १३ ) "नैव तस्य कृतेनार्थो नाऽकृतेनेह कश्चन" ( भ० गी० ३। १८) इत्यादिना विद्वत्संन्यासश्च दर्शित एव। बृहस्पतिरपि—

संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया।
प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः॥ इति।

अङ्गिराश्च—

प्रव्रजेद् ब्रह्मचर्यण प्रव्रजेद्वा गृहादपि।
वनस्थः प्रव्रजेद्विद्वानातुरो वाऽपि दुःखितः॥ इति।

मनुरपि—

प्राजापत्यां निरूप्येष्टिं सर्ववेदसदक्षिणाम्।
आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद् गृहात्॥ ( ६। ३८ ) इति।

व्यासोऽपि—

ब्रह्मचर्येण कालं वा कुर्यात्सङ्कल्पपूर्वकम्।
वानप्रस्थो वाऽपि भवेत्परिव्राड्यथेच्छया॥ (                    ) इति।

सर्वे चैते महामुनयः सन्न्यासं दर्शयन्ति ।

तस्माद्वहुतरश्रुतिस्मृतीतिहासपुराणाद्यनुरोधेन "कुर्वन्नेवेह कर्माणि" (ईश० २) इत्येवञ्जातीयकानि श्रौतानि "कर्मणैव हि संसिद्धिम्" (भ० गी० ३।२०) "नियतस्य तु" (भ० गी० १८।७) इत्येवञ्जातीयकानि स्मार्त्तानि वचनान्यविरक्तविषयकानि मन्दविरक्तविषयकानि वेति निश्चेतव्यम् । अत एव आविरक्तचित्तशुद्धिहेतवे फलत्यागसहितं कर्मानुष्ठानं "काम्यानां कर्मणां न्यासम् (भ० गी० १८।२) इत्यादिना भगवता प्रसिद्धसन्न्याससाम्येन स्तूयते, "दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत्" (भ० गी० १८।८) इत्यादिनाप्ययमेवार्थः स्फुटीक्रियते च ।

"त्रिभिर्ऋणवान् जायते" इति श्रुतिस्तु पश्ववदानविधिशेषार्थवादान्तर्गता नहि स्वतन्त्रब्रह्मचर्यादिसन्न्यासविधिविरुद्धमृणत्रयसद्भावं साधयितुं प्रवृत्तेति विस्तरेणोपपादितं "सुरेश्वरवार्त्तिके" इति सर्वं सुस्थम् ॥ ३० ॥

---

(१) "नैष्कर्म्यसिद्धौ" चाप्युक्तम्—

पारम्पर्येण कर्मैवं स्याद‍विद्यानिवृत्तये ।
ज्ञानवन्नाऽविरोधित्वात्कर्माऽविद्यां निरस्यति ॥ (१।५२)
उत्पाद्यमाप्यं संस्कार्यं विकार्यञ्च क्रियाफलम् ।
नैवं मुक्तिर्यतस्तस्मात्कर्म तस्या न साधनम् ॥ (१।५३)
सन्निपत्य नच ज्ञानं कर्माऽज्ञानं निरस्यति ।
साध्यसाधनभावत्वादेककालानवस्थितेः ॥ (१।५४)
बाध्यबाधकभावाच्च पञ्चास्योरणयोरिव ।
एकदेशानवस्थानान्न समुच्चयता तयोः ॥ (१।५५) इत्यादि ।

पदार्थ-(जिस कारण से मिथ्याभूत पदार्थ की निवृत्ति विशिष्ट कर्मों से भी नहीं होसक्ती) अतः=इस हेतु से कर्मप्रजार्थानाम्=कर्म, प्रजा आदि साधनों का प्रतिषेधपरा=प्रतिषेध करने वाली सा=वह प्रसिद्ध श्रुतिः=श्रुति बन्धः=बन्ध मिथ्या=मिथ्या है, इति अभिप्रेत्य=ऐसा ही निश्चय करके सन्न्यासं विदधाति=संन्यास का विधान करती है। इस प्रकार सन्न्यासविधायक श्रुति की अन्यथाऽनुपपत्ति बल से भी बन्ध का मिथ्यापन ही निश्चित है सत्यत्व नहीं ॥ ३० ॥

बन्धस्य सत्यत्वे अमृतभावम्प्रति कर्मप्रतिक्षेपाऽनुपपत्तिं दर्शयति—" यदि बन्धः" इति ।

**यदि बन्धो भवेत्सत्यः कर्मनाश्यो भवेत्तदा ।**
**तथा चामृतकामानां विदध्यात्कर्म, नाक्षिपेत् ॥३१॥**

यदि=चेद् बन्धः सत्यः=आत्मवदबाध्यः भवेत्=स्यात्; तदा=

---

(२) यहां पर प्रजाशब्दोपलक्षित कर्मप्रजावित्तादिकों की अमृतत्वसाधनत का अपलाप करके साक्षात् सन्न्यास विधान करने वाली "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति एतद्धस्म वै तत्पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति।" ( बृ० ४।४।२२ ) इस श्रुति की ओर अथवा साक्षात् कर्म प्रजा और धन की अमृतत्वसाधनता का निषेध करके, और केवल त्याग को अमृतत्व का साधन कथन करके, अर्थ से संन्यास का विधान करने वाली "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः"। ( कै० २ ) इस श्रुति की ओर सङ्केत हैं।

तर्हि कर्मनाश्यः=जपहोमार्चनादिभिर्विशिष्टैः कर्मभिर्नाश्यो बाध्यः भवेत्=स्यात् तथाच=एवं सति, अमृतकामानाम्=मोक्षार्थिनां कृते श्रुतिर्भगवती कर्म=कर्मानुष्ठानं विदध्यात्=यथा "अग्निहोत्रञ्जुहुयात् स्वर्गकामः" इति स्वर्गार्थिनां कृते अग्निहोत्रादीनि कर्माणि विधत्ते तथा " मोक्षकामो नित्यनैमित्तिकादीनि कुर्याद् " इति मोक्षाङ्गतयाऽपि कर्माणि विदध्यात्,न आक्षिपेत्=" किं प्रजया " ( बृ० ४। ४। २२ ) "अमृतत्वस्य तु नाशास्ति वित्तेन " ( बृ० २।४।२; ४ ५।३ ) इत्यनया रीत्या तानि कर्माणि नैव प्रतिक्षिपेत् न निषेधयेदित्यर्थः, यस्मान्मोक्षाय श्रुतौ कर्मणां प्रतिक्षेपस्तस्माद् बन्धो नैव सत्य इति फलितम् ॥ ३१ ॥

सं०—बन्ध के सत्य होने में कर्मों के निषेध की अनुपपत्ति कथन करते हैं—

पदार्थ–यदि=यदि बन्धः=बन्ध सत्यः=आत्मा की न्याईं बाधशून्य भवेत्=होता तदा=तब कर्मनाश्यः=यज्ञदानादि कर्मों द्वारा ही नाश करने योग्य भवेत्=होता तथाच=और इस प्रकार अमृतकामनाम्=मोक्षार्थी जिज्ञासुजनों के लिये श्रुति कर्म=यागादि कर्मों का विदध्यात्=विधान करती ( अर्थात् जैसे स्वर्गकाम के लिये अग्निहोत्रादि कर्मों का विधान है वैसे ही " मोक्षार्थी नित्यनैमित्तिकानि कुर्यात् " मोक्ष का अर्थी नित्यनैमित्तिक करे ऐसा विधान उपलब्ध होता) और न आक्षिपेत्=कर्मों का प्रतिक्षेप न करती। किन्तु दर्शितरीति के अनुसार जो मोक्ष के प्रति कर्मों की साधनता का निषेध

स्पष्ट है सो बन्ध के सत्यत्वपक्ष में अनुपपन्न होता हुआ उसके मिथ्यात्व की कल्पना कराता है ॥ ३१ ॥

सम्प्रति मिथ्यात्वसाधकं ज्ञाननिवर्त्त्यत्वहेतुमुपसंहरति द्वाभ्याम्—“ सत्योऽर्थः ” इति ।

**सत्योऽर्थो न निवर्त्तेत ज्ञानेनापि बलीयसा ।**
**नहि मिथ्याहिवद्रज्जोर्दृष्टा ज्ञाननिवर्त्यता ॥३२॥**

बलीयसा=बलवता ज्ञानेन अपि=वस्तुसाक्षात्कारेणापि सत्यःअर्थः=रज्जुशुक्त्यादिः सत्यः पदार्थः न निवर्त्तेत=नैव निवृत्तो भवतीत्यर्थः। अत्र दृष्टान्तमाह—“नहि” इति । रज्जोः=सत्यस्य रज्जोः मिथ्याहिवत्=रज्जुरूपाधिष्ठाने भासमानमृषासर्पवत् ज्ञाननिवर्त्त्यता= ज्ञानैकबाध्यता, नहि=नैव दृष्टा=अनुभूता । यथा रज्जुकल्पितः सर्पो रज्जुज्ञानेन बाधितो भवति तद्वद्रज्जुज्ञानेन रज्जुर्न बाध्यते, यच्च ज्ञानबाध्यं तन्मिथ्या, तादृशश्च प्रपञ्चोऽपीति भावः ॥३२॥

सं—अब मिथ्यात्व के साधक “ज्ञाननिवर्त्त्यत्व” हेतु का दो श्लोकों से उपसंहार करते हैं—

पदार्थ—बलीयसा=अतिप्रबल ज्ञानेन अपि=ज्ञान से भी सत्यः अर्थः=रज्जु, शुक्ति आदिक सत्य पदार्थ, न निवर्त्तेत= कदापि निवृत्त नहीं होता । (उक्त अर्थ में दृष्टान्त कथन करते हैं) रज्जोः=सत्य रज्जु का मिथ्याहिवत्=मिथ्या सर्प की न्याईं ज्ञाननिवर्त्यता=ज्ञान द्वारा बाध्य होना नहि दृष्टा=कदापि नहीं देखा गया ।

सार यह कि—जैसे कल्पितसर्प का रज्जुज्ञान से

बाध (निवृत्ति) होता (होती) है वैसे रज्जुज्ञान से रज्जु का बाध नहीं होता, इस लिए "जो ज्ञान से बाध्य है वह रज्जुसर्प की भांति मिथ्या है" और प्रपञ्च का ज्ञान से बाध्य होना अर्थापत्ति, अनुमानादि से दिखा चुके हैं इसलिये उसको मिथ्या ही जानना चाहिये ॥३२॥

उक्तमर्थमुपसंहरन् श्वेताश्वतरश्रुतिप्रतीकं, याजुषश्रुतिप्रतीकञ्च गृह्णाति " ज्ञात्वा देवम् " इति ।

**ज्ञात्वा देवं सर्वपाशापहानिः[1]**
**नान्यः[2] पन्था इत्यसङ्ख्यागमानाम् ।**
**बन्धो मिथ्यासम्मतो व्यर्थजल्पैः**
**कर्तुं शक्यो नान्यथा कोटिकल्पैः ॥३३॥**

देवम्=दिव्यस्वरूपं स्वप्रकाशमात्मानम् ज्ञात्वा=अहम्ब्रह्मास्मीति साक्षात्कृत्य सर्वपाशापहानिः=सर्वेषां पाशरूपाणामविद्यादिक्लेशानां हानिर्निवृत्ति र्भवति, "नान्यः पन्थाः"=परमात्मज्ञानादन्यः कोपि मार्गो मृत्युसन्तरणसाधनं नास्ति, इति असङ्ख्यागमानाम्=एवंरूपाणामसङ्ख्यातानामागमानां स्वतःप्रमाणभूतानां श्रुतीनाम्, बन्धः=प्रपञ्चः, मिथ्यासम्मतः=मिथ्यैवेति निश्चितोऽर्थः अस्तीति शेषः, सोऽयमेवंरूपः श्रौतः सिद्धान्तः कोटिकल्पैः=कोटिगुणितैः, व्यर्थजल्पैः=

---

(१) श्वेता० उ० १।११ ।

(२) श्वेता० उ० ३।८; ६।१५; तै० आ० ३।१३

निष्फलैर्वाग्जालैः, अन्यथा=इतो विपरीतः सत्य इति यावत् कर्त्तुम्=साधयितुं न शक्यः=नैव योग्यो भवतीत्यर्थः। अत्र वेदार्थकेनागमपदेन स्मृतीतिहासपुराणादीनामपि उपलक्षणतया सङ्ग्रहः। तेषामपि प्रपञ्चमिथ्यात्व एव स्वारस्यावगमादिति भावः।

एवमेव स्वाराज्यसिद्धावपि शास्त्रारम्भ उत्थापितः। तथाहि—

ज्ञात्वा देवं सर्वपाशापहानि-
नान्यः पन्थाश्चेति भूयोवचोभिः।
ज्ञप्तेः साक्षान्मुक्तिहेतुत्वसिद्धा-
वध्यासत्वं बन्धनस्यार्थसिद्धम् ॥ इति ॥३३॥

सं०—उपलक्षणरूप से दो श्रुतियों की प्रतीकद्वारा उक्त अर्थ का उपसंहार करते हैं—

पदार्थ—[ "ज्ञात्वा देवं सर्वपाशापहानिः" (श्वे० १।११) ] देवम्=दिव्य स्वरूप स्वयम्प्रकाश ब्रह्मात्मा, को ज्ञात्वा= "अहम्ब्रह्मास्मि" इस प्रकार साक्षात्कार करके सर्वपाशापहानिः=अविद्यादिसकल क्लेशों की निवृत्ति होती है, तथा [ "नान्यः पन्थाः" (श्वे० ३।८; ६।१५; तै० आ० ३।१३)] अन्यः पन्थाः न=आत्मज्ञान के विना मृत्यु के सन्तरण के लिये अन्य कोई मार्ग=साधन नहीं है, इति असङ्ख्यागमानाम्=इत्यादि अनेक श्रुतिवाक्यों को बन्धः=बन्ध मिथ्यासम्मतः=मिथ्या ही सम्मत है अर्थात् "श्वेताश्वतर" तथा "वाजसनेयी" शाखाप्रभृति अनेक श्रुतिवाक्य बन्ध

के मिथ्यात्व में प्रमाण हैं। उक्त अर्थ कोटिकल्पैः=कोटिसङ्ख्यक,[1] व्यर्थजल्पैः=वृथा वाग्जालों से अन्यथा=अन्य किसी प्रकार का अर्थात् सत्य कर्त्तुं न शक्यः=नहीं किया जा सक्ता।

यहां "आगम" पद से स्मृति इतिहास पुराण वाक्यों का भी ग्रहण कर लेना क्योंकि उपक्रमोपसंहारादि तात्पर्यनिर्णायक लिङ्गों से सकलशास्त्रसम्बन्धी वाक्यों का बन्ध के मिथ्यात्व में ही तात्पर्य है। ॥३३॥

स्थूणानिखननन्यायेन तमेवार्थं द्रढयन् बन्धस्य सिद्धान्तसम्मतं स्वरूपं युक्तिभिरुपनिबध्नाति अष्टभिः 'यद्यद्' इत्यादिभिः।

**यद्यज्ज्ञाननिवर्त्यं स्यादज्ञानं तत्तदिष्यताम्।**
**अज्ञानस्यैव नान्यस्य यतो ज्ञानं निवर्तकम् ॥३४॥**

"यद्यद्"इति।यद् यद् ज्ञाननिवर्त्यम्=यद् यद् अधिष्ठानज्ञानद्वारा बाध्यं, स्याद्=भवति,तत् तत्=तत् सर्वम् अज्ञानम्=अविद्यैव इष्यताम्=मन्यतामित्यर्थः। परमार्थवस्तुनो ज्ञानाऽनपनोद्यत्वादितिभावः। यतः=यस्मात् कारणात् ज्ञानम्=विद्यापदवाच्योऽधिष्ठानसाक्षात्कारः अज्ञानस्य एव=अविद्याया एव निवर्त्तकम्=बाधको भवति, अन्यस्य=अज्ञानभिन्नस्य कस्यचिदपि पदार्थस्य न=नैव निवर्त्तकं भवती-

(१) चतुर्युगसहस्रं तु'कल्पस्तद् ब्रह्मणो दिनम्'( वैजयन्ती२।१।९३) इस उक्ति से कल्प शब्द कालवाची भी है इस लिए यहां पर'कोटिकल्पैः'इस शब्द का अर्थ "अनेकों वर्षों में भी" हो सकता है।

त्यर्थः, नहि प्रकाशस्तिमिरं विहायान्यस्य घटपटादेर्बाधको भवतीति भावः ॥ ३४ ॥

सं०—स्थूणानिखननन्याय से उक्त अर्थ को पुनः दृढ करते हुए यद्यादिसादि आठ श्लोकों से बन्ध के सिद्धान्त-सम्मतस्वरूप को युक्तियों के द्वारा बान्ध कर दिखाते हैं।

पदार्थ—यत् यत् ज्ञाननिवर्त्यम्=जो जो अधिष्ठानज्ञान के द्वारा बाध्य स्यात्=होता है तत् तत्=वह वह अर्थात् ज्ञान बाध्य पदार्थमात्र ही अज्ञानम्=अज्ञान ( अविद्या ) ही इष्यताम्=मानना चाहिये, यतः=क्योंकि—ज्ञानम्=ज्ञान (विद्या) अज्ञानस्य एव=अज्ञान ( अविद्या ) का ही निवर्त्तकम्=बाधक होता है अन्यस्य न=अन्य किसी पदार्थ का नहीं।

सार यह कि जैसे तेज तिमिर का परस्पर बाध्यबाधक-भाव है वैसे ही विद्या अविद्या का बाध्यबाधकभाव है। विद्या बाधक है और अविद्या बाध्य है, ब्रह्मविद्या द्वारा बाध्य होने के कारण बन्ध भी अविद्या ही जानना चाहिये ॥ ३४ ॥

उक्तमेवार्थं स्पष्टीकरोति—"ज्ञानाज्ञाने"ति।

**ज्ञानाज्ञानविरोधो हि न ज्ञानाज्ञानभिन्नयोः।**
**विरोधोऽस्ति ततो ज्ञानमज्ञानस्यैव नाशकम् ॥३५**

[1]हि=निश्चयेन ज्ञानाज्ञानविरोधः=ज्ञानञ्चाज्ञानञ्च ज्ञानाज्ञाने तयोः ज्ञानाऽज्ञानयोः परस्परं विरोधः सिंहच्छागवद् बध्यघातकभावो वा तेजस्तिमिरवत्सहानवस्थानलक्षणो ( निवर्त्यनिवर्तकरूपो ) वा अस्तीति शेषः । ज्ञानाज्ञानभिन्नयोः विरोधः न अस्ति=अर्थात् ज्ञानस्याऽज्ञानाभिन्नेन सह, अज्ञानस्य च ज्ञानभिन्नेन सह विरोधो नास्ति नैव भवितुमर्हतीत्यर्थः । ततः=तस्मात् द्वयोरेव पारस्परिकविरोधात् कारणात् ज्ञानम् अज्ञानस्य एव नाशकम् इति स्पष्टम् । ज्ञानं विद्या इति, अज्ञानमाविद्येति चाऽनर्थान्तरम् ॥ ३१ ॥

सं०—उक्त अर्थ को स्पष्ट करते हैं—

पदार्थ— हि=निश्चय करके[2] ज्ञानाऽज्ञानविरोधः=ज्ञान तथा अज्ञान का ही परस्पर विरोध होता है जैसा कि— सिंह और छाग का परस्पर "बध्यघातकभाव" विरोध है अथवा जैसे तेज तिमिर का परस्पर " सहानवस्थानरूप " अथवा " निवर्त्यनिवर्तकरूप " विरोध है । ज्ञानाज्ञान-भिन्नयोः=ज्ञान तथा अज्ञान से भिन्नों का परस्पर उक्त विरोधः न अस्ति=विरोध नहीं होता है । अर्थात् ज्ञान का अज्ञानभिन्न पदार्थ के साथ और अज्ञान का ज्ञान-

---

१ हेत्वर्थको वाऽत्र " हि " शब्दः । एवञ्च "हि" इत्यस्य "यतः" इत्ययमर्थः ।

२ यहां पर " हि " शब्द का अर्थ " जिस कारण से " भी हो सकता है ।

भिन्न पदार्थ के साथ विरोध नहीं होता है । ततः=तिस कारण ( अर्थात् इन दोनों का ही परस्पर विरोध होने के कारण) ज्ञानम्=ज्ञान अज्ञानस्य एव=अज्ञान का ही नाशकम्=नाशक है ॥ ३५ ॥

नन्वास्तां विद्याऽविद्ययोर्विरोधः, बन्धस्तु कथं विद्यया निवर्त्तेत, तस्याऽविद्यात्वाभावादित्यस्यां शङ्कायां विद्यया निव-र्त्यत्वेनैव बन्धस्याप्यविद्यात्वं साधयति " नाविद्या" इति ।

**नाविद्या यदि बन्धः स्यात्तदा नश्येन्न विद्यया ।**
**विद्यानाश्या ह्यविद्यैव ततोऽविद्यैव बन्धनम् ॥३६॥**

यदि=चेद् बन्धः=शरीरादिप्रपञ्चः अविद्या=अज्ञानं, न स्यात्=न भवेत्, तदा=तर्हि विद्यया=ब्रह्मज्ञानेन न नश्येत्=नैव निवृत्तो भवेत्, निवर्त्तते त्वसौ विद्ययैव "तरति शोकमात्मविद्" ( छां० ७ । १ । ३ ) इत्यादि श्रुतिशतोक्तेः

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ ( भ० गी० ७ । १४)

---

१ अत्रेदं बोध्यम्—" आत्मेत्येवोपासीत" ( बृ० १ । ४ । ४ ) " तदात्मानमेवावेत् " ( बृ० १ । ४ । १० ) तमेव धीरो विज्ञाय " ( बृ० ४ । ४ । २ ) " तमेव विदित्वातिमृत्युमेति" ( श्वे० ३ । ८ । ६ । १५ ) इत्याद्यनेकश्रुतिष्विवेहापि " मामेव " इत्येवकारोऽन्यानुपरक्त-प्रतिपत्त्यर्थः । मामेव=सर्वोपाधिविरहितं चिदानन्दसदात्मानमखण्डं ये प्रपद्यन्ते=वेदान्तवाक्यजन्यया निर्विकल्पसाक्षात्काररूपया निर्वचनानर्हशु-द्धचिदाकारत्वधर्मविशिष्टया सर्वसुकृतफलभूतया निदिध्यासनपरिपाकप्रसूतया

इत्याद्यसङ्ख्यस्मृतेश्च । हि=यतः विद्यानाश्या=विद्यया बाध्या अविद्या एव=अज्ञानमेवेत्युक्तम् । ततः=तस्माद्धेतोः अविद्या एव=अज्ञानमेव बन्धनम्=संसारदुःखात्मको बन्ध इत्याकलनीयमित्यर्थः । विद्याबाध्यान्यथाऽनुपपत्त्याऽविद्याकार्यभूतः संसारोऽप्यविद्यैवेति भावः । अत्राहुः खण्डनकाराः—

ॐन्यथाऽनुपपत्तिश्चेदस्ति वस्तुप्रसाधिका ।

पिनष्टि दृष्टैवमत्यं सैव सर्वबलाधिका ॥ ८४ ॥ इति ॥ ३६ ॥

---

चेतोवृत्त्या सर्वाऽज्ञानतत्कार्यविरोधिन्या विषयीकुर्वन्ति ते=ये केचित् एतां=दुरतिक्रमणीयामपि मायाम्=अखिलानर्थजन्मभुवमनायासानैव तरन्ति=अतिक्रामन्ति "तस्य ह न देवाश्च नाभूत्या ईशत आत्मा ह्येषां स भवति" ( बृ० १ । ४ । १० ) इति श्रुतेः । सर्वोपाधिनिवृत्त्या सच्चिदानन्दघनरूपेणैव तिष्ठन्तीत्यर्थः । ( मधुसूदनी ) ।

२ विज्ञानस्वप्रकाशवादे सङ्गृहीतेयं कारिका खण्डनकारैः । तत्र तेषामयमाशयो यद् न वयं स्वेनैव क्रियाकर्मभावं विषयविषयिभावं वा स्वप्रकाशार्थं मन्यामहे, यथा तु भवतां मते सत्तासम्बन्धेन द्रव्यादिषु सद्व्यवहारः सत्ता तु स्वयमेव सद्रूपा, न चैतावता स्वात्माश्रयता तस्याः, तथा ज्ञानमपि स्वविषयं घटादिकं प्रकाशयत् स्वयमेव प्रकाशस्वरूपम् । परं गुरुमतमिदं न गुरोर्मतम्, यतो ह्यस्मिन् ( औपनिषदे ) पक्षे विषयोऽसन्नेव, गुरूणां मते तु सत्यो विषयः । एतावता तु साम्यं स्याद् यथा स्वाऽविषयेऽपि कुटादौ बहुव्रीहिवाक्यं व्यवहारं प्रवर्त्तयति—इति, तथा ज्ञानमविषयेऽप्यात्मन्यविद्यादशायामिति । यथा—" अहम् " इति व्यवहारान्यथाऽनुपपत्त्या घटादिव्यवहारे "अन्यो ज्ञाताऽन्यज्ज्ञेयम् " इति दृष्टोऽपि व्यवहारस्त्यज्यते, यथा वा—" जानामि " इति व्यवहारान्यथाऽनुपपत्त्या " ज्ञानमन्यज्ज्ञेयश्चान्यत्" इत्यन्यत्र दृष्टोऽपि व्यवहार-

सं०—ननु विद्या तथा अविद्या का परस्पर विरोध रहता है तो रहो परन्तु विद्या द्वारा बन्ध की निवृत्ति कैसे हो सकती है? क्योंकि बन्ध अविद्यारूप नहीं है। इस आशङ्का के निवारणार्थ बन्ध को अविद्यारूप कथन करते हैं[1]—

पदार्थ—यदि=यदि बन्धः=शरीरादि प्रपञ्च अविद्या=अविद्यारूप न स्यात्=न होवे, तदा=तब विद्या=ज्ञान से न नश्येत्=कदापि निवृत्त न होवे। परन्तु तरति शोकमात्मवित्=इत्यादि श्रुतियों द्वारा ब्रह्मविद्या से ही बन्ध की निवृत्ति कथन की गई है। हि=जिस कारण से विद्यानाश्या=विद्या द्वारा बाध होने योग्य अविद्या एव=अविद्या ही है ततः=इस हेतु से बन्धनम्=संसार दुःखात्मक बन्ध आविद्या एव=अविद्या अर्थात् अज्ञानरूप ही है ॥३६॥

---

स्त्याज्य एव। सर्वतोवलवतीयमन्यथाऽनुपपत्तिः तथा दृष्टतामात्रवलमवलम्ब्य प्रवृत्तं तर्कशतमपि वाधते। तदाहुश्च प्रमाणिकाः—

प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि।
अदृष्टशतभागोऽपि न कल्प्यो निष्प्रमाणकः॥ इति

प्रवलतरार्थापत्तिप्रमाणोपष्टम्भबलेन ज्ञानस्य स्वप्रकाशत्वमेव व्यवस्थापितं तद्वत् प्रकृतेऽपि विद्यावाध्याऽन्यथानुपपत्तिर्बन्धस्याविद्यात्वमेव (मिथ्यात्वमेव) दृढीकरोतीत्यभिप्रायवान् आह—“अत्राहुः” इति।

१ विपक्ष में बाधक दर्शाते हुए बन्ध को अविद्यारूप कथन करते हैं।

बन्धस्याऽविद्यातः पृथक्स्वरूपत्वे अविद्यानिवृत्तावपि मोक्षो न स्यादिति वादिशिरसि दण्डं पातयन् बन्धस्याऽविद्यात्वमेव द्रढयति—

**अविद्यायाः पृथग्भूतः कश्चिद्बन्धो यदीष्यते ।**
**तदा कश्चिन्न मुच्येताऽविद्याहानेऽपि विद्यया ३७**

"अविद्यायाः" इति । यदि=चेत् बन्धः=बन्धो नाम कश्चित्=पदार्थः अविद्यायाः=अज्ञानात् पृथग्भूतः=स्वतन्त्र एव इष्यते=काम्यतेऽभ्युपगम्यत इति यावत्, तदा=तर्हि कश्चित्=कोऽपि सुखदुःखात्मकसंसारहानेच्छुर्मुमुक्षुः विद्यया=ब्रह्मसाक्षात्कारेण अविद्याहाने अपि=अविद्याया निवृत्तावपि न मुच्येत=नैव मुक्तो भवेत् ।

अयं भावः—बन्धस्याऽविद्याभिन्नत्वस्वीकारे विद्ययाऽविद्याऽपनोदे सत्यपि अविद्याभिन्नबन्धापनोदाभावादनिर्मोक्षप्रसङ्गः विद्याऽऽनर्थक्यश्चेति दोषद्वयमापतितं भवति । तत्परिजिहीर्षुभिरकामैरपि बन्धस्याऽविद्यारूपत्वमेव मन्तव्यम् । ॥३७॥

सं०—अविद्या से पृथक् बन्ध मानने वाले वादी के मत में मोक्ष की असिद्धि कथन करते हैं—

पदार्थ—यदि=यदि बन्धः=बन्ध नामक कश्चित्=कोई पदार्थ अविद्यायाः=अविद्या से थपृग्भूतः=पृथक् स्वतन्त्र (सत्य) पदार्थ इष्यते=माना जाय तदा=तब कश्चित्=कोई मुमुक्षु विद्यया अविद्यानिवृत्तौ अपि=विद्या से अविद्या के निवृत्त हो जाने पर भी न मुच्येत= कदापि मुक्त न होगा ।

सार यह कि—अविद्या को बन्ध न स्वीकार करके

यदि किसी अन्य पदार्थ को बन्ध मान लिया जावेगा तो उस पक्ष में विद्या से अविद्या की निवृत्ति हो जाने पर भी अविद्याभिन्न बन्ध को यथावस्थित रहने से मोक्ष का अभाव और विद्या का वैयर्थ्य यह दो दोष उपस्थित हो जावेंगे। इन दोनों दोषों का परिहार करने की इच्छा वाले जिज्ञासु पुरुषों को बन्ध का वास्तविकरूप अविद्या ही जानना चाहिए ॥ ३७ ॥

ननु निवर्ततां विद्ययाऽविद्यैव । तत्पृथग्भूतस्तु बन्धः कर्मणोपासनयाऽन्येन वा केनचित्साधनेन निवर्त्स्यत एवेति अविद्याभिन्नबन्धस्वीकारे नानिर्मोक्षप्रसङ्ग इत्याशङ्क्य ज्ञानमेव बन्धबाधकं नान्यत्किमपीति पूर्वप्रतिपादितमेवार्थं द्वाभ्यां पुष्टीकरोति "नच" इति ।

**न च ज्ञानात्पृथक्किञ्चिद्बन्धविश्लेषसाधनम् ।**
**श्रूयते युज्यते वापि यतो बन्धविमोचनम् ॥३८॥**

ज्ञानात् पृथक्=ज्ञानभिन्नं किञ्चित्=स्वतन्त्रं नच=नैव बन्धविश्लेषसाधनम्=बन्धस्य निवृत्तावुपायः श्रूयते=श्रुत्या प्रतिपाद्यते अपि[1] वा=अथवा युज्यते=युक्तियुक्तो भवति, यतः=यस्मात्साधनात् बन्धविमोचनम्=बन्धस्य विमोचनं बन्धाद्वा विमोचनं मुक्तिर्भवेदिति शेषः "सुरेश्वराचार्यैः"रपि नैष्कर्म्यसिद्धावुक्तम्—

अप्रमोत्थं प्रमोत्थेन ज्ञानं ज्ञानेन बाध्यते ।
अहिरज्ज्वादिवद्बाधो देहाद्यात्ममतेस्तथा ॥ (२-१०४) इति ॥३८॥

---

१—'अपि' शब्दोऽयं भिन्नक्रमो वा भवितुमर्हति । एवञ्चायं पूर्वार्धगतेन 'किञ्चित्' शब्देनान्वयनीयः ।

सं०—ज्ञान ही अज्ञान का बाधक होता है इस अर्थ को दो श्लोकों से पुष्ट करते हैं—

अथवा—ननु यदि विद्या से अविद्या की ही निवृत्ति होती है तो हो। अविद्या से पृथग्भूत बन्ध की निवृत्ति तो कर्म उपासनादिक किसी उपायान्तर से हो जावेगी। इस प्रकार अविद्याभिन्न बन्ध पक्ष में अनिर्मोक्षप्रसङ्गरूप दोष नहीं दिया जा सकता। इस आशङ्का को हृदय में रख कर ग्रन्थकर्ता अग्रिम दो श्लोकों द्वारा "ज्ञान विना बन्ध का कोई बाधक नहीं है" इस पूर्वोक्त अर्थ को ही परिपुष्ट करते हैं:—

पदार्थ—ज्ञानात् पृथक्=ज्ञान से भिन्न किञ्चित्=(अन्य) कोई स्वतन्त्र बन्धविश्लेषसाधनम्=बन्ध निवृत्ति का उपाय नच श्रूयते=श्रुति से प्रतिपादन नहीं किया गया है अपि वा=अथवा अर्थात् ना ही युज्यते=युक्तियुक्त हो सकता है यतः=जिस उपाय से बन्धविमोचनम्=बन्ध की निवृत्ति हो सके ॥३८॥

**ज्ञानाद्बन्धविनाशस्तु श्रूयते युज्यतेऽपि च।**
**अज्ञानज्ञानयोरेव नाश्यनाशकता यतः ॥३९॥**

"ज्ञानाद्" इति—"तु" ना पक्षान्तरं व्यावर्त्तयति–ज्ञानात् तु=

---

१—इस 'अपि' शब्द का सम्बन्ध श्लोक पूर्वार्धगत 'किञ्चित्' शब्द के साथ भी हो सकता है। इस प्रकार अन्वय करने से 'किञ्चिदपि' का अर्थ होगा "कोई भी कर्म उपासना आदिक"।

विद्ययातु बन्धविनाशः=बन्धनिवृत्तिः श्रूयते युज्यतेऽपि च=श्रुतियुक्तिसिद्धेत्यर्थः। यतः अज्ञानज्ञानयोरेव=विद्याऽविद्ययोरेव नाश्यनाशकता=बाध्यबाधकभावः, अज्ञानं बाध्यम् ज्ञानञ्च तस्य बाधकमित्यर्थः। श्रुतियुक्ती पूर्वमभिहिते ॥ ३९ ॥

पदार्थ—("तु" शब्द से पक्षान्तर की व्यावृत्ति जाननी) ज्ञानात् तु=परन्तु ज्ञान से बन्धविनाशः=बन्ध की निवृत्ति श्रूयते=वेद से सुनी जाती है, अपि च=और युज्यते=युक्तियुक्त भी है यतः=क्योंकि अज्ञानज्ञानयोरेव=अज्ञान और ज्ञान का ही नाश्यनाशकता=परस्पर बाध्यबाधकभाव है। अज्ञान बाध्य है और ज्ञान ( अधिष्ठान ज्ञान ) उसका बाधक है ॥३९॥

बन्धस्याऽविद्यात्वमुपसंहरन् पञ्चावयवानुमानस्वरूपमुपनिबध्नाति—"ततः" इति।

**ततो विद्याविनाश्यत्वाद्बन्धोऽविद्यैव सम्मतः।**
**यथा रज्जूरगारोपस्तथा चायं ततस्तथा ॥४०॥**

ततः=तस्माद्धेतोः बन्धीयज्ञाननाश्यत्वस्य श्रुतियुक्तिसिद्धेः विद्याविनाश्यत्वात्=ब्रह्मात्मैक्यसाक्षात्काररूपया विद्यया विनाश्यत्वात् बाध्यत्वात् बन्धः=प्रपञ्चः अविद्या एव सम्मतः=अविद्यारूपेणैव निश्चितः अधिष्ठानाऽज्ञानजनितस्याप्यज्ञानरूपत्वादधिष्ठानसाक्षात्कारबाध्यत्वाच्चारोप्यस्य। दृष्टान्तयति—"यथा" इति। उपनयति 'तथा चायम्' इति। निगमयति 'ततस्तथा' इति। स्पष्टं व्याख्यातप्रायञ्च ॥४०॥

सं०—बन्ध के अविद्यात्व का उपसंहार करते हुए

पञ्चावयव वाले ( परार्थ ) अनुमान का स्वरूप बांधते हैं–

पदार्थ—ततः=इस कारण से अर्थात् बन्ध के ज्ञान-नाश्यत्व को श्रुतियुक्तिसिद्ध होने से विद्याविनाश्यत्वात्= विद्या द्वारा बाध्य होने के कारण बन्धः=प्रपञ्चरूप सब बन्ध अविद्या एव=अविद्यारूप ही सम्मतः=निश्चित है, बन्ध को अविद्यारूप मानना ही समीचीन है । यथा=जैसे रज्जूरगा-रोपः=रज्जू में सर्प का आरोप विद्यानाश्य होने से अविद्या रूप है तथा च अयम्=वैसे ही यह बन्ध भी ज्ञाननाश्य है ततः तथा=इस कारण रज्जुसर्प की भ्रान्ति ज्ञाननाश्य होने से अविद्यारूप ही है तद्भिन्न नहीं ॥४०॥

अविद्याया बन्धत्वे वार्त्तिककाराचार्यसंवादमप्याह "अविद्या-स्तमय" इति ।

**अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः ।**
**इत्येवं सर्ववेदान्तपारगाः प्रवदन्ति हि ॥ ४१ ॥**

---

१ यहां पर अनुमान के पाञ्चों अवयवों का विभाग निम्नलिखित है प्रतिज्ञा 'बन्धः अविद्यैव सम्मतः ।' हेतु—'विद्याविनाश्यत्वात्' दृष्टान्त—यथा रज्जूरगारोपः' । उपनय—'तथा चायम्' । निगमन—'ततस्तथा' ॥

१—तथा ह्याहुः श्रीसुरेश्वराचार्या बृहदारण्यकोपनिषद्भाष्यवार्तिके :—

अविद्यानाशमात्रश्च मोक्ष आत्मन इष्यते । (३।३।२३) इति,
न चाविद्यातिरेकेण मुक्तेर्बन्धोऽन्य इष्यते । (३।३।२२) इति च

अविद्यास्तमयः=अविद्यायाः सकलसंसारानर्थहेतुभूतायाः सत्त्वेनाऽसत्त्वेन सदसत्त्वेन च वक्तुमशक्याया अतस्मिंस्तद्बुद्धिरूपायायाः अस्तमयः संस्कारादिकार्यरूपेणाप्यनवस्थानम्, स मोक्षः=मोक्षपदार्थः, अविद्यात्मकबन्धशून्य आत्मैव मोक्षपदार्थ इत्यर्थः। सा च=त्वर्थेचायं चः पठितः तेन पक्षान्तरव्यावृत्तिर्ज्ञेया। अविद्या तु बन्धः=बन्धपदार्थः उदाहृतः=कथितः। उक्तश्च—

तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते।
योगी मायाममेयाय तस्मै योगात्मने नमः॥ इति।

इति एवम्=एवं रूपेण सर्ववेदान्तपारगाः=सकलवेदान्तशास्त्ररहस्य वेत्तार आचार्याः प्रवदन्ति=उद्भटभावेन प्रतिपादयन्ति, हि=इति निश्चितोयमर्थो यदविद्याया एव बन्धत्वं नामेति॥ ४१॥

सं०—अविद्या के बन्धरूप होने में वार्त्तिककार "सुरेश्वराचार्य" की सम्मति दर्शाते हैं—

पदार्थ—अविद्याऽस्तमयः=सकल संसाररूप अनर्थ की हेतुभूत अविद्या का अस्त हो जाना, संस्कारादि कार्यरूप से भी अवस्थित न रहना ( अर्थात् कार्य सहित अविद्या की निवृत्ति ही ) मोक्षः=मोक्ष है, सा च=और वह अविद्या ही बन्धः उदाहृतः=बन्ध नाम से पुकारी जाती है, हि=निश्चय कर के सर्ववेदान्तपारगाः=सब वेदान्तशास्त्र के पारगामी वसिष्ठ व्यास आदि आचार्य इति एवं प्रवदन्ति=इस प्रकार कथन करते हैं।—

जैसा कि विष्णुपुराण में भी कथन किया है कि—

तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते ।
योगी मायाममेयाय तस्मै योगात्मने नमः ॥

( अर्थ—जिस योगात्मा के हृदय में साक्षात्कार कर लेने से योगी मायात्मक अविद्या के पार हो जाता है उस अप्रमेय योगात्मा के प्रति मेरा नमस्कार हो )। यहां पर "अविद्यां तरति" इस शब्द से अविद्यानाश का अभिप्राय है ॥ ४१ ॥

नन्वास्तामविद्यैव बन्धो विद्यया च तन्नाशो मोक्ष इति, संसारदुखस्य बन्धत्वे तु किमायातमिति जिज्ञासायां कार्यकारणयोरनन्यत्वन्यायेन तस्यापि बन्धतया दुःखत्वं प्रतिजानीते "कार्यस्य" इति ।

**कार्यस्य कारणात्मत्वाद्धेतोः कार्यतया स्थितेः ।**
**अविद्यैवोदितो बन्धस्तथा दुःखमथोच्यते ॥४२॥**

कार्यस्य=संसारदुःखात्मकस्याऽविद्याकार्यभूतस्य बन्धस्य, कारणात्मकत्वात्=अविद्यात्मककारणस्वरूपत्वाद् अविद्यासमसत्ताकत्वात् हेतोः=अविद्यारूपस्य संसारकारणस्य कार्यतया=कार्यभावेन स्थितेः=अवस्थितेः अविद्याजनितः बन्धः=बन्धपदार्थ अविद्या एव उदितः=अविद्याशब्देनैवाभिलप्यते । कार्यकारणयोरनन्यत्वादित्यर्थः । अथ=बन्धस्याऽविद्यात्वसमर्थनानन्तरम् तथा=तेनैव प्रकारेण अर्थात् कार्यकारणयोरभेदन्यायेन दुःखम्=बन्ध एव दुःखं प्रतिकूलवेदनीयम्, उच्यते=कथ्यते मनीषिभिरिति शेषः, इत्येवं सम्प्रति बन्धस्यैव दुःखत्वं प्रतिपादयाम इत्यर्थः ।

अत्रायमाशयः—उपादानकारणाज्जायमानं कार्यं तत्समसत्ताकं भवति सुवर्णपिण्डाज्जायमानं रुचिकस्वस्तिकादिकं यथा सुवर्णस्वभावमिति सत्कार्यवादिनां सिद्धान्तः। एवञ्चास्मिन्नये कार्यकारणयोर्नास्ति भेदः, अतोऽविद्यातो जायमानो बन्धोऽप्यविद्यैव, साच दुःखम्, दुःखञ्च जिहासितं सर्वं प्राणिनामिति तस्या दुःखरूपतां प्रतिपादयामः। दुःखरूपत्वञ्चास्या योगशास्त्रेऽप्युक्तम्—* "अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः" "अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम्" इति। (यो० साधन० सू० ३, ४) एवमविद्याया दुःखरूपत्वम्॥

सं—अब कार्यकारण के अभेदन्याय से अविद्या के परिणामभूत बन्ध को अविद्यारूप कथन करके अविद्या को

---

१ अयमभिप्रायः—"क्लेशा इति पञ्च विपर्यया इत्यर्थः"। अविद्या तावद्विपर्यय एव, अस्मितादयोऽप्यविद्योपादानास्तदविनिर्भागवर्त्तिन इति विपर्ययाः, ततश्चाऽविद्यासमुच्छेदे तेषामपि समुच्छेदो युक्त इति भावः। (यो०वा०) यत्रापरैरप्यविद्यैकदेशानामविद्योपादानकानां विपर्ययत्वेन क्लेशत्वमभ्यधायि, कुतः पुनरौपनिषदानां सर्वस्यास्य प्रपञ्चस्याऽविद्यापरिणामभूतत्वात् क्लेशत्वं न स्यादिति। इयमेवचाऽविद्या (कार्याकारा) मार्कण्डेयपुराणे सप्तशतीप्रकरणे" "महामोहा" पदेनाभिलप्यते। महामोहो भोगेच्छारूपमविद्यापर्वाऽस्ति अस्या मित्यर्शं आद्यजन्तान्महामोहशब्दाट्टाप्—"महामोहा" संसारमूलकारणरागरूपमोहस्वरूपा। तदुक्तमभियुक्तैः—

तमोऽविवेको मोहः स्यादन्तःकरणविभ्रमः।
महामोहस्तु विज्ञेयो ग्राम्यभोगसुखैषणा॥
मरणं ह्यन्धतामिस्रं तामिस्रं क्रोध उच्यते।
अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः॥ इति॥

दुःखरूप कथन करते हुए तज्जन्य बन्ध को दुःखस्वरूप सिद्ध करने की प्रतिज्ञा करते हैं—

पदार्थ—कार्यस्य=संसार दुःखरूप कार्य को कारणात्मत्वात्=अविद्यात्मक कारण का स्वरूप होने से अर्थात् जो अविद्या का स्वभाव है उसी स्वभाव वाला होने से हेतोः=आविद्या रूप संसार कारण की कार्यतया=कार्यरूप से स्थितेः=स्थिति होने के कारण उत्पन्न हुआ बन्धः=संसार दुःख, अविद्या एव=आविद्या ही उदितः=कथन किया गया है।

अथ=बन्ध को अविद्या सिद्ध करने के अनन्तर तथा=उक्त न्याय के द्वारा ही दुःखम्=बन्ध को दुःखरूप उच्यते=कथन करते हैं।

भाव यह कि (परिणामी) उपादान कारण से उत्पन्न हुआ कार्य अपने कारण के समान स्वभाव वाला होता है जैसा कि सुवर्णपिण्ड से उत्पन्न हुए स्वस्तिक रुचकादि भूषण सुवर्ण के समान स्वभाव वाले पाये जाते हैं, इसी प्रकार अविद्या से उत्पन्न हुआ बन्ध भी अविद्या समान-स्वभाव होने के कारण अविद्यारूप ही जानना चाहिये, और शास्त्रकारों ने अविद्या को दुःखरूप कथन किया है जैसा कि योगशास्त्र में साधन पाद के तृतीय और चतुर्थ सूत्रों में वर्णन किया है कि—अविद्या, अस्मिता, राग, द्वेष

तथा अभिनिवेश यह पांच क्लेश हैं और अविद्या ही बाकी चारों का क्षेत्र है ॥४२॥

हेतोः कार्यतया स्थितेः बन्ध एव दुःखमुच्यत इत्युक्तम् । बन्धस्य पुनर्दुःखहेतुत्वे किं मानमित्याशङ्क्य अन्वयव्यतिरेकाभ्यां बन्धस्य दुःखहेतुतां साधयति "सति बन्धे" इति ।

**सति बन्धे भवेद् दुःखं बन्धाभावे न दुःखिता ।**
**अन्वयव्यतिरेकाभ्यां हेतुर्दुःखस्य बन्धनम् ॥४३॥**

बन्धे=कारागारादिरूपे बन्धे सति=विद्यमाने दुःखम्=कष्टं भवेत्=भवतीत्यर्थः। बन्धाभावे=बन्धस्याऽभावे दुःखिता=दुःखिनो भावो दुःखिता दुःखम् न=नैव भवेदिति पूर्वेणान्वयः । एवम् अन्वयव्यतिरेकाभ्याम्=तत्सत्त्वे तत्सत्त्वमन्वयः, तदभावे तदभावो व्यतिरेकः ताभ्यामन्वयव्यतिरेकाभ्याम् बन्धनम्=बन्धः, दुःखस्य=प्रतिकूलतया प्रत्यात्मवेदनीयस्य हेतुः=कारणमस्तीति शेषः ॥४३॥

सं०—उपादान कारण ही कार्यरूप से स्थित होता है इस न्याय से, पूर्व बन्ध की दुःखरूपता कथन की, परन्तु बन्ध और दुःख की परस्पर कारणकार्यता में क्या प्रमाण है ? इस आशङ्का को हृदय में रख कर अब अन्वयव्यतिरेकद्वारा बन्ध को दुःख का कारण सिद्ध करते हैं—

पदार्थ—बन्धे=कारागारादि बन्ध के सति=विद्यमान होने पर दुःखम्=कष्ट भवेत्=होता है, बन्धाभावे=उक्त बन्ध के न होने पर दुःखिता=दुःख न=नहीं होता (यह सर्वलोक-

प्रसिद्ध वार्त्ता है ) इस लिये अन्वयव्यतिरेकाभ्याम्=अन्वय तथा व्यतिरेक के द्वारा बन्धनम्=बन्ध, दुःखस्य=प्रत्येक जीव को प्रतिकूल रूप से प्रतीयमान जो दुःख, उस का हेतुः= कारण है।

भाव यह है कि—जिस के होने पर जो होवे उसको "अन्वय" तथा जिस के न होने पर जो न होवे उस को "व्यतिरेक" कहते हैं। यह अन्वयव्यतिरेक दोनों कार्यकारणभाव के गमक (निश्चायक) होते हैं।जैसे चक्षुरिन्द्रिय के होने पर रूप का दर्शन तथा उसके न होने से रूपदर्शन का अभाव होता है। इस नियम के अनुसार बन्ध के होने से दुःख का होना और बन्ध के न होने से दुःख का न होना स्पष्ट सिद्ध करता है कि एकमात्र बन्ध ही दुःख का कारण है ॥४३॥

हेतुकार्यरूपेण बन्धदुःखयोः विभागमुक्त्वाऽधुना तयोरभेदमभिप्रयन् अन्योन्यात्मकतामुपपादयति "कार्यस्य" इति—

**कार्यस्य कारणात्मत्वाद् दुःखस्य बन्धरूपता।**
**स्थितेः कार्यतया हेतोर्बन्धस्य दुःखरूपता ॥४४॥**

कार्यस्य कारणात्मत्वात्=कार्यकारणयोरभेदात् दुःखस्य=शरीरादेः बन्धरूपता=बन्धात्मकता ज्ञेयेति शेषः। हेतोः=कारणस्य बन्धस्य कार्यतया=कार्यरूपेण दुःखरूपेण स्थितेः=अवस्थानात् बन्धस्य अपि दुःखरूपता इति स्पष्टम् ॥४४॥

सं०—हेतु तथा कार्यरूप के द्वारा बन्ध और दुःख का परस्पर विभाग कथन करके अब उन का अभेद प्रतिपादन करने के अभिप्राय से दोनों की अन्योन्यात्मकता कथन करते हैं।

पदार्थ—कार्यस्य कारणात्मत्वात् = कार्यकारण का अभेद होने से दुःखस्य = शरीरादि दुःख की बन्धरूपता = बन्धरूपता स्पष्ट है, तथा हेतोः = हेतु की कार्यतया = कार्यरूप से स्थितेः = स्थिति होने के कारण भी बन्धस्य = बन्ध की दुःखरूपता = दुःखरूपता स्पष्ट है ॥ ४४ ॥

विपक्षे बाधकं पातयन् बन्धस्य दुःखरूपतायामनुमानमाह " यदि " इति।

**यदि दुःखतया बन्धः स्थितो न स्यात्तदात्मनः।**
**द्वेष्यो न स्याद्यतस्तादृग्दुःखमेव ततस्तथा ॥४५॥**

यदि=चेत् बन्धः=शरीरादिप्रपञ्चः दुःखतया=दुःखभावेन स्थितः=परिणतो वर्त्तमानः न स्याद्=नैव भवेत्, तदा=तर्हि आत्मनः=दुःखजिहासोरात्मनः प्राणिवर्गस्य द्वेष्यः=द्वेषविषयः हातुमिष्टः (अपि) न स्यात्, यतः=यस्मात्कारणात् बन्धः दुःखम् एव=एवकारोत्रान्यव्यवच्छेदार्थकः दुःखमेव नान्यात्किमपीत्यर्थः, अतोऽसौ तादृक्=द्वेष्यः। प्रतिकूलवेदनीयत्वाद्बन्धो द्वेष्यः इत्यर्थः। ततः = तस्मात्कारणात् स बन्धः तथा=दुःखरूप एव नान्यथा। तथाच प्रयोगः—"बन्धो दुःखं द्वेष्यत्वात्कारागारवत्" इति। यन्न द्वेष्यं तन्न दुःखं यथात्मेति भावः ॥ ४५ ॥

सं०—विपक्ष में बाधक दर्शाते हुए बन्ध के दुःखरूप होने में अनुमान कथन करते हैं—

पदार्थ—यदि=यदि बन्धः=शरीरादिप्रपञ्च दुःखतया=दुःखरूप से स्थितः=विद्यमान न स्यात्=न हो तदा=तब आत्मनः=प्रत्येक प्राणी के द्वेष्यः=द्वेष का विषय न स्यात्=न होना चाहिये यतः=जिस कारण से वह दुःखम् एव=केवल दुःख ही है अतः तादृग्=द्वेष्य=द्वेष का विषय है। ततः=इस हेतु से वह बन्ध तथा=वैसा दुःखरूप ही है।

यहां अनुमान का प्रयोग ऐसा जानना–" बन्धो दुःखं द्वेष्यत्वात् कारागारवत् यन्न द्वेष्यं तन्न दुःखं यथाऽऽत्मा"=बन्ध दुःखरूप है, द्वेष का विषय होने से, कारागार की न्यांई जो द्वेष्य नहीं वह दुःखरूप भी नहीं जैसा कि आत्मा ॥४५॥

बन्धस्य दुःखान्यत्वे दण्डमाह—"यदि" इति।

**यदि बन्धाद्भवेद्भिन्नं दुःखं वा दुःखसाधनम्।**
**मुक्तस्यापि तदा नैव विनिवर्त्तेत दुःखिता ॥४६॥**

यदि=चेत् दुःखं वा दुःखसाधनं वा बन्धात्=उक्तरूपात् भिन्नं भवेत्, तदा=तर्हि मुक्तस्य अपि=मोक्षं प्राप्तस्याप्यात्मनः दुःखिता=दुःखसम्बन्धवत्ता नैव विनिवर्त्तेत=कदापि निवृत्ता न भवेत्, बन्धस्य दुःखान्यत्वपक्षे मुक्तिरेव नोपपद्येतेति विपक्षे दण्ड इति भावः ॥४६॥

सं०—बन्ध के दुःखभिन्नत्व पक्ष में बाधक (दोष) कथन करते हैं—

पदार्थ—यदि=यदि दुःखम्=दुःख वा=अथवा दुःख-साधनम्=दुःखसाधन शरीरादिक बन्धात्=उक्त बन्ध के स्वरूप से भिन्नम्=भिन्न भवेत्=हो तदा=तब मुक्तस्य अपि=मुक्तात्मा का भी दुःखिता=दुःखसम्बन्ध नैव विनिवर्त्तेत=कदापि निवृत्त न होगा ।

भाव यह है कि विद्या से अविद्यारूप बन्ध की निवृत्ति होती है ऐसा पूर्व सिद्ध किया गया है । बन्ध की निवृत्ति का ही दूसरा नाम मोक्ष है, यदि कोई वादी दुःख को बन्ध से भिन्न मानने का हठ करेगा तो उसके मत में विद्याद्वारा बन्ध की निवृत्तिरूप मोक्ष हो जाने पर भी, बन्धभिन्न होने से दुःख की सत्ता (अनिवृत्ति) ज्यों की त्यों बनी रहेगी । इस प्रकार मुक्तात्मा पुरुष भी दुःखभागी मानना पड़ेगा । परन्तु सदुःख मोक्ष का पक्ष किसी भी वादी को सम्मत नहीं है इसलिए "बन्ध ही दुःख है, दुःख ही बन्ध है" यही पक्ष समीचीन है ॥४६॥

बन्धस्य हातव्यत्वेनापि दुःखत्वमेवेष्टमित्याह—"दुःखं हि" इति ।

**दुःखं हि प्राणिनामेकं हातुमिष्टं प्रयत्नतः ।**
**यतस्तन्न पृथग्बन्धात्ततः सोऽपि जिहासितः ॥४७॥**

हि=निश्चयेन प्राणिनां=सर्वस्यापि प्राणिवर्गस्य एकं=केवलं दुःखं, प्रयत्नतः=प्रयत्नेन हातुमिष्टम्=त्यक्तव्यम् एकमात्रतया दुःखस्यैव परित्यागोऽभीष्टः,प्रतिकूलवेदनीयत्वात्तत् कस्यापि नेष्टमिति भावः। यतः=कारणात् तत्=दुःखं वन्धात्=शरीरादेः पृथक् न=स्वतन्त्रं नास्ति ततः=तस्मात् कारणात्, सः अपि=बन्धोऽपि जिहासितः=हातुमिष्ट एवेत्यर्थः।

अयं भावः—"बाधनालक्षणं दुःखम्" (न्या० १।१।२१) इति दुःख-लक्षणमाचक्षते तद्विदः। बाधना पीडा ताप इति चानर्थान्तरम्। अत्र च बाधनेति बाधनाविषयां बुद्धिं लक्षयति,तेन बाधना च तद-नुषङ्गिणश्च शरीरादयो गौणमुख्यभावेन लक्षिता भवन्ति। सैव हि बाधनाबुद्धिर्दुःखे मुख्या शरीरादौ च गौणीति वाचस्पतिमिश्राः। एवञ्च दुःखशब्देन सर्वे जायमानाः शरीरादय उच्यन्ते। तत्र— "तदत्यन्तविमोक्षोऽपवर्गः"(न्या० १।१।२२)इति वदता न्यायाचार्येणापि दुःखस्य जिहासितत्वं स्पष्टमुक्तम्।

समाधिभावनार्थं क्लेशतनूकरणार्थञ्च क्रियायोगमुपदिशता योगाचार्येणाऽपि—"अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः" (यो० द० २।३) इत्युक्त्वा "अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नो-दाराणाम्"(यो० द० २।४)इत्यविद्याया एव मुख्यं क्लेशत्वमभ्यधायी-त्युक्तप्रायम्। तदनुबन्धि च यत्तत्सर्वं क्लेशपदाभिलप्यमिति युक्तं दुःखस्य जिहासितत्वे बन्धस्यापि जिहासितत्वमिति दिक्॥

सं०—अब "बन्ध त्यागने योग्य होने से भी दुःखरूप है" इस अर्थ को कहते हैं—

पदार्थ—हि=निश्चय करके प्रयत्नतः=यत्न के द्वारा

( पुरुषार्थ से ) प्राणिनाम्=सम्पूर्ण प्राणियों को एकं दुःखं हातुम् इष्टम्=एकमात्र दुःख ही त्यागने को इष्ट है, यतः= जिस कारण से तत्=वह दुःख बन्धात्=शरीरादि प्रपञ्च से पृथक् न=पृथक् नहीं अर्थात् स्वतन्त्र नहीं ततः= इस हेतु से सः अपि=वह बन्ध भी जिहासितः=त्यागने को इष्ट है।

भाव यह कि आत्माभिन्न सकल अनात्म पदार्थ "बन्ध" पद का वाच्य है और वही दुःखरूप होने से त्यागने योग्य है। जो २ हेय है वह अवश्य दुःखरूप है इस में कोई संशय नहीं ॥ ४७ ॥

बन्धस्य दुःखत्वं साधयति व्यतिरेकिणानुमानेन " बन्धो दुःखम् " इति ।

**बन्धो दुःखं जिहास्यत्वाद्यन्न दुःखं न तत्तथा ।**
**यथा मोक्षस्तथा नायं तस्मान्नैव तथापि सः ॥४८॥**

जिहास्यत्वात्=हातुमिच्छतीति जिहासति, जिहासितुमर्हं जिहास्यं, तस्य भावस्तत्त्वम् तस्मात् सर्वप्राणिजिहासाविषयत्वा- द्धेतोः बन्धः दुःखम्=शरीराद्यनात्मप्रपञ्चः सर्वोऽपि दुःखमेव । यत् दुःखं न" भवति " इति शेषः, तत् तथा=जिहास्यं न=नैव भवति । अत्र व्यतिरेकदृष्टान्तः यथा मोक्षः=यथा मोक्षो न दुःखम्, अत एव च न स जिहास्यः तथा=तद्वत् अदुःखरूपत्वेन जिहासाया अविषयः अयम्=बन्धो न=नास्ति, दुःखाभावाभा-

वरूपत्वेन जिहासाया विषय एव बन्धः न त्वविषयः इत्यर्थः,तस्मात्= दुःखरूपत्वेन जिहास्यत्वादेव हेतोः स अपि=बन्धोऽपि तथा नैव= मोक्षवत् जिहास्यत्वाभावरूपो न किन्तु जिहास्यत्वाभावाभावरूपोऽस्ति अत एव स दुःखमित्यर्थः । अत्राऽयं प्रयोगः–"बन्धो दुःखं जिहास्यत्वात् यन्नैवं तन्नैवं यथा मोक्षः" इति ।

अयं भावः—यथा "पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वाद्यन्नैवं तन्नैवम्=यन्न इतरेभ्यो भिद्यते न तद् गन्धवत् यथा जलं, न चेयं तथा" इत्यस्मिन् व्यतिरेकिणि यत्र यत्रेतरभेदाभावस्तत्र तत्र गन्धाभावः, यथा जलादौ इतरभेदाभावरूपसाध्याभावव्यापकता गन्धाभावे गृह्यते तथा प्रकृतेऽपि "यत्र यत्र दुःखत्वाभावस्तत्र तत्र जिहास्यत्वाभावो यथाऽऽत्मनि" इति दुःखत्वाभावरूपसाध्याभावव्यापकता जिहास्यत्वाभावे गृह्यत इति व्यतिरेकयोर्व्याप्तिमत्त्वादस्य व्यतिरेकित्वम्बोध्यम् । एवं व्यतिरेकिणाऽपि बन्धस्य दुःखत्वं स्पष्टम् ॥ ४८ ॥

सं०–अब व्यतिरेकि अनुमान से भी बन्ध की दुःखरूपता सिद्ध करते हैं—

पदार्थ—जिहास्यत्वात्=प्राणिमात्र के त्याग की इच्छा का विषय होने से बन्धः=बन्ध दुःखम्=दुःखरूप है, यत्= जो दुःखम्=दुःखरूप न=नहीं तत्=वह तथा=जिहास्य भी न=नहीं यथा=जैसा कि मोक्षः=मोक्ष (मुक्तस्वरूप आत्मा । अयम्=यह बन्ध तथा=मोक्ष की न्याईं (अदुःखरूप और अजिहास्य) न=नहीं है,अर्थात् दुःखरूप और जिहास्य है तस्मात्=

इसी हेतु से अर्थात दुःखरूप और जिहास्य होने से सः अपि=वह बन्ध भी तथा=मोक्ष के समान अदुःखरूप और अजिहास्य नैव=नहीं है अर्थात् दुःखरूप और जिहास्य ही है।

सार यह कि "जो २ हेय होता है वह सब दुःखरूप है" इस नियम के अनुसार अहङ्कारादि सब अनात्मवर्गरूप बन्ध हेय होने से दुःखरूप है। यदि बन्ध हेय न होता तो मोक्ष की भांति अदुःखरूप होता पर ऐसा (मोक्ष की न्याईं अहेय) न होने से वह दुःखरूप ही है ॥४८॥

उपादानोपादेययोरैक्यदृष्टान्तेनापि बन्धस्य दुःखतां स्पष्टीकरोति—"यथा" इति ।

**यथा बन्धतयाऽविद्या स्थिता बन्ध इतीर्यते ।**
**तथा दुःखतया बन्धः स्थितो दुःखमितीर्यते॥४९॥**

यथा=येन प्रकारेण बन्धतया=बन्धभावेन स्थिता=परिणता अविद्या=अनादिभावरूपमनिर्वचनीयमज्ञानम् बन्धः इति=बन्ध इत्येवंरूपेण ईर्यते=कथ्यते तथा=तद्वत्,अविद्यापरिणामस्याप्यविद्या-रूपत्वात् दुःखतया=दुःखभावेन स्थितः=परिणामं प्राप्तः बन्धः=बन्धः दुःखम् इति=दुःखमित्येवंरूपेण ईर्यते=कथ्यते । यथा बन्धरूपेण परिणताऽविद्या बन्धशब्दवाच्या तथा दुःखरूपेण परिणतः सर्वोऽपि देहादिप्रपञ्चरूपो बन्धो दुःखमितिशब्देन व्यपदिश्यते इति भावः । ४९ ॥

सं०—उपादान उपादेय के अभेद दृष्टान्त से भी बन्ध की दुःखरूपता कथन करते है—

पदार्थ—यथा=जिस प्रकार बन्धतया=बन्धरूप करके स्थिता=परिणामभाव को प्राप्त हुई अविद्या=अनादि अविद्या बन्धः इति ईर्यते=बन्धरूप कथन की जाती है तथा=इसी प्रकार दुःखतया=दुःखरूप से स्थितः=परिणत, अर्थात् विद्यमान बन्धः=बन्ध दुःखम् इति ईर्यते=दुःखरूप कथन किया जाता है।

कारण कार्य का अभेद होने से दुःखरूप कारण का कार्य भी दुःखरूप है, यह तात्पर्य है ॥ ४९ ॥

बन्धस्य व्यापकं लक्षणमाचक्षाण आदौ तत्स्वरूपं पिण्डीकृत्य दर्शयति—"अविद्यादि—" इति।

**अविद्यादित्रितापान्तो मिथ्याभूतो जिहासितः।**
**कामकर्माद्यनेकाख्यो बन्धो नैसर्गिको मतः ॥५०॥**

अविद्यादित्रितापान्तः=पूर्वोक्तलक्षणामविद्यामारभ्य आध्यात्मिकाधिदैविकाधिभौतिकाख्यदुःखत्रयपर्यन्तः, तथा मिथ्याभूतः=रज्ज्वश्रितचरणे भुजङ्गाश्चनारोपवत् कल्पितः जिहासितः=हातुमिष्टः हेयः तथा नैसर्गिकः=प्रत्यगात्मनि हेतुहेतुमद्भावेनानादिप्रवृत्तः प्रत्यक्चैतन्यसत्तामात्राऽनुबन्धी प्रवाहरूपेणानादिरिति यावत् कामकर्माद्यनेकाख्यः=कामः सङ्कल्पः,कर्म सङ्कल्पजनितं हितमहितं वा इत्यादयोऽनेका आख्या अभिधानानि यस्य सः, अविद्या-

  

कामकर्मादिभेदेन नानाविधो ज्ञानबाध्यः सर्वोऽप्यनात्मवर्गो बन्धः=बन्धपदाऽभिलपनीयः मतः=अभिमतः शास्त्र इत्यर्थः।

अत्रायमाशयः—अनाद्यविद्योपधानवशाप्रत्यक्स्वभावोप्यात्मा कर्तृत्वाभिमानपूर्वकनानाविधशुभाशुभकर्मसन्तानाऽविच्छेदाद्भूयो भूयः शोभनाशोभनाद्यध्यासवशात् रज्यन्मुह्यन् द्रुह्यंश्च विहितनिषिद्धप्रवृत्तिमुपसेवमानो धर्माऽधर्मफलोपभोगायोच्चावचानि शरीराणि रचयति,अवशश्च पुनः पुनर्घटीचक्रवद्भ्राम्यते सोऽयमस्याऽविद्याकामकर्माख्योऽनेकविधोऽनादिर्दुरुच्छेद्यो नैसर्गिको बन्धो वेदितव्यः। उक्तश्च कैवल्यरत्ने—

अज्ञाने सति कर्तृत्वं तस्य कर्म शुभाशुभम्।
तथा सति कथं कर्म बाधतेऽज्ञानमात्मनः॥
मूलभूते स्थितेऽज्ञाने ततो द्वैतं विजायते।
शोभनाशोमनाभ्यासस्तत्र पुंसः प्रजायते॥
रागद्वेषौ च जायेते शोभनाशोभनभ्रमात्।
प्रवर्त्तते पुनर्देही धर्माधर्मौ प्रवृत्तितः॥
धर्माऽधर्मोपभोगाय शरीरी जायतेऽवशः।
एवं पुनः पुनर्ब्रह्मंश्चक्रवद् भ्राम्यते नरः॥ इति।

(पराशरोपपुराणीयसारोद्धारे पृ० ३८)

बाह्या अपि—

अस्त्यात्मनो महादुःखं गाढं बद्धस्य कर्मभिः।
मनः पूर्वं कदाचिद्वै शश्वत्सर्वप्रदेशजम्[1]॥

इत्यादिना दुःखस्य स्वरूपं वर्जनीयत्वेनाहुः॥ ५०॥

१—(जैन) पञ्चाध्यायी अ० २७, श्लो० ३०९।

सं०—अब वन्ध का व्यापक लक्षण कथन करने के अभिप्राय से पहिले उसका स्वरूप संक्षेप से कथन करते हैं—

पदार्थ—अविद्यादित्रितापान्तः=अविद्या है आदि में जिस के तथा आध्यात्मिकादि त्रिविध ताप हैं अन्त में जिस के अर्थात् अविद्या से लेकर त्रिविध ताप पर्यन्त, मिथ्याभूतः= रज्जुसर्प की न्याईं कल्पित, जिहासितः=त्यागेच्छा का विषय हेय, तथा नैसर्गिकः=प्रवाहरूप से अनादि, कामकर्माद्यनेकाख्यः= काम, कर्म आदि अनेक हैं नाम जिस के ऐसा अर्थात् नाना प्रकार वाला, जो प्रपञ्च, वही वन्धः=वन्ध पदार्थ मतः= शास्त्रसम्मत है। प्रकृत में "काम" सङ्कल्प को कहते हैं तथा सङ्कल्पजनित हित अहित क्रिया का नाम "कर्म" जानना॥ ५० ॥

उक्तमेवार्थं पोषयति—"ये भूताः" इति।

**ये भूता ये भविष्यन्तो वर्त्तमानाश्च दुःसहाः।**
**स्वल्पानल्पाश्च येऽनर्थास्ते सर्वे बन्धमाश्रिताः॥५१॥**

ये अनर्थाः=दुःखरूपास्तत्साधनरूपाश्च येऽनर्थाः देहाद्याः भूताः=अतीताः ये भविष्यन्तः=अनागतावस्थाः ये च वर्त्तमानाः=प्रारब्धा अपरिसमाप्ताश्च भुज्यमाना इत्यर्थः, कीदृशास्ते ? दुःसहाः= सोढुमशक्याः परमार्त्तिजनकत्वात् स्वल्पानल्पाश्च=केचित् स्वरूपतः कालतो वाऽल्पपरिमाणाः केचिच्च बृहन्तः, ते सर्वे=अवच्छेद्याव-

च्छेदेन वर्त्तमानाः सर्वेऽपि ते तेऽनर्थाः बन्धम्=बन्धस्वरूपम् आश्रिताः=प्राप्ताः, बन्धस्थितिकालिकस्थितिभाजो बन्धरूपा एव सन्तीति भावः । यत्तदोर्नित्याऽभिसम्बन्धात् "ते" इत्येकमपरं पदमध्याहार्यम् ॥५१ ॥

सं०—उक्त अर्थ की पुनः पुष्टि करते हैं ।

पदार्थ—ये अनर्थाः=जो दुःख तथा दुःख के साधनभूत देहादि अनर्थ भूताः=अतीत हो चुके हैं, और ये भविष्यन्तः=जो भावी अनागतावस्था वाले हैं, तथा ये च वर्त्तमानाः=वर्त्तमान-काल में भोग दे रहे हैं और दुःसहाः=अत्यन्त पीडा देनेवाले स्वल्पानल्पाश्च=स्वरूप वा कालकृत परिमाण से छोटे तथा बडे हैं, ते सर्वे=वह सब अनर्थ बन्धम् आश्रिताः=बन्ध के आश्रय से ही होते हैं, अर्थात् जब तक बन्ध है तब तक ही शरीरादिक सब अनर्थ के हेतु हैं और वह सब बन्ध का स्वरूप ही जानने चाहियें ॥ ५१ ॥

एतादृशमहादुःखात्मकबन्धविध्वंसनाय मुमुक्षुप्रोत्साहनं दर्शयन् बन्धलक्षणं प्रतिजानीते—"सर्वदा" इति ।

**सर्वदा यतितव्यं हि यन्नाशाय मुमुक्षुभिः ।**
**सर्वथा नाशनीयस्य तस्य लक्षणमुच्यते ॥५२॥**

यन्नाशाय=यस्य बन्धस्य नाशाय अत्यन्तनिवृत्तये मुमुक्षुभिः=मोक्षेच्छावद्भिः हि=निश्चयेन सर्वदा=सर्वस्मिन् काले

गुरुकुले वा गृहे वा वने वाऽरण्ये वा यत्र वा तत्र वा यतितव्यम्=यत्न आस्थेयः,सर्वथा=सर्वप्रकारेण नाशनीयस्य=निवर्त्तनीयस्य तस्य=बन्धस्य लक्षणम्=असाधारणो धर्मः,इदानीम् उच्यते=कथ्यतेऽग्रिमेण श्लोकेनेत्यर्थः। बन्धलक्षणेन व्यावर्त्त्यबुद्धौ जातायां सम्यक् तस्य निवर्त्तनीयता ज्ञाता भवतीति भावः। बन्धस्याऽवश्यनिवर्त्तनीयता आचार्यपादैरपि "विवेकचूडामणौ" अभिहिता—

तस्मात्सर्वप्रयत्नेन भवबन्धविमुक्तये।
स्वैरेव यत्नः कर्त्तव्यो रोगादाविव पण्डितैः ॥६८॥ इति।

यथा रोगनिवृत्तये स्वयमेवौषधपानादौ प्रयत्यते तथा मुक्तयेऽपि स्वयमेव यतितव्यमिति भावः ॥५२॥

सं०—उक्त महादुःखस्वरूप बन्ध की निवृत्ति के लिये मुमुक्षुजनों का प्रोत्साहन करते हुए उसके लक्षण की प्रतिज्ञा करते हैं—

पदार्थ—यन्नाशाय=जिस बन्ध की निवृत्ति के लिये हि=निश्चय करके मुमुक्षुभिः=मुक्ति के अर्थी साधकजनों को सर्वदा=सर्वकाल में अर्थात् जहां तहां किसी भी आश्रम में हो यतितव्यम्=अवश्य यत्न करना चाहिये, सर्वथा=सर्व प्रकार से नाशनीयस्य=निवृत्त करने योग्य तस्य=उस बन्ध का (अब) लक्षणम्=लक्षण उच्यते=(अग्रिमश्लोक से)कथन करते हैं।।५२।।

बन्धलक्षणमाह—" द्रष्टुः " इति।

द्रष्टुर्दृश्येन सम्बन्धो बन्ध इत्युदितो बुधैः ।
तत्र द्रष्टा तु चिन्मात्रो दृश्यं जडमिति स्थितम् ॥५३

द्रष्टुः=सर्वसाक्षिण आत्मनः दृश्येन=देहादिनाऽनात्मना सह सम्बन्धः=अहन्ताममतालक्षणं तादात्म्यं नाम यः सम्बन्धः बुधैः=वेदान्तशास्त्रपारगैः सः बन्धः इति=बन्धपदार्थः उदितः=कथितः । तत्र=तयोर्द्रष्टृदृश्ययोर्मध्ये यो द्रष्टा=स तु चिन्मात्रः=चिद्रूप एव । "तु" शब्देन चैतन्यगुणवदात्मवादिपक्षो व्युदस्तः। यत् दृश्यम्, तत् जडम्=अचित्स्वभावं स्वभिन्नेतरप्रकाशसापेक्षम् इति स्थितम्=इतीदं निश्चितमेव । दृशिस्वरूप आत्मा द्रष्टा, दृशिभास्योऽनात्मा दृश्यं, तयोर्यदिदमनाद्यनन्तं[1] नैसर्गिकं तादात्म्यं स बन्धपदार्थ इति भावः । उक्तञ्च कैवल्यरत्ने—

दृश्यं जगदिदं सर्वं शुक्तिकारजतादिवत् ।
अज्ञानेनैव कस्मिंश्चित्कल्पितं नैव तत्त्वतः ॥
कल्पितस्य समस्तस्य यदधिष्ठानमास्तिक ।
तत्कल्पितपदार्थेन भिन्नलक्षणमेव हि ॥

इत्यादि । तदनेनानादितादात्म्यरूपबन्धकथनेन पूर्वोक्ताऽविद्याकामकर्मादिरेव बन्ध उक्तो भवतीति पूर्वापरविरोधो न शङ्कनीयः । उक्तञ्च "विवेकचूडामणौ" आचार्यैः—

अविद्याकामकर्मादिपाशबन्धं विमोचितुम् ।
कः शक्नुयाद्विनात्मानं कल्पकोटिशतैरपि ॥५७॥ इति ॥५३॥

सं०—अब बन्ध का लक्षण कथन करते हैं—

---

१—अविद्यानिवृत्तिमन्तराऽनुच्छेद्यमित्यर्थः ।

पदार्थ—द्रष्टुः=सर्वसाक्षी आत्मा का दृश्येन=देहादि अनात्म पदार्थ के साथ जो सम्बन्धः=अहन्ता ममतालक्षण तादात्म्य सम्बन्ध है उसको बुधैः=वेदान्तशास्त्र के पारगामी विद्वानों ने बन्ध इति=बन्ध नाम से उदितः=कथन किया है। तत्र=उन दोनों ( द्रष्टा तथा दृश्य ) में से द्रष्टा=द्रष्टा तु=तो चिन्मात्र=केवल चेतनस्वरूप है चैतन्यधर्म वाला नहीं। और जो दृश्यम्=दृश्य अहङ्कारादि अनात्मपदार्थ है वह जडम्=जड है इति स्थितम्=यह निश्चित सिद्धान्त है।

"द्रष्टा" स्वप्रकाश चेतनस्वरूप और "दृश्य" स्वभिन्न-प्रकाश की अपेक्षा करने वाला, जड कहाता है।'

तात्पर्य यह है कि द्रष्टा और दृश्य का परस्पर अविद्याकल्पित उक्त तादात्म्य ही मुख्य "बन्ध" है। पीछे जो काम कर्मादि नाना प्रकार का बन्ध कहा सो एतन्मूलक ही जानना अतः पूर्वोत्तर का विरोध भी नहीं॥ ५३॥

सम्प्रति द्रष्टुरेव परमार्थसत्यत्वमाह—"येनेदम्" इति।

**येनेदं दृश्यते दृश्यं स द्रष्टात्मेति सम्मतः।**
**नाशानिरूपणान्नित्यो नित्यत्वात्सत्य एव सः॥५४॥**

येन=द्रष्ट्रा साक्षिणा स्वयम्प्रकाशस्वरूपेण इदम्=युष्मत्प्रत्ययगोचरः दृश्यम्=उक्तलक्षणमहङ्कारादि जडभूतं प्रपञ्चमात्रम्,

दृश्यते=प्रकाश्यते सः द्रष्टा=स एव साक्षी आत्मा इति=आत्मपदार्थ इत्येवंरूपेण सम्मतः=श्रुतिस्मृतिभ्यां विद्वदनुभवेन च निश्चितः। स द्रष्टाऽऽत्मा नाशाऽनिरूपणात्=नाशस्य ध्वंसस्याऽनिरूपणात् केनापि प्रमाणेन निरूपयितुमशक्यत्वात्, नित्यः=त्रैकालाबाध्यस्वरूपः त्रिविधपरिच्छेदरहितोऽनन्त इति यावत् नित्यत्वात्=अन्तशून्यत्वादेव हेतोः, सः सत्यः एव=स एवैकोऽद्वितीयः सत्यः कूटस्थः न त्वेवमनात्मपदार्थः शुक्तिरजतादिवत्कल्पितत्वादिति भावः।

अत्रायमाशयः—"तस्य भासा सर्वमिदं विभाति" ( कठो० ५। १५;श्वे० ६। १४; मुं० २। २। १० ) नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" (बृ०४। ३। २३) "अत्रायं पुरुषः स्वयञ्ज्योतिः" (बृ० ४। ३। ९,१४) "येन सूर्यस्तपति तेजसेद्धः" इत्यादिश्रुतेः,

ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते" ( भ० गी० १३।१७ )
यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्॥ (भ० गी० १५।१२ )

इत्यादिस्मृतेश्च आत्मनो द्रष्टृत्वं निराबाधम्। एवम्भूतश्चात्मपदार्थो नित्यस्तस्य नाशाऽनिरूपणात्।

आत्मनो नाशवादी प्रष्टव्यः किमस्य नाशः ससाक्षिको निःसाक्षिको वा? आद्ये कोऽस्य साक्षी आत्मा अनात्मा वा? नाद्यः स्वनाशस्य स्वेनाऽनुभवितुमशक्यत्वात् अनुभवितुरेवात्मत्वात्। न द्वितीयः तस्य जडत्वात्साक्षित्वाऽनुपपत्तेः। न च प्रथमेऽपि द्वितीयः निःसाक्षिकनाशस्य वाङ्मात्रत्वात्। तस्माद् द्रष्टैवात्मा, सचाऽविनाशीति युक्तमुक्तं "नाशाऽनिरूपणान्नित्यः" इति।

उक्तञ्च भगवता—

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्।
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति॥ (भ० गी० २।१७)

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥इति(भ०गी०२।२३)

सूपपादितश्चायमर्थो भाष्यकारैः—"नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः" (ब्र० सू० २।३।१७) इत्यत्र ।

विद्वदनुभवश्च—

[1]न वर्णा न वर्णाश्रमाचारधर्मा
न मे धारणाध्यानयोगादयोऽपि ।
अनात्माश्रयाहंममाध्यासहानात्-
तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ (दशश्लोकी २)

इत्यादिरूपो बहु प्रपञ्चितो ग्रन्थान्तरेषु स ततस्ततः कणेहत्य द्रष्टव्य इति नेह विस्तरतां नीतोऽस्माभिः ॥५४॥

सं०—अब द्रष्टा की परमार्थसत्यता का प्रतिपादन करते हैं—

---

१ "वर्णा ब्राह्मणादयः । आश्रमाः ब्रह्मचर्यादयः । आचाराः स्नानशौचादयः । धर्माः ब्रह्मचर्यगुरुसेवादयः । अत्र द्वन्द्वद्वय-गर्भषष्ठीतत्पुरुषेण वर्णानामाचारधर्मा आश्रमाणामप्याचारधर्माश्च लभ्यन्ते ( आश्रमाणामपीत्यपिशब्दादाश्रमा अपि लभ्यन्ते इत्यर्थ इत्यत्रैव न्यायरत्नावलीकाराः ) धारणा ब्रह्मणि बाह्यविषयत्यागेन मनसः स्थैर्यम् । ध्यानं परमात्मचिन्तनम् । योगश्चित्तवृत्तिनिरोधः । आदिशब्देन श्रवणमननादयो गृह्यन्ते । सर्वेषां ज्ञानोत्तरकालेऽसत्त्वे हेतुमाह—अनात्माश्रयाहंममाध्यासहानादिति । अनात्मा आत्मविरोधिनी अविद्या तदाश्रयस्तदुपादानो योऽहङ्काराध्यासस्तस्य मूलस्यापि तत्त्वज्ञानेन हानात् तत्प्रयुक्तवर्णाश्रमादिव्यवहारो नास्तीत्यर्थः ।" ( सिद्धान्तबिन्दुः )

पदार्थ—येन=जिस सर्वसाक्षी द्वारा इदं दृश्यम्=यह सब अहङ्कारादि दृश्यवर्ग दृश्यते=भासता है सः द्रष्टा=वह सर्वप्रकाशक आत्मा इति=आत्म पदार्थ सम्मतः=श्रुति, स्मृति तथा विद्वदनुभव से निश्चित है। और उस आत्मा का नाशानिरूपणात्=किसी प्रकार भी नाश न बन सकने से वह नित्यः=नित्य है, नित्यत्वात्=नित्य होने से ही सः=वह सत्यः एव=त्रैकालाबाध्य परमार्थ सत्य ही है ॥५४॥

द्रष्टुः स्वरूपमभिधाय, दृश्यस्वरूपमभिदधत् मोक्षाऽन्यथाऽनुपपत्त्यापि सिंहावलोकनन्यायेन पुनस्तस्य मिथ्यात्वमेव द्रढयति —"यदिदम्" इति—

**यदिदं दृश्यते द्रष्ट्रा तद् दृश्यं स्यादनात्मकम् ।**
**तच्च मिथ्याऽन्यथा त्वेवमनिर्मोक्षः प्रसज्ज्यते ॥५५॥**

यत् इदम्=पुरोवर्त्तित्वेनानुभूयमानमहङ्कारादिकं, द्रष्ट्रा=चिद्रूपेणात्मना दृश्यते=प्रकाश्यते, तत्= तत् सर्वम् दृश्यम्=दृश्यपदेन व्यपदेश्यम् अनात्मकं=आत्मभिन्नं (च) स्यात्=भवतीत्यर्थः। तत् च=सोऽयं दृश्यपदार्थः, मिथ्या=प्रतीतिसमकालो बाध्यो रज्जुसर्पादिवद् भ्रमसिद्ध एवेत्यर्थः। आत्मनः सत्यत्वात्। तद्विरुद्धस्वभावस्यानात्मनो मिथ्यात्वमर्थसिद्धमेवेति भावः। विपक्षे दण्डमाह—अन्यथा इति। अन्यथा तु=यदि अनात्मापि परमार्थसत्यः स्यात् एवम्=तर्ह्येवमनादिनित्यभावस्य आत्मवदबाध्यत्वात् अनिर्मोक्षः=मोक्षाभावः प्रसज्यते=प्रसक्तो भवति।

आत्माऽनादिरनन्तस्त्रैकालाबाध्यः, अनात्माऽपि चेदनादि-

१ प्रकृतोपयोगी श्रुति आदि के लिये पीछे संस्कृत टीका देखें।

रनन्तस्त्रैकालाबाध्यः, अथ तयोर्द्वयोः सम्बन्धश्च बन्ध इत्येवं सति सत्यस्य ज्ञानाऽनिवर्त्यत्वाद् बन्धाऽनिवृत्तौ मोक्षस्याभावः, तत्प्रतिपादकशास्त्रस्याप्रामाण्यम्, प्रत्यात्मवेदनीयाया दुःखात्यन्तजिहासाया अपलापश्चेत्यादिष्वनेकेष्वनिवार्येषु दोषेषु प्राप्तेषु बन्धसत्यत्वपक्षेऽनुपपद्यमानो मोक्षोऽनात्मभूतस्य बन्धस्य मिथ्यात्वं कल्पयतीति समञ्जसमिदमौपनिषदं दर्शनम् ॥५५॥

सं०—द्रष्टा के स्वरूप को कथन करके दृश्य का स्वरूप कथन करते हुए मोक्षाऽनुपपत्तिद्वारा पुनः सिंहावलोकन न्याय से उस की अनात्मता तथा मिथ्यात्व को दृढ करते हैं—

पदार्थ—यत् इदम्=जो यह अनुभूयमान अहंकारादिक द्रष्ट्रा=द्रष्टा के द्वारा दृश्यते=भासमान होता है, तत्=वह सब दृश्यम्=दृश्यपदवाच्य ( च ) और अनात्मकं=अनात्मा ही स्यात्=है, तत् च=और वह दृश्य पदार्थ मिथ्या=मिथ्या अर्थात् रज्जुसर्पादिवत् भ्रमसिद्ध है, अन्यथा तु=यदि ऐसा न माना जाय तो एवम्=इस प्रकार अनिर्मोक्षः=मोक्षाभाव की प्रसज्यते=आपत्ति होगी।

भाव यह है कि—आत्मा अनादि अनन्त, त्रैकालाबाध्य है, यदि आत्मवत् अनात्मा को भी अनादि अनन्त त्रैकालाबाध्य माना जाय तो उन दोनों का सम्बन्धरूप बन्ध भी वैसा ही मानना पड़ेगा। इस प्रकार ज्ञानद्वारा सत्यबन्ध की निवृत्ति नहीं होगी, और उस के न बन

सकने से मोक्ष की कदापि सिद्धि नहीं होगी, एवं—मोक्ष को स्वीकार न करने पर मोक्षप्रतिपादक श्रुति स्मृति शास्त्र में अप्रामाण्य की आपत्ति, तथा प्रत्येक मनुष्य की अनुभव-सिद्ध दुःखात्यन्तनिवृत्ति की इच्छा का अपलाप इत्यादि अनेक अनिवार्य दोषों के कारण बन्ध के सत्यपक्ष में अनुपपन्न होता हुआ मोक्ष दृश्य(अनात्मपदार्थ) के मिथ्यात्व की कल्पना कराता है, यही पक्ष तर्कप्रमाणबलसम्पन्न होने से समीचीन जानना चाहिये ॥५५॥

ननु कथं दृश्यसत्यत्वेऽनिर्मोक्षप्रसङ्ग इत्याशङ्कायामुक्तमेवार्थं विशदीकुर्वन्नाह "सतः" इति—

सतः सत्येन सम्बन्धः सत्य एव भवेद्यतः।
ततस्तस्याऽनिवर्त्यत्वान्मोक्षो नैवोपपद्यते॥५६॥

यतः=यस्मात् कारणात् सतः=सत्यस्य पदार्थस्य, सत्येन=बाधशून्येन पदार्थेन सह, सम्बन्धः=संयोगादिः, सत्यः एव भवेत्=नूनं सत्यो भवतीत्यर्थः। यथा—नैयायिकानां मते ईश्वरीयज्ञानेच्छाकृतीनामीश्वरेण सह नित्यः समवायाख्यः सम्बन्धस्तयोर्द्वयोर्द्रव्यगुणयोः सतोः तस्य ज्ञानेनाऽनिवर्त्यत्वञ्च, यथा वा अजसंयोगवादिनां मीमांसकानां नये कालाकाशादीनामपीति बोध्यम्। भवत्वेवं प्रकृते किमायातमित्याह—"ततः"इति। ततः=तस्मात्कारणात्, तस्य=द्वयोः सतोः सत्यस्य सम्बन्धस्य अनिवर्त्यत्वात्=ज्ञानेन निवर्तयितुमशक्यत्वात् आत्मवत्तस्याप्यबाध्यत्वात् मोक्षः=मुक्तिः नैव उपपद्यते=नैवोपपत्तुमर्हति। सत्यस्याहमादिप्रपञ्चस्य

सत्येनात्मना सह तादात्म्यादिसम्बन्धरूपबन्धस्यापि सत्यत्वे मोक्षानुपपत्तिर्महद्दूषणं विशेषतो वेदमहारण्यस्वातन्त्र्यस्वाराज्यभाजां ब्रह्मवित्केसरिणामित्यतस्तस्य मिथ्यात्वमवश्यमास्थेयमिति भावः।

अयमभिसन्धि—सर्वेषामपि वादिनां नये आत्मा अनात्मा चेति पदार्थद्वयमवश्यमन्तव्यं भवति, तयोः सम्बन्धश्चाप्यवर्जनीय एवेति नात्र बहु वक्तव्यमिव। आत्मनो द्रष्टृत्वमनात्मनश्च दृश्यत्वमिति पर्यन्तमुद्रया सर्वैरवश्यस्वीकार्यमित्यपि व्यवातिष्ठिपाम। तत्रेदं विचारयामः—कीदृशोऽयं दृग्दृश्ययोः सम्बन्धः? करणसम्बन्धाद्विषयसम्बन्धो दृग्दृश्यसम्बन्ध इति चेत्? हन्त! ईश्वरम्प्रति कोऽपि विषयो न भायात्। अकरणजन्येऽपि तज्ज्ञाने विषयाणां स्फुरणं चेत्? दृशिविषयस्फुरणमात्रमेव बन्ध इतीश्वरेऽपि बन्धप्रसङ्गः। ईश्वरे तादृशसम्बन्धानङ्गीकारे च तस्य नियन्तृत्वानुपपत्तिः, मायिके च तस्मिन्नद्वैतनगरप्रवेशः। अथ—जन्यज्ञानावच्छेदेनायं नियमः तदा युक्तावस्थायां योगिनामात्ममनोयोगमात्रादेवातीतानागताशेषबाह्यार्थज्ञानसत्त्वात् अतीतादीनां विषयाणाञ्चाऽविद्यमानत्वेन सम्बन्धानर्हत्वेऽपि विषयस्फुरणस्यापरिहार्यत्वात्तत्राऽव्याप्तिः प्रस्फुटैव।

नन्वत्रापि तेषां मनोयोग इति तस्येन्द्रियत्वात् तद्द्वारैव बहिरर्थसम्बन्धो विषयस्फुरणसम्बन्ध इति चेत्—न, "परतन्त्रं बहिर्मनः" इति सर्वतन्त्रानुभवविरोधात्। अस्मदादीनाञ्चैन्द्रियिक-

---

१—नयनप्रसादिनीसमुन्नीतचित्सुखाचार्यसिद्धान्तानुसारेण वाचस्पतिमिश्रीयन्यायकाणिकाव्याख्यारीत्या संगृह्य दृग्दृश्ययोः सम्बन्धाऽनुपपत्तिं बन्धस्य मिथ्यात्वसिद्धये ग्रन्थकाराशयेन समुद्घाटयति—'अयमभिसन्धिः' इति।

२—यदि विशिष्टादृष्टसचिवं योगिमन इति तादृशयोगिमनोजन्यज्ञानं

विभ्रमेषु इन्द्रियासम्बद्धानामेव विषयाणां स्फुरणाङ्गीकारात् । अस्मदादिप्रमाणजन्यज्ञानेष्वपि "सोयं सोमदत्तः" इति तत्तांशस्य[1] करणासम्बद्धस्यापि प्रत्यक्षत्वाभ्युपगमात् । न च देवदत्तस्य चक्षुषा सम्प्रयुक्तत्वात् तत्तायास्तद्विशेषणतया सम्प्रयुक्त-विशेषणताप्रत्यासत्त्या भूतलविशेषणघटाभाव इवेन्द्रियेण ग्रह-णात्कथं तस्य करणासम्बद्धत्वमिति वाच्यम्, समवायेतरभाव-स्येन्द्रियसम्प्रयोगमन्तरेणापि प्रत्यक्षतायाम्—"अयं पर्वतोऽग्नि-मान्" इत्यत्राग्निमत्त्वस्यापि संयुक्तविशेणतया प्रत्यक्षत्वापत्तेः प्रत्यक्षधर्मिकाऽनुमानमात्रोच्छेदप्रसङ्गात् ।

अथ दृग्दृश्ययोर्विषयविषयिभावः सम्बन्धो बन्ध इति ? तत्र पृच्छ्यते—किन्तावद् विषयत्वं विषयित्वञ्चेति ? ज्ञानजन्य-फलाधारत्वं विषयत्वं विषयनिष्ठफलजनकत्वं विषयित्वमिति तु न मृष्यामहे—विकल्पासहत्वात् । किं ज्ञानजन्यं फलं ज्ञातता ? व्यवहारो वा ? न तावदाद्यः[2]—अतीतादिविषयेषु अविद्यमानतया ज्ञानजन्यफलाधारत्वानुपपत्तेराविषयत्वप्रसङ्गात् ।

किञ्च—ज्ञानं विषय एव फलं जनयति नान्यत्रेति किं नियामकम् ? सम्बन्ध इति चेत्तस्याऽद्याप्यनिरूपणान्नियामक-त्वानुपपत्तेः, नियामकाभावे तु ज्ञानस्य नियतकार्यायोगः । यदाहुः—

---

विहायाऽयं नियम इष्यते विभ्रमेऽव्याप्तिरित्याह—"अस्मदादीनाम्" इति । यद्यपि विभ्रमेष्वधिष्ठानस्येन्द्रियसम्बन्धस्तथाप्यारोप्यतत्संसर्गयोस्तु तदभाव एवेति भावः । संस्कारद्वारा प्रत्यासत्त्यङ्गीकारेऽन्यत्राप्यतिप्रसङ्ग इति तु न विस्मरणीयम् ।

१—तद्देशकालविशिष्टांशस्येत्यर्थः ।

२—फलजननसमयेऽतीतादेरविद्यमानत्वादेव फलाधारत्वाऽनुपपत्तेः, अत एव तज्जनकत्वं ज्ञानस्य न सम्भवति,एवं तत्राऽव्याप्तिर्लक्षणस्येति भावः ।

१भवेत्सर्वत्र सत्ता चाऽनियमेऽन्यानपेक्षया ।
नियामकाद्धि भावानां क्काचित्कत्वस्य सम्भवः ॥ इति

यदि ज्ञानजन्यफलाधारतायां विषयस्य यत्किञ्चिन्नियामकं स्वभावो वाऽन्यद्वाऽऽस्थीयेत तर्हि तस्यैव विषयत्वनियामकता भवतु कृतं तर्हि तज्जन्यफलाधारतया । उक्तञ्च "कुसुमाञ्जलौ" आचार्यैः—

२स्वभावनियमाभावादुपकारोऽपि दुर्घटः ।
सुघटत्वेऽपि सत्यर्थेऽसति का गतिरन्यथा ॥

इति, तस्माज्ज्ञानजन्यं फलं ज्ञाततेति रिक्तं वचः । ज्ञानजन्य-

---

१—अस्यायमाशयः—**अन्यानपेक्षया**=स्वभिन्नहेत्वपेक्षाशून्यत्वेन **अनियमे**=नियमाभावे सति अर्थात् यदि फलफलिनोः परस्परं नियम्य-नियामकभावो नाऽभ्युपगम्येत तदा **सर्वत्र** देशे काले च **सत्ता**=फलसद्भावः स्यात्, परं नत्वेवं दृश्यते **हि**=यतः **भावानाम्**=फलत्वेनाभिमतानां पदार्थानां **नियामकाद्** एव हेतोः **क्काचित्कत्वस्य**=नियताऽधिकरणावच्छेदेन विद्यमानतायाः **सम्भवः** इतरथा सर्वं सर्वत्र सर्वदा सम्भवेत् ।

२—**न्यायकुसुमाञ्जलौ** चतुर्थे स्तवके "ईश्वरः प्रमाणं न वा" इति तुरीयविप्रतिपत्तिविचारे प्रस्तुते ( जैनेन सह नैयायिकशास्त्रार्थे ) अगृहीत-ग्राहित्वरूपप्रमालक्षणखण्डनावसरे भट्टेन सह प्रसङ्गे प्राप्ते ज्ञाततानिरासार्थमिद-मुक्तं **स्वभावेति** । **स्वभावनियमाभावात्**=यदि ज्ञानस्य विषयप्रकाशन-स्वभावो नाङ्गीक्रियेत तदा ज्ञानेन विषयनिष्ठाया ज्ञाततायाः जननात्मक **उप-कारोऽपि दुर्घटः** स्यात् । अर्थात् स्वभावविशेष एव विषयतानियामकः । **अन्यथा** ज्ञाततायाः आधानेऽपि नियमानुपपत्तिरिति स्वभाव एव नियामकस्तत्रेति मन्तव्यम् । किञ्च **सत्यर्थे**=विद्यमाने ( वर्त्तमाने ) विषये **सुघटत्वेऽपि**= कदाचित् ज्ञातताया ज्ञानजननेऽपि **असति**=अविद्यमाने अतीतेऽनागते चाऽर्थे

फलं व्यवहार इति द्वितीयोऽपि पक्षो न क्षोदक्षमः। तत्र कीदृशो व्यवहारोऽभिमत आयुष्मता। [1]कराकर्षणादिव्यवहारः उत इच्छादिरूपः ?। न तावदाद्यः,कराकर्षणादिव्यवहारस्यात्मादावभावात् [2]कलधौतमलादीनामपि नान्तरीयकतया तज्ज्ञानप्रयुक्तदानादिव्यवहारभाक्त्वामिति तस्यापि तज्ज्ञानविषयत्वापत्तेः। न च द्वितीयः, [3]आत्मन एवेच्छाद्याधारतया तद्भिन्नस्याऽविषयत्वप्रसङ्गात्।

यदि ज्ञानप्रयुक्तहानादिज्ञानगोचरत्वं, तद्योग्यत्वं वा विषयत्वमित्याचक्षीथाः तदात्माश्रयप्रसङ्गः ज्ञानगोचरत्वस्यैव निरूप्यमाणत्वात्, [4]हानादिज्ञानानाञ्च हानादिज्ञानान्तरागोचरतया निर्विषयत्वप्रसङ्गात्।

हानादिज्ञानानामुत्तरोत्तरं हानादिज्ञानजनकत्वे तेषां विरामाभावाद्विषयान्तरसञ्चाराभावः सुषुप्त्यभावश्च प्रसज्येयाताम्।

---

का गतिः=कः प्रकारः स्यात्, कथं तत्र विषयता भवेत्। तस्मात् तत्र स्वभाव एव विषयतानियामक इत्यन्यथेत्यनेन सूचितम्।

(१) आदिना भक्षणादिव्यवहारो ग्राह्यः। तस्य च विभौ स्पर्शरहिते चात्मादावसम्भवादित्यव्याप्तिर्लक्षणस्य।

(२) अतिव्याप्तिमप्याह कलधौतेति—कलधौतं रजतम्। रजतमलस्यापि नान्तरीयकतया रजतज्ञानप्रयुक्तादानादिभाक्त्वमस्तीति तदपि रजतज्ञानविषयः स्यात्।

(३) इच्छाधार आत्मैवेति अनात्मवर्गे लक्षणमव्यापकमित्यर्थः। इच्छादिविषयत्वञ्च न सम्भवति तस्यैव निरूप्यमाणत्वादित्यपि बोध्यम्।

(४) हानादिज्ञानानां हानादिज्ञानान्तरजनकत्वमस्ति न वा। यदि नास्ति तदा तेषां निर्विषयत्वप्रसङ्गः। अस्ति चेदव्याप्तिरित्यर्थः।

व्यवहारयोग्यत्वं विषयत्वमिति चेत् ? तदा योग्यतायां पुनर्योग्यतान्तराऽभ्युपगमेऽनवस्था, तदनभ्युपगमे विषयत्वाभावः।

[1]यस्यां संविदि योऽर्थोऽवभासते स तद्विषय इति चेद्, अत्र पृच्छामः—"संविदि" इति सप्तम्या किमाधिकरणं विवक्ष्यते ? अथ विषयः? किं वा सम्बन्धिमात्रम् ? सतिसप्तमी वा ? इति विकल्पचतुष्टयम्। न तावदाद्यः—बाह्यानां घटादिद्रव्याणामान्तरगुणभूतायाः संविदोऽधिकरणताऽनुपपत्तेः । न द्वितीयः—[2]तस्यैव निरूप्यमाणत्वात् संविदो विषयत्वं घटादीनाञ्च विषयित्वमिति वैपरीत्यापत्तेश्च । न च तृतीयः—संविज्जनकतया तत्सम्बन्धिनो [3]नयनादृष्टादेरपि तद्विषयत्वप्रसङ्गात् । नापि चतुर्थः—भासमानताया अद्याप्यनिरूपणात् ।

[4]ज्ञानाकारार्पको हेतुर्विषयः इति चेत् ? तदा ज्ञानतदाका-

---

(१) शालिकनाथोक्तलक्षणमवतारयति—"यस्यास्" इति। उक्तञ्च तेन पञ्चिकाप्रकरणे—

अत्र ब्रूमो य एवार्थो यस्यां संविदि भासते ।
वेद्यः स एव नान्यद्धि वेद्याऽवेद्यस्य लक्षणम् ॥ इति ॥

तदेतद्दूषयाति—"अत्र पृच्छामः" इति ।

(२) विषयत्वस्यैवेत्यर्थः ।

(३) संविदीत्यस्य कोऽर्थः संवित्सम्बन्धीति। तथा च नयनाद्यपि, तयेति, घटज्ञानस्य नयनाद्यपि विषयः स्यात् । एवञ्चातिव्याप्तिरिति भावः ।

४—सौगताभिमतं लक्षणं दूषयितुमाह—ज्ञानाकारार्पक इति । तथाचोक्तं तैरेव—

भिन्नकालं कथं ग्राह्यमिति चेद् ग्राह्यतां विदुः ।
हेतुत्वमेव युक्तिज्ञा ज्ञानाकारार्पणक्षमम् ॥ इति ।

एतस्मिँश्च पक्षे नयनादिव्यावृत्तिः । तत् खण्डयति—'तदा' इत्यादिना ।

रयोर्भेदाभावेन सर्वेषामपि ज्ञानहेतूनां तदाकारसमर्पकतया विषयत्वप्रसङ्गोऽनिवार्यः। दृश्यमानतया ज्ञानाकारसमर्पकत्वं विषयत्वमित्यपि तुच्छम्, दृश्यमानताया एव विवेच्यमानत्वात्। ज्ञानकर्मकत्वं तत्त्वमिति तु न युक्तम्, अतीतादिज्ञानस्य ईश्वरीयज्ञानस्य च कर्मकारकाऽजन्यत्वेनाऽविषयत्वप्रसङ्गात्।

ननु—( सम्बन्धान्तरमन्तरेण ) अन्येन येन केनाऽपि सम्बन्धेन विना ज्ञानस्य यद्विशेषणं स विषयो विशेष्यश्च तेन विषयीति चेन्न मत्समवेतरूपज्ञानमित्यत्र व्यभिचारात्। मत्समवेतमित्यत्र हि समवायो ज्ञानं प्रति विशेषणं,नचाऽनयोः संयोगसमवायादिसम्बन्धान्तरमस्तीति व्यभिचारः।

इत्थं विषयविषयिभावस्य सम्बन्धस्याऽनिरूपणादन्तरेणाऽध्यस्ततां दृग्दृश्ययोरनुपपद्यमानः सम्बन्धः स्वस्य मिथ्यात्वं कल्पयतीति सर्वमनवद्यम्॥ ५६॥

सं०—ननु दृश्य को सत्य मानने से किस प्रकार अनिर्मोक्ष प्रसक्ति होती है ? इस शङ्का का निवारण करते हुए उक्त अर्थ को विशेषतः स्पष्ट करते हैं—

पदार्थ—यतः=जिस कारण से सतः=सत्य पदार्थ का सत्येन=सत्य पदार्थ के साथ सम्बन्धः=संयोग वा तादात्म्यादि सम्बन्ध सत्यः=सत्य एव=ही भवेत्=हो सक्ता है ततः=अतएव तस्य=उस–दोनों सत्य पदार्थों के सत्य सम्बन्ध–के अनिवर्त्यत्वात्=(ज्ञान द्वारा) अनिवर्त्त्य होने के कारण मोक्षः=मोक्ष न एव=कदापि नहीं उपपद्यते=बन सकता।

भाव यह कि—जैसे न्यायमत में ईश्वर के ज्ञान,इच्छा,

कृति आदि गुण नित्य हैं और उन दोनों का परस्पर समवाय सम्बन्ध भी नित्य है, किंवा—मीमांसक मत में कालाकाशादि नित्य द्रव्यों का अज संयोग भी नित्य है उनकी ज्ञान से निवृत्ति नहीं मानी गई, वैसे ही अनात्मा को सत्य मान कर उसका सत्य आत्मा के साथ सम्बन्धरूप बन्ध भी सत्य ही मानना होगा, फिर ज्ञान द्वारा उसकी निवृत्ति भी न हो सकेगी। ऐसी दशा में ज्ञान द्वारा मोक्ष प्रतिपादन करने वाले श्रुति-स्मृति वाक्यों में अप्रामाण्यापत्ति तथा मोक्ष की अनुपपत्ति आदि प्रबल दूषण बने रहेंगे, जिनका होना विशेषतः वेद-प्रामाण्यवादी आस्तिकों के लिये परम अनिष्ट है। इस लिये परमार्थ सत्य आत्मा में अनात्म सम्बन्ध रूप बन्ध को मिथ्या मानना ही समीचीन है ॥५६॥

ननु—सत्यस्यापि दृग्दृश्यसम्बन्धरूपस्य बन्धस्य शास्त्रदृष्टेनादृष्टेन(कर्मणा) निवृत्तिः स्यादित्याशङ्क्याह—'सदृदृश्येन' इति—

सद्दृश्येन सतो द्रष्टुः सम्बन्धं परिमार्जितुम्।
न किञ्चिद्विहितं कर्म परेषामुपलभ्यते ॥५७॥

सद्दृश्येन=सच्च तद् दृश्यं सद्दृश्यं तेन सदात्मकेन दृश्येन, सतः=सद्रूपस्य द्रष्टुः=आत्मनः सम्बन्धम्=तादात्म्यादिरूपं बन्धाख्यम्, परिमार्जितुम्=अपनेतुम् परेषाम्=कर्मठानां मीमांसकानां मत इति शेषः, विहितम्=वेदादिशास्त्रेण चोदितं चोदनालक्षणात्मकम्, किञ्चित्=किञ्चिदपि कर्म=नित्यनैमित्तिकादिकम् न उपलभ्यते=नैव दृश्यते शास्त्रेष्विति शेषः। नहि वेदादिशास्त्रेषु अमृतकामस्य

कृते किञ्चिदपि कर्म विहितं यथा स्वर्गकामस्याग्निहोत्रादिकम्, येन शास्त्रदृष्टेन कर्मणाऽदृष्टफलो मोक्षोऽभ्युपगम्येत, तथा सति सत्यस्यापि बन्धस्य कर्मणा निवृत्तिरापाद्येत। प्रत्युत "नास्त्यकृतः कृतेन" (मुं० १।२।१२) "नह्यध्रुवैः प्राप्यते हि ध्रुवं तत्" (क० १।२।१०) इत्यादिश्रुतिभिः—

लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयानघ।
ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम्॥ (भ० गी० ३। ३)

इत्यादिज्ञानकर्मनिष्ठाभेदप्रतिपादिनीभिः स्मृतिभिश्च स्पष्टं निषिध्यते कर्मणां मोक्षफलकत्वमतो ज्ञानबाध्यं दृश्यं सदित्याशामोदकायितमिति भावः॥ ५७॥

शङ्का—जैसे शास्त्रविहित प्रायश्चित्तादि कर्मों से ब्रह्महत्यादिरूप सत्य पापों की निवृत्ति हो जाती है वैसे ही शास्त्रीय कर्मों द्वारा सत्य बन्ध की निवृत्ति हो जायगी पुनः दृश्य को मिथ्या क्यों माना जाय ? मीमांसक की इस आशङ्का का समाधान करते हैं—(उत्तरः—)

पदार्थ—सद्दृश्येन=सत्यरूप दृश्य के साथ सतः=सत्य द्रष्टुः=आत्मा के सम्बन्धम्=सम्बन्धरूप बन्ध को परिमार्जितुम्=दूर करने के लिये परेषाम्=(कर्मद्वारा मोक्ष मानने वाले) वादियों (मीमांसकों) के मत में विहितम्=वेदादि शास्त्र से विधान किया गया किञ्चित्=कोई भी कर्म=नित्य नैमित्तिकादि कर्म न उपलभ्यते=उपलब्ध नहीं होता।

भाव यह है कि जैसे "अग्निहोत्रं जुहुयात् स्वर्गकामः" इस प्रकार स्वर्गकामना वाले के लिये अग्निहोत्रादि कर्मों

का विधान किया है वैसे "अमृतत्वकामोऽमुककर्म कुर्यात्" अमृतत्व की कामना वाला पुरुष अमुक कर्म करे इस प्रकार सामान्य वा विशेषरूप से किसी कर्म का विधान नहीं किया प्रत्युत "नास्त्यकृतः कृतेन" ( मुं० १।२।१२ ) इत्यादि अनेक श्रुतिवाक्यों के द्वारा तथा ज्ञान कर्म की भिन्न २ निष्ठा के प्रतिपादन करने वाले स्मृतिवाक्यों से स्पष्ट ही मोक्ष के प्रति कर्मों की साधनता का प्रतिषेध किया गया है, किञ्च—कर्मद्वारा मोक्ष मानने वाले के मत में स्वर्गादि की न्याईं मोक्ष में क्षयिष्णुतादि दोष अनिवार्य बने रहेंगे, जिस से श्रुति स्मृति का विरोध प्राप्त होता है। इस लिये दृश्य को सत्य मानना आशामोदकचर्वण के समान जानना चाहिये ॥ ५७ ॥

ननु—विरुद्धमिदमुच्यते यच्छास्त्रममृतकामाय कर्म न विदधाति, कर्मजन्यत्वे च मोक्षस्याऽनित्यत्वापत्तिश्चेति "अपाम सोममममृता अभूम" (ऋ० ६।४।११।८।६।४८।३) इत्यादिश्रुतौ कर्मणां मोक्षसाधनत्वश्रवणात् "अक्षय्यँ ह वै चातुर्मास्ययाजिनः सुकृतं भवति" ( शत० २।६।३।१ ) इति कर्मजन्यस्यापि फलस्याक्षय्यत्वश्रुतेश्चेतीमामाशङ्कां परिहरन्नाह—'सोमपाममृतत्वोक्तिः' इति—

**सोमपाममृतत्वोक्तिया चातुर्मास्ययाजिनः ।**
**अक्षय्यसुकृतोक्तिश्च चिरस्थेमपरा हि सा॥५८॥**

सोमपाम्=सोमपानकर्तृणाम्, या=प्रसिद्धा अमृतत्वोक्तिः=अमृ-

तभावप्राप्तिप्रतिपादकं श्रुतिवचनम्, (या) च चातुर्मास्ययाजिनः= चातुर्मास्यनामकयज्ञकर्त्तुः अक्षय्यसुकृतोक्तिः=अक्षय्यस्य क्षेतुमशक्यस्य। "क्षय्यजय्यौ शक्यार्थे" (६।१।८१) इति पाणिनिसूत्रेण "क्षय्य"मिति निपातनात्सिद्धम्। न क्षय्यमक्षय्यम्, अक्षय्यञ्च तत्सुकृतं पुण्यमित्यक्षय्यसुकृतं तस्य सुकृतजन्यफलस्येत्यर्थः उक्तिः कथनं श्रुतिरूपम्, सा हि=निश्चयेन सा चिरस्थेमपरा=चिरकालपर्यन्तस्थायित्वाभिप्रायवती वर्त्तत इति शेषः। न तयोः श्रुत्योः कर्मजन्यफलस्य नित्यत्वे मोक्षरूपत्वे वा तात्पर्यमिति भावः।

अत्रायमाशयः—ऋग्वेदीयशाकलसंहितायाः षष्ठेऽध्याये चतुर्थेऽष्टके एकादशे वर्गे अष्टमेऽष्टके षष्ठेऽनुवाकेऽष्टाचत्वारिंशे सूक्ते—

अपा॑म॒ सोम॑म॒मृता॑ अभू॒माग॑न्म॒ ज्योति॒रवि॑दाम दे॒वान्।
किं नू॒नम॒स्मान् कृ॑णव॒दरा॑तिः॒ किमु॑ धू॒र्तिर॑मृत॒ मर्त्य॑स्य॥

इति तृतीयो मन्त्रः। एतदमृतत्वश्रुत्यन्यथाऽनुपपत्त्या(स्वर्गस्य प्रक्षये सत्यमृतत्वासम्भवात्) स्वर्गस्याक्षयित्वं कल्पनीयम्। एवमेव शतपथश्रुतावपि चातुर्मास्ययाजिनामक्षय्यस्वर्गफलावाप्तिरुक्तेति कर्मणां मोक्षसाधनत्वं,तज्जन्यस्वर्गादेश्चाक्षय्यफलत्वमेव स्यादिति पूर्वपक्षः।

तत्रोक्तश्रुतिवाक्यं स्वर्गादेरनन्तफलताबोधनाय न प्रवृत्तं, नापि च देवानां त्रैकालाबाध्यत्वरूपोऽमरभावो विवक्षितः तेषां क्षयित्वादिप्रतिपादकश्रुत्यन्तरविरोधात्, "आभूतसम्प्लवं स्थानममृतत्वं हि भाष्यते"[2] इति स्मृतेश्च। तस्माच्चिरकालस्थायित्वेनामृतत्वो-

---

१—अस्यार्थो गौडपादाचार्यकृतोऽस्यैव ग्रन्थस्य ११९ पृष्ठे टिप्पण्यमस्माभिः पूर्वं समुद्धृतः।

२—विष्णु पु० २।५।९६॥

क्तिरिति कथमपि कर्मणां मोक्षसाधनत्वं न घटत इति सिद्धान्त-पक्षः। विशिष्टन्तु सविस्तरं पूर्वं प्रत्यपीपदाम ॥ ५८ ॥

सं०—ननु—"अपाम सोमममृता अभूम" इत्यादि वेदवाक्यों से सोमपानादि कर्म मोक्ष के साधन प्रतीत होते हैं और "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इत्यादि श्रुतिवाक्य कर्मजन्य फल को अक्षय्य कथन करते हैं इसलिये कर्मजन्य स्वर्गादिरूप मोक्ष को अनित्य कथन करना अथवा कर्मों को मोक्ष का साधन न मानना ठीक नहीं ? इस शङ्का का "सोमपाममृतत्वोक्तिः" इत्यादि ग्रन्थ से समाधान करते हैं—

पदार्थ—सोमपाम्=सोमपान करने वालों के विषय में या=जो अमृतत्वोक्तिः="अपाम" इत्यादि अमरभाव प्रतिपादन करने वाला श्रुतिवाक्य, (या)च=और जो चातुर्मास्ययाजिनः= चातुर्मास्य याग करने वालों के लिये अक्षय्यसुकृतोक्तिः= "अक्षय्यं ह वै" इत्यादि अक्षय फल प्रतिपादन करने वाला श्रुतिवाक्य है, हि=निश्चय करके सा=वह (दोनों) श्रुतियें चिरस्थेमपरा=बहुकाल पर्यन्त स्वर्गस्थिति के अभिप्रायवाली हैं, अतः उन श्रुतियों का मोक्ष में तात्पर्य नहीं ॥ ५८ ॥

सम्प्रत्युक्तेऽर्थे उपपत्तिं दर्शयति—"न कृतेन" इति।

**न कृतेनाऽकृतोऽस्तीति नाध्रुवैः प्राप्यते ध्रुवम्।**
**यद्यत्कर्मचितं तत्तत् क्षयीति कुप्यतेऽन्यथा ५९**

१—उक्ते श्रुती स्वर्गस्य चिरस्थायिताभिप्रायपरे नतु कर्मजन्यत्व-विशिष्टमोक्षस्वरूपप्रतिपादनपरे" इत्यस्मिन्नर्थे।

कृतेन=कर्मणा, अकृतः=नित्यो मोक्षः, न अस्ति इति=नैव भवतीत्यर्थः । अध्रुवैः=अनित्यैः कर्मभिः ध्रुवम्=नित्यमोक्षस्वरूपं ब्रह्म न=नैव प्राप्यते=प्राप्तुं शक्यते, नित्यस्य कर्माऽविषयत्वादिति भावः। श्रौतमर्थं निरूप्य तदनुकूलां व्याप्तिमपि दर्शयति—"यद्यद्" इति । यत् यत् कर्मचितं=वस्तु घटपटादिकं सस्यभक्ष्यादिकं तत् तत्= सर्वं क्षयि=विनाशि उत्पत्तिधर्मकं सर्वमनित्यम् इति=एतन्न्यायव दुक्तं श्रुतिद्वयं अन्यथा=सिद्धान्ताविरुद्धे कर्मणैवामृतत्वस्वीकाररूपे विपक्षे कुप्यते=असङ्गतार्थं भवति । कर्मणां मोक्षसाधनत्वे विपक्षे श्रुतिव्याकोपो महान् दण्डः स चास्तिकैरसह्य इति भावः ।

अत्रेदं विभावनीयम्—"[2]परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन" ( मुं० १।२।१२ ) इत्याथर्वणोपनिषदि— "[3]जानाम्यहꣳ शेवधिरित्यनित्यं न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत्"(कठ०१।२।१०)

---

१—मूलोद्धृतं श्रुतिद्वयमेतदर्थप्रतिपदिकानामपरासां श्रुतीनामप्युपलक्षणम् ।

२—कर्मचितान्=कर्मणा सम्पादितान् लोकान्=दक्षिणोत्तरमार्गगम्यान् कर्मफलभूतान् भोग्यपदार्थान् परीक्ष्य=शास्त्रानुमानाभ्यामनित्यत्वेन निश्चित्य ब्राह्मणः=ब्राह्मणादिरधिकारी पुरुषो निर्वेदम्=उक्तभोग्यपदार्थेभ्यो वैराग्यम् आयात्=कुर्यात् । कथमिति तत्प्रकारं दर्शयति—"नास्ति" इति कृतेन=कार्यभूतेन कर्मणा अकृतः=नित्यब्रह्मस्वरूपो मोक्षो नास्ति=नैव भवत्यतो जातवैराग्यः सन्—"तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्" ( मुं० १ । २ । १२ ) इत्यग्रिमेण श्रुतेरादेशः ।

३—शेवधिः=इष्टत्वगुणसाम्यात्कर्मफलरूपो निधिरिव निधिः अनित्यम्=अनित्यः इति=एवम् अहं जानामि हि=यस्मात् ध्रुवं= नित्यं मोक्षाख्यं फलम् अध्रुवैः=अनित्यैः साधनैः न प्राप्यते । अस्य मन्त्रस्यान्तेऽपि "नित्यम्" इति पदेन स्वर्गाख्यदेवलोकस्यापेक्षिकमेव नित्यत्वमुक्तम् ।

इत्यादिना कर्मफलानां स्पष्टमेव विनाशित्वं प्रतिपादितम्। सोमपानादिकर्त्तृणाञ्च तत्र तत्र श्रुत्याऽक्षय्यफलावाप्तिरप्युक्ता। तत्र परस्परविरुद्धार्थाभिधायिनीनां श्रुतीनामप्रामाण्यं वा स्याद् अन्यतराऽविरोधेन वा अन्यतरश्रुतेर्नीतार्थत्वं वा स्यादिति नैवास्ति तृतीयो मार्गः। एवं स्थिते निरस्तसमस्तदोषपङ्ककलङ्कस्य वेदस्याप्रामाण्यं कथमप्यास्तिकैर्नाङ्गीकर्तुं शक्यतेऽत एवंविधे स्थलेऽन्यतरश्रुतिवाक्यस्यान्यतराऽऽनुगुण्येन वाऽविरोध्यर्थकल्पनायां "यत्कृतकं तदनित्यम्" इति सामान्यतोदृष्टानुमानाऽनुगृहीततद्यथेहेत्यादिश्रुतिविरोधेनाक्षय्यमित्यादिश्रुतेः प्रलयपर्यन्तस्थायित्वाभिप्रायकल्पनमेव ज्याय इति श्रुतिद्वारापि मोक्षस्य कर्मसाध्यताप्रत्याशा स्वप्नमोदकसमैव कर्मठानामिति सङ्क्षेपः ॥५९॥

सं०—अब उक्त अर्थ में श्रौत उपपत्ति दर्शाते हैं—

पदार्थ—[ नास्त्यकृतः कृतेन ( मुं० १।२।१२ ) ] कृतेन=कर्म से अकृतः=नित्य मोक्ष न, अस्ति इति=नहीं होता है। [न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत् ( कठ० १।२।१० )] अध्रुवैः=अनित्य कर्मों द्वारा ध्रुवम्=नित्य मुक्तस्वरूप ब्रह्म, न प्राप्यते=कभी प्राप्त नहीं होता। यत् यत्=जो जो कर्मचितं=कर्मजन्य घटपटादिक अथवा शस्यभक्ष्यादिक पदार्थ है तत् तत्=वह वह ( सर्व ) ही क्षयि=विनाशि होता

१—अन्वयव्यतिरेक्यनुमानेनेत्यर्थः। अन्वयेन व्यतिरेकेण च व्याप्तिमदनुमानम् "अन्वयव्यतिरेकि"। यथा वह्नौ साध्ये धूमवत्त्वम्। एवमेव प्रकृतेऽपि "यद्यत्कृतकं तत्तदनित्यम्" इत्यन्वयव्याप्तिः यथा घटादौ। "यत्र अनित्यत्वं नास्ति तत्र कृतकत्वमपि नास्ति" इति व्यतिरेकव्याप्तिः यथाऽऽत्मनि परमतसिद्धाकाशादौ वा।

२—छां० ८।१।६॥

है इति=इस न्याय वाली दोनों ऊपर उद्धृत की हुई श्रुतियें[1] अन्यथा=विपक्ष में अर्थात् अस्मदुक्त सिद्धान्त न स्वीकार करने पर कुप्यते=कुपित हो जायेंगी अर्थात् कर्म द्वारा मोक्ष मानने से उक्त [2]न्यायविशिष्ट कोई भी श्रुतिवाक्य सङ्गतार्थ नहीं हो सकेगा। इस लिये कर्मों को मोक्ष का साक्षात् साधन कथन करना ठीक नहीं॥ ५९॥

कर्मजन्यस्य विनाशित्वे मोक्षस्य नित्यत्वे च किं फलितमित्याह—"कर्मसाध्यम्" इति—

**कर्मसाध्यं विनाशीति नित्यो मोक्षो यदीष्यते।**
**तदा दृश्यस्य मिथ्यात्वमनिच्छद्भिरपीष्यताम्॥६०॥**

यदि=चेत् कर्मसाध्यम्=कर्मजन्यं लोके सस्यादि परलोके स्वर्गादि विनाशि=नश्वरम्, मोक्षः=मोक्षश्च नित्यः=अबाध्यस्वरूप इति इष्यते=एवं रूपेण काम्यते अर्थात् कर्मणामनित्यफलकत्वं मोक्षस्य त्वनन्तत्वं स्वीक्रियते तदा अनिच्छद्भिः अपि=अकामयमानैः अनङ्गीकुर्वद्भिरपि वादिभिः दृश्यस्य=प्रपञ्चस्य मिथ्यात्वम्=[3]स्वाश्रयत्वेनाभिमतयावन्निष्ठात्यन्ताभावप्रतियोगित्वम् इष्यताम्=स्वीक्रियताम्। नहि ज्ञाननिवर्त्यस्य क्वापि सत्यत्वं दृष्टमिति भावः॥६०॥

१—यह दोनों श्रुतियां इसी प्रकार का अर्थ प्रतिपादन करने वाली अन्य सब श्रुतियों की उपलक्षक हैं।

२—"जन्यं विनाशि जन्यत्वात् घटादिवत्" इस अनुमानद्वारा जिस श्रुतिवाक्य का उपकार किया गया है ऐसा श्रुतिवाक्य।

३—मिथ्यात्वस्योक्तलक्षणपदकृत्यमवलोकनीयम् १५८ पृष्ठे।

शङ्का—ननु कर्मजन्य फल को अनित्य मान कर मोक्ष को नित्य मानने से प्रकृत में क्या तात्पर्य निकला ?

उत्तरः—

पदार्थ—यदि=यदि कर्मसाध्यम्=कर्मजन्य स्वर्गादि फल विनाशि=अनित्य है और मोक्षः=मोक्ष नित्यः=नित्य है इति इष्यते=ऐसा आप (मीमासकों)को इष्ट है तदा=तब अनिच्छद्भिः अपि=उक्त सिद्धान्त की कामना न करने पर भी दृश्यस्य= दृश्य प्रपञ्च का मिथ्यात्वम्=मिथ्यापन इष्यताम्=अवश्य ही मानना होगा।

अभिप्राय यह है कि जब कर्म नित्य मोक्ष के हेतु नहीं हो सकते, किसी सत्य पदार्थ की निवृत्ति ज्ञान से हो नहीं सकती और श्रुति भगवती साक्षात् ज्ञान को ही मोक्ष का साधन कथन करती है तब दृश्य प्रपञ्च के मिथ्या होने में कोई भी संशय नहीं ॥ ६० ॥

दृश्यस्य मिथ्यात्वानङ्गीकारे सर्वथैव मोक्षानुपपत्तिरित्य-भिसन्धायाह—"विना दृश्यस्य" इति—

**विना दृश्यस्य मिथ्यात्वं तत्सम्बन्धमपोहितुम्।**
**नैव कोऽपि समर्थः स्याज्ज्ञानेनापि च कर्मणा ॥६१॥**

दृश्यस्य=चिद्विषयत्वधर्मावच्छिन्नस्य प्रपञ्चस्य, मिथ्यात्वं विना=मिथ्यात्वानङ्गीकारे ज्ञानेन=ब्रह्मज्ञानेन अपि च=अथवा कर्मणा =वैदिकेन नित्यनैमित्तिकेनाग्निहोत्रादिकर्मणा साधनभूतेन तत्स-

म्बन्धम् = दृग्दृश्यसम्बन्धरूपं बन्धनम् अपोहितुम्=दूरीकर्त्तुम, कोऽपि = कश्चिदपि प्रेक्षावान् नैव समर्थः स्यात् = शक्तो न भवेदित्यर्थः ।

"ब्रह्मात्मसाक्षात्कारो बन्धनिवर्त्तकः" इति सुप्रसिद्धो वेदडिण्डिमः, बन्धश्च दृश्यसम्बन्ध एवेति प्रत्यपीपदाम, तच्च येषां माध्वादीनां मते ब्रह्मवत्सत्यं तेषां मते ज्ञानेन, कर्मणा तत्समुच्चयेन वा कथमपि बन्धनिवृत्तिर्न भवितुमर्हतीत्यकामेनापि ज्ञाननिवर्त्त्यस्य दृश्यस्य मिथ्यात्वमेवाङ्गीकार्यमिति भावः ॥६१॥

सं०—जो दृश्य प्रपञ्च को मिथ्या नहीं मानते उनके मत में मोक्ष की असिद्धि कथन करते हैं—

पदार्थ—दृश्यस्य=दृश्य प्रपञ्च को मिथ्यात्वं विना=मिथ्या मानने के विना अर्थात् यदि दृश्य को मिथ्या न माना जाय तब ज्ञानेन=ब्रह्मज्ञान से अपि च=अथवा कर्मणा=कर्म से किंवा ज्ञान कर्म दोनों के समुच्चय से तत्सम्बन्धम्=द्रष्टा और दृश्य के सम्बन्धरूप बन्ध को अपोहितुम्=दूर करने के लिये कोऽपि=कोई बुद्धिमान् नैव समर्थः स्यात्=समर्थ नहीं हो सकता ।

भाव यह कि–जिन माध्वादिकों के मत में दृश्यप्रपंच सत्य है उनके मत में बन्ध की ज्ञान द्वारा निवृत्ति न बन सकने के कारण किसी प्रकार से भी मोक्ष की सिद्धि नहीं हो सकती,इसलिये उनको भी वेद विरोध के परिहारार्थ दृश्य को मिथ्या स्वीकार करना ही समीचीन है ॥६१॥

ननु दृग्दृश्ययोः सत्ययोः सम्बन्ध एव मिथ्या भवतु, दृश्यस्यापि मिथ्यात्वे न किञ्चित् फलं पश्यामः इत्याशङ्कं प्रत्याचष्टे—"सम्बन्धः" इति—

**सम्बन्धः सत्ययो[1]र्मिथ्या न क्वापि दृश्यते यतः।**
**ततः सदसतोरेव सम्बन्धस्य मृषात्मता ॥६२॥**

यतः=यस्मात् कारणात् सत्ययोः=लोके सत्यत्वेनाभिमतयोर्द्वयोः कालाकाशयोर्यथा सम्बन्धः=संयोगादिः क्वाऽपि=कुत्रापि देशे काले वा मिथ्या=मृषा न दृश्यते=नैवावलोक्यते नहि मिथ्यात्वेन प्रमाणसम्प्रतिपन्न इत्यर्थः ततः=तस्मात्कारणात् सदसतोः एव=सत्यानृतयोरेव रज्जुसर्पयोः शुक्तिरजतयोरिव सम्बन्धस्य=तादात्म्यादेः मृषात्मता=मिथ्यात्वमस्तीति शेषः ॥६२॥

सं०—ननु–दृग् दृश्य दोनों को सत्य मान कर उन के सम्बन्ध को मिथ्या मान लेने से ज्ञान द्वारा मोक्ष की सिद्धि में कोई बाधा नहीं ऐसी आशङ्का करने वाले के प्रति उत्तर कथन करते हैं–

पदार्थ—यतः=जिस कारण से सत्ययोः=दोनों सत्य पदार्थों का सम्बन्धः=संयोगादिक सम्बन्ध क्वापि=किसी देश वा काल में मिथ्या=मिथ्या न=नहीं दृश्यते=देखा जाता, ततः=इस कारण से सदसतोः एव=सत् ( सत्य ) तथा असत ( अनृत, मिथ्या ) पदार्थ के ही सम्बन्धस्य=सम्बन्ध का मृषात्मता=मिथ्यापना सम्भव है।

---

१—अनयोः सत्यत्वं परमताभिप्रायणोक्तम्।

सार यह है–जिस प्रकार लोक में सत्यता से प्रसिद्ध समानसत्ता वाले दण्ड तथा पुरुष दोनों का संयोग सम्बन्ध भी सत्य है मिथ्या नहीं, इस प्रकार आत्मा अनात्मा दोनों के सत्य मानने से उनका परस्पर सम्बन्ध भी सत्य ही मानना होगा, परन्तु यह वार्त्ता श्रुत्यादि प्रमाणों से विरुद्ध होने के कारण त्याज्य है। अतः दृग्=आत्मा परमार्थ सत्य है और दृश्य=अनात्मा अनृत मिथ्या है, शुक्ति में कल्पित अनृत रजत के सम्बन्ध की भांति आत्मा में कल्पित दृश्य का सम्बन्ध भी अनृत होने से ज्ञान द्वारा बाध्य ही सिद्ध होता है जिससे सिद्धान्त में किसी प्रकार का विरोध नहीं। परन्तु दृश्य को सत्य मानने वाले वादिओं के मत में दर्शित प्रकार से मोक्षाऽनुपपत्तिरूप दोष ज्यों का त्यों बना रहता है (यह गूढ रहस्य है) ॥६२

कुत्र सदसतोः सम्बन्धस्यानृतत्वमित्यभिलाषिणं प्रति दृष्टान्तमाह—"यथा" इति—

**यथा सदसतोरेव सम्बन्धोऽम्बरवर्णयोः।**
**मृषा दृष्टस्तथैवास्तु सम्बन्धो द्रष्टृदृश्ययोः ॥६३॥**

यथा=येन प्रकारेण सदसतोः एव=सत्यानृतयोः एव, अम्बर-वर्णयोः=गगनतन्नीलयोः सम्बन्धः="नीलमाकाशम्" इत्याकारक-प्रतीतिवेद्यं तादात्म्यम्, मृषा=मिथ्यैव दृष्टः=प्रतीतः एवं सद-सतोरेव द्रष्टृदृश्ययोः=दृग्दृश्ययोः आत्माऽनात्मनोरिति यावत्

सम्बन्धः=गौरोऽहं कृशोऽहम्, अहं पश्यामि अहं स्पृशामि, अहं गच्छामि अहं लङ्घयामि अहं सुखी अहं दुःखीत्येवंविधो नानारूपस्तादात्म्याध्यासः तथा एव=तैनैव प्रकारेण मिथ्या एव अस्तु=भवतु । सम्भावनायां लोट् ।

अस्ति हि शब्दगुणकमाकाशं सदिति लोकव्यवहारः प्रतीतः परं रूपात्यन्ताभाववतस्तस्य नैल्यन्तु न कोऽपि प्रत्येति, भाति च तत्, तस्मादाकाशं सत्, तन्नैल्यन्त्वसत् । नीलमाकाशमिति प्रत्ययस्तु सार्वजनीनः । इत्थं तयोः सदसतोः सम्बन्धो नैव भाविकः, तद्वदेवात्मानात्मनोरप्यसौ मिथ्यैव सम्भावनीयः ॥६३

सं०—सत् असत् के मिथ्या सम्बन्ध में दृष्टान्त कथन करते हैं—

पदार्थ—यथा=जिस प्रकार सदसतोः एव=सत्य तथा असत्यरूप अम्बरवर्णयोः=आकाश और उस की नीलता का सम्बन्धः=तादात्म्य सम्बन्ध मृषा=मिथ्या ही दृष्टः=देखा गया है वैसे ही द्रष्टृदृश्ययोः=क्रम से सत्य और असत्यरूप द्रष्टा और दृश्य का सम्बन्धः=सम्बन्ध तथा एव=मिथ्या ही अस्तु=हो सकता है ( सत्य नहीं ) ।

भावार्थ यह है कि आकाश की नीलता की न्याईं सत्व आत्मा के साथ असत्=अनृत अनात्मा का सम्बन्ध भी मिथ्या है सत्य नहीं ॥६३॥

दृश्यसत्यत्ववादिनां मते मोक्षहेतुज्ञानवैयर्थ्यमाह "सत्यम्" इति—

(१) साङ्ख्यमाध्वादीनामित्यर्थः ।

**सत्यं दृश्यमभिप्रेत्य तत्सम्बन्धं जिहासताम् ।**
**कुतर्काकुलचित्तानां ज्ञानं व्यर्थमुपस्थितम् ॥ ६४ ॥**

दृश्यम्=अहङ्कराद्यनात्मवर्गं सत्यम्=आत्मवद्बाध्यसत्ताकम् अभिप्रेत्य=निश्चित्य तत्सम्बन्धम्=तस्यैव सत्यत्वेनाभिमतस्य दृश्यस्य सम्बन्धं बन्धरूपं तादात्म्यं जिहासताम्=हातुमिच्छताम् "हेयं दुःखमनागतम्" इत्युक्तेः, तथा–कुतर्काकुलचित्तानाम्=कुत्सितैः श्रुतिविमुखैस्तर्कैः अनुमानादियुक्तिभिः आकुलं विह्वलीभूतं चित्त-मन्तःकरणं येषामेवम्भूतानां भेदवादिनाम् उपस्थितम्="तमेव विदित्वाऽतिमृत्युमेति" (श्वे० ३ । ८; ६ । १५) इत्याद्यनेकश्रुति-प्रतिपादितम् ज्ञानम्=मुक्तिसाधनं ब्रह्मज्ञानं व्यर्थम्=वृथैवास्तीति शेषः, सत्यस्य ज्ञानाबाध्यत्वादिति भावः । अथवा—"ज्ञानं व्यर्थ-मुपस्थितम्" इत्येवर्जुयोजना ।

अत्रेदं रहस्यम्—

जीवेश्वरभिदा चैव जडेश्वरभिदा तथा ।
जीवभेदो मिथश्चैव जडजीवभिदा तथा ॥
मिथश्च जडभेदो यः प्रपञ्चो भेदपञ्चकः ।
सोऽयं सत्योप्यनादिश्च सादिश्चेन्नाशमाप्नुयात् ॥
न च नाशं प्रयात्येव न चासौ भ्रान्तिकल्पितः ।
कल्पितश्चेन्निवर्त्तेत न चासौ विनिवर्त्तते ॥
द्वैतं न विद्यत इति तस्मादज्ञानिनां मतम् ।
मतं हि ज्ञानिनामेतन्मितं त्रातं हि विष्णुना ॥
तस्मान्मात्रमिति प्रोक्तं परमो हरिरेव तु ॥

(१) सर्वदर्शनसङ्ग्रहे ।

इत्यादि माण्डूक्यकारिकाव्याख्यानपरमाध्वादिभेदवादिनये सत्यत्वेनाभिमतपञ्चविधभेदप्रपञ्चीयसम्बन्धं जिहासतां सर्वथैव ज्ञानवैयर्थ्यमिति भावः । पञ्चविधभेदप्रपञ्चखण्डनन्तु स्वावसरे करिष्यामः । एतेन—

धर्मार्थकामाः सर्वेऽपि न नित्या मोक्ष एव हि ।
नित्यस्तस्मात्तदर्थाय यतेत मतिमान्नरः ॥

इत्यादि माध्वोक्तमपि व्याख्यातम्, मोक्षस्य नित्यत्वेन परमपुरुषार्थत्वे इतरेषामनित्यत्वेन जिहासिततया शुक्तिरजतादिवन्मिथ्यात्वस्य साधितत्वात् ।

मुख्यश्च सर्ववेदानां तात्पर्यं श्रीपतौ परे ।
उत्कर्षे तु तदन्यत्र तात्पर्यं स्यादवान्तरम् ॥

इत्यादि महावराहीयं वचनमपि न सिद्धान्तविरोधि समन्वयाधिकरणीयसिद्धान्तेन सङ्गतार्थत्वादिति सङ्क्षेपः ॥६४

सं०—अब दृश्य को सत्य मानने वाले माध्वादिक भेदवादियों के मत में आत्मज्ञान की व्यर्थता कथन करते हैं—

पदार्थ—दृश्यम्=अहङ्कारादि अनात्म पदार्थमात्र को सत्यम्=सत्यरूप अभिप्रेत्य=मानकर तत्सम्बन्धम्=उसके सम्बन्ध को जिहासताम्=त्यागने की इच्छावाले कुतर्काकुलचित्तानाम्=भेद की सिद्धि के वास्ते वेदविरोधि कुत्सित तर्कों से व्याकुल ( विक्षिप्त) हो गया है चित्त जिनका ऐसे माध्वादिकों के मत में ज्ञानम्=आत्मज्ञान व्यर्थम्=व्यर्थ ही उपस्थितम्=

सिद्ध होता है ( क्योंकि सत्य पदार्थ की ज्ञान से निवृत्ति में कोई दृष्टान्त उपलब्ध नहीं होता ) ॥ ६४ ॥

ननु मोक्षस्य नित्यप्राप्तत्वाद्भवन्मतेऽपि ज्ञानं व्यर्थमेवेत्याशङ्कायां स्वमते ज्ञानमार्थक्यं दर्शयति—"अज्ञानपिहितः" इति—

**अज्ञानपिहितो मोक्षो भ्रान्त्या बन्धतया यतः।**
**भाति, तस्मान्न शङ्क्यं नो ज्ञानानर्थक्यमण्वपि॥६५॥**

यतः=यस्माद्धेतोः मोक्षः=नित्यमुक्तस्वभावो ब्रह्मात्मैव मोक्षः अज्ञानपिहितः=असत्त्वापादकाभानापादकद्विविधशक्तिमदनादिनाऽज्ञानेन पिहितः आच्छादितः सन्निति शेषः "अनृतेन हि प्रत्यूढाः" (छां० ८।३।२) इति श्रुतेः "अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः" (भ० गी० ५।१५) इति स्मृतेश्च भ्रान्त्या=अतस्मिंस्तद्बुद्धिरूपेण भ्रमेणैव बन्धतया=बन्धभावेन भाति=गन्धर्वनगरमरुमरीचिकोदकवदवभासते तस्मात्=हेतोः नः=अस्माकं मत इति शेषः अणु,अपि=किञ्चिदपि ज्ञानानर्थक्यम्=ज्ञानस्यानर्थक्यं ज्ञानानर्थक्यमात्मज्ञानस्य व्यर्थत्वं न शङ्क्यम्=नैव शङ्कनीयम्। चरमब्रह्मसाक्षात्कारवृत्तेरावरणभङ्ग एवास्मन्मते प्रयोजनमिति नित्यमोक्षवादिनामस्माकं मात्रयाऽपि ज्ञानवैयर्थ्यं नास्ति, मिथ्याभूतस्य ज्ञाननिवर्त्यत्वादिति भावः॥ ६५ ॥

सं०—ननु अद्वैतवादी के मत में भी मोक्ष के नित्य सिद्ध होने से ज्ञान की व्यर्थता समान है; ऐसा आक्षेप होने पर समाधान करते हैं—

पदार्थ—यतः=जिस कारण से मोक्षः=नित्यमुक्त

ब्रह्मात्मस्वरूप मोक्ष अज्ञानपिहितः=अज्ञान करके आच्छादित हुआ भ्रान्त्या=भ्रान्ति से ही बन्धतया=बन्धरूप भाति=भासता है तस्मात्=इस हेतु से नः=हम अद्वैतवादीयों के मत में अणु अपि=किंचिन्मात्र भी ज्ञानानर्थक्यम्=ज्ञान की व्यर्थता न शङ्क्यम्=शङ्कित करने योग्य नहीं।

भाव यह है कि हमारे मत में चरमब्रह्मसाक्षात्कार रूप ज्ञान का आवरणभङ्गमात्र ही प्रयोजन है अतः ज्ञान व्यर्थ नहीं हो सकता ॥६५॥

अन्यमतसिद्धबन्धनिवृत्तिरपि सिद्धान्ताभिमतबन्धनिवृत्त्या चरितार्थेत्याह—"एकविंशतिदुखादिः" इति—

एकविंशतिदुःखादिर्बन्धोऽप्यन्यैरुदीरितः।
स सर्वोऽपि च दृग्दृश्यसम्बन्धं नातिवर्त्तते ॥६६॥

अपि च=किञ्च—एकविंशतिदुःखादिः=एकविंशतिदुःखादिस्वरूपः बन्धः=यो बन्धः अन्यैः=नैयायिकप्रभृतिभिः उदीरितः=कथितः सः सर्वः=सर्वप्रकारः अपि दृग्दृश्यसम्बन्धम्=आत्माऽनात्मनोः सम्बन्धात्मकं बन्धम्, न=नैव अतिवर्त्तते=उल्लङ्घ्य वर्त्तते। दृग्दृश्यसम्बन्धात्मकबन्धान्तःपात्येव पराभिमतोऽपि बन्धोऽतस्तन्निवृत्त्यै न पृथग्यत्न आस्थेय इति भावः।

अयमाशयः—शरीरम्, षडिन्द्रियाणि, षड्बुद्धयः, षड्विषयाः सुखं दुःखञ्चेत्येकविंशतिदुःखानि बन्ध इति नैयायिकाः। नरकदुःखमेव बन्ध इति मीमांसकाः। प्रकृतिपुरुषसंयोगहेतुका अविद्यादिपञ्चक्लेशा बन्ध इति पातञ्जलाः। तथैव आध्यात्मिकादिदुःखत्रैविध्यं बन्ध इति साङ्ख्याः। एवं तैस्तैस्तीर्थकरैस्तथा तथा

प्रतिपन्नः सर्वोऽपि बन्धपदार्थः दृग्दृश्यसम्बन्धस्वरूपाविनाभावित्वात् स्वानिवर्त्तकं किमपि साधनान्तरं नापेक्षते व्यापकनिवृत्तौ व्याप्यनिवृत्तेरवश्यम्भावाद्-अविद्यानिवृत्तौ पराभिमतबन्धोऽपि न तिष्ठतीति सिद्धान्त्यभिमतबन्धानिवृत्त्यैव पराभिमतबन्धनिवृत्तिरपि जायत इति न किञ्चिद्धातव्यमवशिष्यते ॥६६॥

शङ्का ननु—सिद्धान्ती के अभिमत बन्ध की निवृत्ति होने पर भी अन्य वादियों के माने हुए बन्ध की निवृत्ति कैसे होगी ? समाधानः—

पदार्थ—अपि च=किञ्च (जो) एकविंशतिदुःखादिः—शरीर, ६ इन्द्रिय, ६ बुद्धिएं ६ विषय सुख और दुःख सब मिल कर २१ प्रकार का बन्ध नैयायिकों ने माना है, एवं मीमांसकों के मत में नरक दुःख ही बन्ध है, पातञ्जल मत में प्रकृतिपुरुष के संयोग से होने वाले अविद्यादि पांच प्रकार के क्लेश ही बन्ध हैं, साङ्ख्य मत में आध्यात्मिकादि त्रिविध दुःख बन्ध पदार्थ है इस रीति से अन्यैः=वेदान्ती से भिन्न उन २ तीर्थकरों ने जो भी बन्ध=बन्ध पदार्थ उदीरितः=कथन किया है सः सर्वः अपि=वह सभी प्रकार का बन्ध दृग्दृश्यसम्बन्धम्=द्रष्टा दृश्य के सम्बन्धरूप बन्ध के स्वरूप मे न अतिवर्त्तते=पृथक् नहीं है ।

अर्थात् अविद्या निवृत्ति के होते ही दृग्दृश्यसम्बन्धरूप बन्ध के निवृत्त होने पर शेष किसी प्रकार के बन्ध का स्वरूप

नहीं रहता क्योंकि दृग्दृश्यसम्बन्धरूप बन्ध व्यापक है अन्य सब बन्ध इसके अन्तः पाती होने से व्याप्य हैं, व्यापक की निवृत्ति होने पर व्याप्य भी अवश्य निवृत्त हो जाता है जैसे वाह्नि की निवृत्ति से धूम की निवृत्ति स्पष्टसिद्ध है इस लिये दृग्दृश्यसम्बन्धरूप बन्ध की निवृत्ति के लिये सयत्न होना चाहिये यह गूढ अभिप्राय है ॥६६॥

उक्तस्य फलितार्थं वदन् प्रकारान्तरेण दृश्यमिथ्यात्वं प्रतिजानीते—"अनिर्मोक्षप्रसङ्गोक्त्या" इति ।

**अनिर्मोक्षप्रसङ्गोक्त्या दृश्यमिथ्यात्वमीरितम् ।**
**तस्येदानीमनित्यत्वाद्वैतथ्यं कथ्यते स्फुटम् ॥६७॥**

अनिर्मोक्षप्रसङ्गोक्त्या=अनिर्मोक्षस्य मोक्षाभावस्य यः प्रसङ्गः प्रसक्तिरापत्तिरिति यावत् तस्या उक्त्या प्रपञ्चस्य तत्सम्बन्धरूपस्य बन्धस्य वा सत्यत्वेन ज्ञानाऽनिवर्त्यतया कदाप्यात्मनो मोक्षो न भविष्यति तन्मा भूदिति मोक्षाऽन्यथाऽनुपपत्त्या दृश्यमिथ्यात्वम्=दृश्यं दृग्दृश्ययोः सम्बन्धश्च इत्येवं रूपेण, सर्वस्यापि दृश्यस्य मिथ्यात्वं ज्ञाननिवर्त्यत्वरूपं बाध्यत्वं, ईरितम्=प्रतिपादितम् । इदानीम्=अधुना तस्य=दृश्यस्य प्रपञ्चस्य अनित्यत्वात्=विनाशप्रतियोगित्वाद्धेतोरपि वैतथ्यम्=वितथस्य भावो वैतथ्यमसत्यत्वमिति यावत् स्फुटम्=प्रकटं यथा स्यात्तथा कथ्यते=निरूप्यते । निरूपणे स्फुटत्वन्तु सकलजिज्ञासुसाधारणबोधोपयोगित्वं वादिमतनिरासपूर्वकत्वं वा बोध्यम् । तथाच—

वैतथ्यं सर्वभावानां स्वप्न आहुर्मनीषिणः।
अन्तःस्थानात्तु भावानां संवृतत्वेन हेतुना॥ (मा०का०२।१)

इत्यनेनोचितदेशशून्यत्वाद्रज्जुभुजङ्गादिवत् सपक्षत्वेन स्वाप्नपदार्थानां मिथ्यात्वं प्रसाध्य—

"अन्तःस्थानात्तु भेदानां तस्माज्जागरिते स्फुटम्" (मा०का० २।४)

इति च फलितमनुमानं प्रदर्श्य—

आदावन्ते च यन्नास्ति वर्त्तमानेऽपि तत्तथा।
वितथैः सदृशाः सन्तोऽवितथैरिव लक्षिताः॥ (मा०का०२।६)

इति जाग्रद्भावानां मिथ्यात्वेऽनुमानान्तरमुक्तमाचार्यैः॥६७॥

सं०—पूर्व प्रकरण प्रतिपादित अर्थ का सारांश कथन करते हुए अन्य प्रकार से भी दृश्य मिथ्यात्व की प्रतिज्ञा करते हैं—

पदार्थ—अनिर्मोक्षप्रसङ्गोक्त्या=मोक्षाभाव की आपत्ति देकर पूर्व दृश्यमिथ्यात्वम्=दृश्य का मिथ्यात्व ईरितम्=प्रतिपा-

---

(१) अस्यायमर्थः—आगमेन द्वैतमिथ्यात्वमुक्त्वा उपपत्त्याऽपि तन्मिथ्यात्वं प्रतिपादयितुं द्वितीयं प्रकरणमारभते—"वैतथ्यम्"इत्यादिना। सर्वेषां बाह्याध्यात्मिकानां भावानां पदार्थानां स्वप्न उपलभ्यमानानां वैतथ्यमसत्यत्वमाहुर्मनीषिणः प्रमाणपारावारीणाः। वैतथ्ये हेतुमाह—"अन्तःस्थानात्तु" इति। अन्तः शरीरस्य मध्ये स्थानं येषां तेऽन्तःस्थानाः भावप्रधानो निर्देशोऽन्तःस्थानात्वाद्धेतोः भावानां पर्वतहस्त्यादीनां संवृतत्वेन हेतुना वैतथ्यमित्यर्थः। नह्यन्तःसंवृते नाडीप्रदेशे पर्वतहस्त्यादीनां सम्भवोऽस्ति, नापि च बहिर्गत्वा जीवस्य सत्यपर्वतादीनां ज्ञानसम्भवः तस्मात्तदुपलब्धिर्मिथ्यैवेति भावः।

दन किया गया है। इदानीम्=अब अनित्यत्वात्=विनाशप्रतियोगिरूप हेत्वन्तर से भी तस्य=उस ( दृश्य ) का वैतथ्यम्=मिथ्यापन स्फुटम्=स्फुटरूप करके कथ्यते=निरूपण करते हैं।

अभिप्राय यह है कि यदि बन्ध सत्य होता तो ज्ञान से निवृत्त न होने के कारण कदापि मोक्ष की सिद्धि न होती इस प्रकार मोक्ष की अन्यथा अनुपपत्ति हेतु से पूर्व प्रकरण में दृश्य का मिथ्यात्व निरूपण कर चुके हैं परन्तु वक्ष्यमाण रीति से अनित्यत्वादि हेतु भी दृश्यमिथ्यात्व के साधक जान लेने चाहिये ॥६७॥

प्रतिज्ञातार्थमाह—"नाशित्वाद्" इति—

**नाशित्वादादिमत्त्वाद्वा यथायोग्यमनित्यता ।**
**अनित्यत्वाच्च मिथ्यात्वं सर्वस्यैवाप्यनात्मनः ॥६८॥**

सर्वस्य एव अपि अनात्मनः=दृश्यत्वावच्छेदेन दृश्यमात्रस्य नाशित्वात्=ध्वंसप्रतियोगित्वात्, वा=अथवा आदिमत्त्वात्=कारणवत्त्वात् प्रागभावप्रतियोगित्वादिति यावत् यथायोग्यम्=योग्यमनतिक्रम्य वर्त्तते इति यथायोग्यम्—अनादिमत्याः कारणरूपायाः अविद्यायाः नाशित्वात्, तत्कार्यस्य च सर्वस्य आदिमत्त्वात् नाशित्वाच्चेत्युभाभ्यामपि हेतुभ्यामित्यर्थः, अनित्यता=अनित्यत्वं नित्याभिन्नतेत्यर्थः "ज्ञेया" इति शेषः । अनित्यत्वात् च=किञ्च अनित्यत्वादेव हेतोः मिथ्यात्वम्=स्वाप्नगजादेरिव मायामात्रत्वं प्रतिभासमात्रत्वमिति यावत् । अत्र—"सर्वस्य एव अपि अनात्मनः" इति पुनः सम्बन्धनीयम् ।

वस्तुतस्तु—" यथायोग्यम् " इत्यत्र योग्यपदस्य भावप्रधानत्वेन निर्देशात् क्रमेण अक्रमेण वा हेत्वोरनित्यत्वसाधकत्वं ज्ञेयम्। तेन सर्वस्याप्यविद्यादेरनादेः सङ्ग्रहः। तत्र "नाशित्वं" बाध्यत्वम्। " आदिमत्त्वं"च कल्पितत्वम्। " अनित्यत्वं " त्रैकालाबाध्यलक्षणनित्यभिन्नत्वं ग्राह्यम्। कल्पितत्वं ज्ञाननिवर्त्यत्वं स्वाभाववति ज्ञेयत्वं वेत्यन्यदेतत्।

एवञ्च सति यथाभीष्टं प्रयोगः कर्त्तव्यः—" सर्वोऽप्यनात्माऽनित्यो भवितुमर्हति नाशित्वाद् आदिमत्त्वाद्वा यथा व्यतिरेके आत्मा " इति।

अथवा—सर्वोऽप्यनात्मा आदिमान् विनाशित्वात् सर्वोऽप्यनात्माऽनित्य आदिमत्त्वात् " इति क्रमेऽक्रमेऽपि सर्वत्रात्मैव व्यतिरेक्युदाहरणम् ॥ ६८ ॥

सं०—अब प्रतिज्ञातार्थ का निरूपण करते हैं—

पदार्थ—सर्वस्य एव अपि अनात्मनः=सब ही अनात्म पदार्थ को नाशित्वात्=विनाशी होने से अर्थात् प्रध्वंसाभाव का प्रतियोगी होने से आदिमत्वाद् वा=अथवा आदिमान् होने से अर्थात् प्रागभाव का प्रतियोगी होने से यथायोग्यम्[1]=योग्यतानुसार अनित्यता=अनित्यता जाननी,

१—अभिप्राय यह है कि–उल्लिखित दोनों हेतुओं में से एक वा दोनों हेतु पदार्थ की योग्यतानुसार जहां भी मिल जावें उसे अनित्य जानना चाहिए। कारणरूप अविद्या में केवल एक ही " नाशित्व " रूप हेतु अनित्यत्व का साधक है परन्तु शेष सब कार्य पदार्थ में " आदित्व " और " नाशित्व " दोनों हेतु अनित्यत्व के प्रयोजक हैं। परिष्कार की शैली से संस्कृत टीका में योजनान्तर भी दर्शाया है।

च=और अनित्यत्वात्=अनित्य होने से भी अनात्म-पदार्थ का मिथ्यात्वम्=(स्वाप्न पदार्थों की न्याईं) मिथ्यापना ही सिद्ध होता है ॥६८॥

ननु—"अनित्यत्वम्" इत्यसिद्धो हेतुः परमाण्वादावनात्मनि नित्यत्वदर्शनादित्याशङ्कमानं प्रत्याह—"चिन्मात्राद्" इति—

चिन्मात्रादात्मनो भिन्नं नित्यं यैः किञ्चिदिष्यते ।
तैरेव स्वीकृतो नूनं शास्त्रन्यायव्यतिक्रमः ॥६९॥

यैः=नैयायिकादिभिः चिन्मात्रात्=चैतन्यस्वरूपात् आत्मनः भिन्नम्=अनात्मवस्तु किञ्चित्=किञ्चिदपि नित्यम्=अबाध्यम् इष्यते=मन्यते तैः नूनमेव=निश्चयेनैव शास्त्रन्यायव्यतिक्रमः=शास्त्रञ्च न्यायश्च शास्त्रन्यायौ तयोर्व्यतिक्रमः उल्लङ्घनं परित्याग इति यावत् स्वीकृतः=अङ्गीकृतः आत्मभिन्ननित्यत्ववादिनां तार्किकादीनां मते सर्वथा शास्त्रन्यायविरोध एवेति भावः । तत्र शास्त्रं वेदः, न्यायः पञ्चावयववाक्यमनुमानाख्यम् ॥ ६९ ॥

सं०—ननु—परमाण्वादि अनात्म पदार्थों में "अनित्यत्व" हेतु स्वरूपासिद्ध है अर्थात् उनमें अनात्मत्व धर्म तो है परन्तु अनित्यत्व नहीं, ऐसी आशङ्का करने वाले के प्रति समाधान कथन करते हैं—

पदार्थ—यैः=जिन तार्किकादिकों ने चिन्मात्रात्=चैतन्य-स्वरूप आत्मनः=आत्मा से भिन्नम्=भिन्न किञ्चित्=किञ्चित वस्तु भी नित्यम्=अविनाशी त्रैकालाबाध्य इष्यते=मानी है तैः=उन्होंने नूनम्=अवश्य एव=ही शास्त्रन्यायव्यतिक्रमः=शास्त्र

तथा न्याय इन दोनों का उल्लङ्घन स्वीकृतः=स्वीकार किया है अर्थात आत्मभिन्न यत्किञ्चित् अनात्मा को भी निय मानने वाले वादी के मत में शास्त्र और न्याय का विरोध अपरिहार्य है ॥६९॥

कौ तौ शास्त्रन्यायौ ययोर्विरोध इत्याकाङ्क्षायामाह "द्रव्यस्य" इति—

द्रव्यस्यारम्भकत्वाद्वा परिच्छिन्नत्वहेतुतः।
मर्त्यार्त्तत्वश्रुतेश्चाणुर्न नित्यो द्व्यणुकादिवत् ॥७०॥

द्रव्यस्य=कार्यद्रव्यस्य आरम्भकत्वात् = आरम्भवादरीत्या जनकत्वात् वा=किञ्च परिच्छिन्नत्वहेतुतः=परिच्छिन्नत्वात् मर्त्यार्त्तत्व-श्रुतेः च=तथाच मर्त्यार्त्तत्वश्रुतेः मर्त्यत्वश्रुतेरार्त्तत्वश्रुतेश्चेत्यर्थः। तत्र मर्त्यत्वप्रतिपादिका श्रुतिः छान्दोग्ये "मघवन् ! मर्त्यं वा इदं शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानमात्तो वै सशरीरः प्रियाऽप्रियाभ्याम्" (छां० ८।१२।१) इति "यदल्पं तन्मर्त्यम्" (छां० ७।२४।१) इति च। "अतोऽन्यदार्त्तम्" (बृ० ३।४।२; ३।५।१;३।७।२३) इति चार्त्तत्वप्रतिपादिका श्रुतिः। एवमेतैर्हेतुभिः अणुः=परमाणुः न नित्यः=अविनाशी नेत्यर्थः। तत्र द्व्यणुकादिवत् इति दृष्टान्तः।

अत्रेमे प्रयोगाः—"परमाणुर्न नित्यो भवितुमर्हति द्रव्यारम्भकत्वात्, परिच्छिन्नत्वात्, मर्त्यत्वात्, आर्त्तत्वात्,द्व्यणुकादि-

१ यद्यपीयं श्रुतिरशरीरं तुरीयमुपदेष्टुं साक्षात्प्रवृत्ता सती सशरीरतां निन्दति तथापि समष्टिदृष्ट्याऽनात्ममात्रस्य मर्त्यत्वमपि प्रतिपादयितुं समर्थेति इहोदाहृता।

वत्" इति। आदिना त्रसरेण्वादीनां परिग्रहः। नच द्रव्यानारम्भकेषु घटादिषु हेतोरसिद्धिः, द्रव्यान्तरारम्भकत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्। अथवा अनेकेषु हेतुषु यथायोगं साध्यसाधनभावो विवक्षित इत्यदोषः।

यद्यपि–"शास्त्रन्यायव्यतिक्रमः" इति प्रतिज्ञातार्थानुसारमादौ शास्त्रव्यतिक्रम एव दर्शयितव्यः तथापि तार्किकमानशमनार्थमादौ न्यायव्यतिक्रम एवोक्त इति विभावनीयम्॥ ७०॥

सं०—आत्मभिन्न परमाणु आदि पदार्थ को नित्य मानने वाले वादियों के मत में शास्त्र तथा न्याय का विरोध दर्शाते हैं—

पदार्थ–द्रव्यस्य=कार्य द्रव्य का आरम्भकत्वात्=आरम्भक (जनक) होने से वा=तथा परिच्छिन्नत्वहेतुतः=परिच्छिन्नत्वरूप हेतु के द्वारा मर्त्यार्त्तत्वश्रुतेः च=और मर्त्यत्व और आर्तत्व प्रतिपादन करने वाली श्रुतियों के प्रमाण से द्व्यणुकादिवत्=द्व्यणुकादि अनात्म पदार्थ की भान्ति अणुः=परमाणु (भी) नित्यः=नित्य न=नहीं है।

सार यह है कि जिस प्रकार द्व्यणुकादि स्वभिन्न त्रसरेण्वादिकों के आरम्भक होने से अनित्य हैं एवं परमाणु भी द्व्यणुक का आरम्भक होने से अनित्य ही मानना चाहिये। यदि कोई कहे कि जन्य होने से द्व्यणुकादिक अनित्य रहें

१—"यदल्पं तन्मर्त्यम्" (छां० ७।२४।१) "अतोऽन्यदार्त्तम्" (बृ० ३।४।२; ३।५।१; ३।७।२३) यह दोनों क्रम से मर्त्यत्व और आर्त्तत्व प्रतिपादन करने वाली श्रुतियां हैं।

परन्तु अजन्य परमाणु को अनित्य क्यों माना जाय तो ऐसे वादी के प्रति परिच्छिन्नत्वादि हेतु कथन किये गये हैं ऐसा जान लेना क्योंकि कोई भी देशादि से परिच्छिन्न पदार्थ नित्य नहीं होसक्ता। किञ्च—"परमाणुर्नित्यः अजन्यत्वात्" वादी के इस अनुमान में आर्त्तत्व, अल्पत्व प्रतिपादक अनेक श्रुतिवाक्यों से भी अणु की नित्यता में बाध भी स्पष्ट पाया जाता है इस लिये उसको नित्य मानना ठीक नहीं ॥७०॥

उक्तमेवार्थं स्पष्टयति—"जाग्रत्सु" इति—

**जाग्रत्स्वेतेष्वणूनां हि हेतुष्वपि निरंशता।**
**दुःसम्पाद्या,ततस्तेषां मिथ्यैव नित्यताऽऽग्रहः ॥७१॥**

हि=निश्चयेन एतेषु=पूर्वोक्तेषु आरम्भकत्वादिषु हेतुषु=कारणेषु साधनेषु जाग्रत्सु अपि=जाग्रत्सु अर्थात् निर्दुष्टेषु सत्सु अणूनाम्=परमाणूनां निरंशता=निरवयवता दुःसम्पाद्या=यत्नशतैरपि सम्पादयितुमशक्या। ततः=तत एव हेतोः तेषाम्=परमाणूनां नित्यताऽऽग्रहः="निरवयवत्वान्नित्याः परमाणवः" इत्येवंरूपेण नित्यताया आग्रहस्तार्किकाणां मिथ्या एव=वृथैवेत्यर्थः।

अत्रेदमवधार्यम—एषा हि तार्किकाणां प्रक्रिया, यदस्ति "परमाणवोऽसङ्ख्याताः पार्थिवाः, आप्याः, तैजसाः, वायवीयाश्च जगत उपादानकारणम्" इति। सूक्ष्मात् खलु द्रव्यात्स्थूलस्योत्पत्तिमुपलभामहे यथा तन्तुभिरारब्धस्य पटस्य, एवमंशुभिरारब्धस्य तन्तोः, एवमपकर्षपर्यन्तं समवायिकारणद्रव्यमतिसूक्ष्ममनवयवं च तिष्ठति तदेव परमाणुसञ्ज्ञमस्माभिश्चतुर्विधमुपरि दर्शितम्।

तस्य सावयवत्वेऽभ्युपगम्यमानेऽवयवधारायाः क्वचिदप्यविश्रान्ते-स्समवेतभावकार्योत्पत्तिप्रसङ्गः स्यात्, स्याच्च मेरुसर्षपयोरपि साम्यप्रसङ्गः, तस्मादवयवधाराविश्रान्तिस्थलमेव यतो नाल्पीय-स्तं परमाणुमाचक्ष्महे । तच्च परमाणुद्रव्यं प्रलयकाले निश्चलम-संयुक्तञ्च तिष्ठति । सर्गकाले चादृष्टवदात्मसंयोगात्तत्र कर्म भवति, तेन संयोगाद् द्रव्यान्तरं द्व्यणुकसञ्ज्ञमारभ्यते,द्व्यणुके च परमाणु-गता रूपादयो विशेषगुणाः शुक्लादयो जायन्ते, परमाणुगुणविशे-षस्तु परिमाण्डल्यं न द्व्यणुके पारिमण्डल्यमपरमारभते, एवमेव ततस्त्र्यणुकादिक्रमेणोत्पत्तिः त्र्यणुकमहत्वस्य च द्व्यणुकसङ्ख्या-ऽऽरम्भिणीति । तदेतत्सर्वं विशकलय्य भाष्यकारैः "महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्"[1](ब्र०सू०२।२।११)इत्यत्र महद्दीर्घाधिकरणे पूर्वो-त्तरपक्षाभ्यां प्रदर्शयद्भिस्तार्किकप्रक्रिया व्यभिचारिता । तस्याः सारमादाय परिच्छिन्नत्वादिभिर्हेतुभिः परमाणोः सावयवत्वं प्रसाधितं वेदितव्यमिति सूक्ष्मदृशा मनीषिभिर्विलोक्यम् ॥७१॥

सं०—उक्त अर्थ को पुनः स्पष्ट करते हैं—

पदार्थ—हि=निश्चय करके एतेषु=इन पूर्वोक्त हेतुषु=हेतुओं के जाग्रत्सु अपि=विद्यमान होते हुए भी अणूनाम्=परमाणुओं की निरंशता=निरवयवता दुःसम्पाद्या=दुःसम्पाद्य है अर्थात् सिद्ध नहीं हो सकती । ततः=इसी हेतु से तेषाम्=

---

१ सूत्रार्थस्तु—यथा महद् द्रव्यं त्र्यणुकादि ह्रस्वाद् द्व्यणुकाज्जायते, नतु महत्त्वगुणोपजनने द्व्यणुकगतं महत्त्वगुणमपेक्षते तस्य ह्रस्वत्वात्, यथा वा तदेव त्र्यणुकादि दीर्घं ह्रस्वाद् द्व्यणुकाज्जायते नतु तद्गतं दीर्घमपेक्षते तदभा-वात् यथा—द्व्यणुकमणु ह्रस्वपरिमाणं परिमण्डलात्परमाणोरपरिमण्डलं जायते एवञ्चेतनाद् ब्रह्मणोऽचेतनं जगन्निष्पद्यते इति ॥

उन परमाणुओं की नित्यताऽऽग्रहः=नित्यता का आग्रह मिथ्या एव=मिथ्या ही है, जब उक्त परमाणुओं की सावयवता के साधक हेतु निर्दोष हैं तब उन को नित्यकथन करने के अभिप्राय से निरवयव सिद्ध करने के लिये यत्न करना तार्किकों का केवल आग्रह ही जानना चाहिये ॥७१॥

न्यायव्यतिक्रममुक्त्वा, श्रुतिव्यतिक्रममप्याह—"एतस्माद्" इति—!

**एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।**
**खं वायुर्ज्योतिरित्यादिर्निर्दोषा द्विष्यते श्रुतिः ॥७२॥**

एतस्मात्=पुरुषाद्दिव्यादमूर्त्तात्. नामरूपबीजोपाधिलक्षितात् जायते=उत्पद्यते । किं तदित्याह—प्राणः=शरीरान्तःसञ्चारी वायुरूपः, मनः=संकल्पविकल्परूपम्, सर्वेन्द्रियाणि च=सर्वाणि च तानीन्द्रियाणि श्रोत्रादिज्ञानेन्द्रियाणि पञ्च, वागादिकर्मेन्द्रियाणि पञ्च "जायन्ते" इति वचनव्यत्ययेन योजना । खम्=शब्दगुणकमाकाशम्, एवमेतस्मादेवाकाशभावापन्नादक्षराद्भूतयोनेः वायुः= शब्दस्पर्शगुणको वातस्तथा ज्योतिः=शब्दस्पर्शरूपगुणवानग्निः जायते, इत्यादिः निर्दोषा=इत्येवंरूपा भ्रमप्रमादविप्रलिप्सादिदोषगन्धशून्या, श्रुतिः=वेदवाक्यं द्विष्यते=तार्किकैर्द्वेषविषयीक्रियत इत्यर्थः। आदिना "आपः पृथिवी विश्वस्य धारिणी" इति श्रुतिशेषोऽपि ग्राह्यः । तथाहि आपः=शब्दस्पर्शरूपरसगुणकं जलम्, पृथिवी= शब्दस्पर्शरूपरसगन्धवती भूमिः । सा कीदृशीत्याह विश्वस्य= सर्वस्य धारिणी धारणकर्त्री । एवञ्च तार्किकमते श्रुतिविरोधोऽप्यस्तीति भावः ।

इदन्तु बोध्यम्—अत्रार्थक्रमेण पाठक्रमो बाध्यः 'गताः कलाः पञ्चदश प्रतिष्ठा" (मुं० ३।२।७) इति वक्ष्यमाणग्रन्थे भूतेषु प्राणादीनां लयश्रवणेन भौतिकत्वावगमाद् भूतोत्पत्त्यनन्तरं प्राणादीनामुत्पत्तिर्वाच्या । व्याख्यातञ्चैवमेव तत्तट्टीकाकारैः। अस्माभिस्तु ऋज्वेव व्याख्यातं केवलं पदानुपूर्व्याख्यासौकर्य-मनुसरद्भिरिति पूर्वाचार्यव्याख्याविरोधो नोद्भावनीयः ।

अत्राहुर्भाष्यकाराः—"सङ्क्षेपतः परविद्याविषयमक्षरं निर्विशेषं पुरुषं सत्यं दिव्यो ह्यमूर्त्त इत्यादिना मन्त्रेणोक्त्वा पुनस्तदेव सविशेषं विस्तरेण वक्तव्यमिति प्रववृते, सङ्क्षेपविस्तरतो हि पदार्थः सुखाधिगम्यो भवति सूत्रभाष्योक्तिवद्" इति ॥७२॥

सं०—तार्किक मत में न्यायविरोध दिखाकर अब श्रुतिविरोध दर्शाते हैं—

पदार्थ—एतस्मात्=इस नामरूपबीजात्मक उपाधि से उपलक्षित अक्षर पुरुष से ही प्राणः=प्राण, मनः=मन, सर्वे-न्द्रियाणि च=और सब ज्ञानेन्द्रिय कर्मेन्द्रिय तथा खम्=आकाश वायुः=वायु, ज्योतिः=अग्नि जायते=उत्पन्न होते हैं इत्यादिः= इत्यादि स्वरूप वाली जो निर्दोषा=भ्रमादिदोषों से रहित श्रुतिः=वेदवाक्य है सो द्विष्यते=तार्किकमत से विरुद्ध पड़ता है अर्थात् तार्किकों के मत में श्रुतिविरोध अपरिहार्य होने से उनका मत मान्य नहीं है। अतएव सकल अनात्म वस्तु "अनित्य" तथा "मिथ्या" ही जाननी चाहिये ॥

यहां इतना विशेष ध्यान रहे कि इस मुण्डक श्रुति

१—मुं० २।१।३

(२।१।३) में पहले प्राणों की उत्पत्ति कथन करके पश्चात् मन आदि की सृष्टि कहकर खमित्यादि वाक्य से भूतों की सृष्टि को कहा है परन्तु भूतों की सृष्टि के बिना भौतिक प्राणादिकों की सृष्टि असम्भव है इसलिये "पाठक्रमादर्थक्रमो बलीयान्" (पाठ के क्रम से अर्थ का क्रम बलवाला होता है) इस न्याय के अनुसार भूतों की सृष्टि प्रथम ही विवक्षित है तत्पश्चात् भौतिक सृष्टि जाननी, इस रीति से श्रुत्यन्तर के साथ कोई विरोध की सम्भावना भी नहीं होसक्ती ॥७२॥

तार्किकाणां श्रुत्या सह विरोधमेव स्पष्टीकरोति— "प्रत्यक्षम्" इति—

**प्रत्यक्षं वेदमुत्सृज्य खादिसम्भववादिनम् ।**
**न्यायं चासम्भवं खादीत्यन्यायं तार्किकाः श्रिताः ॥**

तार्किकाः=नैयायिकाः प्रत्यक्षम्=स्वप्रामाण्यं प्रत्यनपेक्षम्—अर्थात् स्वतःप्रमाणभूतं वेदम्=श्रुतिम् "श्रुतिः स्त्री वेद आम्नायः" इति कोषः। "श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रन्तु वै स्मृतिः" (२।१०) इति मनुश्च। उत्सृज्य=त्यक्त्वा, खादिसम्भववादिनम्[1]=खादीनामाकाशादीना यः सम्भवः उत्पत्तिस्तद्वादिनं तत्प्रतिपादकं न्यायश्च=अनुमानमपि उत्सृज्य "खादि असम्भवमिति"=खादीनामुत्पत्तेरसम्भव इत्येवं-रूपम्, अन्यायम्=न्यायाभासं श्रिताः=आश्रित्य वर्त्तन्त इत्यर्थः ।

अत्रायमाशयः—" तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः "

(१) देहलीदीपकन्यायेन खादिसम्भववादिनम् इति पदमुभयो-रपि वेदन्यायपदयोर्विशेषणत्वेनान्वयनीयम् ।

(तै० उ० २ । १ ) "खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" ( मुं० २।१।३) इत्येवमाद्याः श्रुतयः स्पष्टमेव वियदादीनामुत्पत्तिमामनन्ति। न्यायश्च भवति—"खाद्या उत्पत्तिमन्तो विभक्तत्वात् घटादिवत्" इति वियदादीनामुत्पत्तिसाधकः।

ननु—उक्ताऽनुमाने "सावयवत्त्वम्" उपाधिः तस्योत्पत्तिमत्सु घटादिषु साध्यव्यापकत्वात् आकाशकालादिषु च साधनाव्यापकत्वादिति चेद् ? मैवं वोचः उपाध्यभावेन साध्याभावानुमाने "खाद्या उत्पत्तिमत्त्वाभाववन्तः सावयवत्वाभावात् व्यतिरेके यथाऽऽत्मा" इति स्थापनायां "जडत्वाभाववत्त्वस्योपाधेः" सत्वेन पूर्वोद्भावितस्य उपाधेरनुपाधित्वात् । वस्तुतस्तु सावयवत्त्वाभावादिति स्वरूपाऽसिद्धो हेतुः, वियदधिकरणन्यायेन आकाशादीनामपि सावयवत्वात् । श्रुतिबाधश्च स्पष्ट एव। एवमनया दिशा श्रुत्या न्यायेन चाकाशादीनामुत्पत्तिमत्त्वे सिद्धेऽपि यदाहुस्तार्किकाः "गौण्यसम्भवात्" ( ब्र०सू० २।३।३) "आत्मन आकाशः सम्भूतः" ( तै० २।१।१) इति वियदुत्पत्तिवादिनी श्रुतिर्गौणी भवितुमर्हति कुतः असम्भवात्=आकाशोत्पादकस्य समवाय्यादित्रिविधकारणस्याऽसम्भवादिति तत्तेषामभिधानं शास्त्ररहस्यानवधाननिबन्धनं वेदितव्यम् । स्थिते चैवं तार्किकमते श्रुतिन्यायव्याकोप एव इति सिद्धम् । विस्तरस्तु वियदधिकरणे भाष्यादिषु द्रष्टव्यः ॥७३॥

सं—अब फिर तार्किक मत में श्रौतविरोध कथन करते हैं—

पदार्थ—तार्किकाः=नैयायिक प्रत्यक्षम्=स्वतःप्रमाणभूत वेदम्=वेद को खादिसम्भववादिनम् च=तथा आकाशादि की

उत्पत्ति को सिद्ध करने वाले न्यायं=अनुमान प्रमाण को भी उत्सृज्य=त्यागकर असम्भवं खादि=आकाशादि उत्पत्ति रहित हैं इति=इस प्रकार के अन्यायम्=वेद विरुद्ध सिद्धान्त अथवा अनुमानाभास को श्रिताः=आश्रयण किये हुए हैं। अतः वेदविरुद्ध तथा न्यायविरुद्ध होने से उनका मत त्याज्य है ॥७३॥

तार्किकमतेऽन्यायमेव स्पष्टी करोति "नित्यं ब्रह्म" इति—

नित्यं ब्रह्मैव तद्भिन्नमनित्यमिति शाश्वतीम्।
शिक्षां नैवाद्रियन्ते ते नित्यानित्यविवेकिनीम् ॥७४॥

ते=नैयायिका ब्रह्म एव=ब्रह्मैवैकान्ततः नित्यम्=त्रिकालाबाध्यमेकरसं कूटस्थमस्तीति शेषः। तद्भिन्नम्=ब्रह्मभिन्नं सर्वम् अनित्यम्=स्वप्नमायागन्धर्वनगरवद् दृष्टनश्वरस्वभावम् इति=एवंरूपाम् शाश्वतीम्=सनातनीं वैदिकीं नित्याऽनित्यविवेकिनीम्=नित्यानित्ययोर्विवेकशालिनीं शिक्षाम्=शास्ति वैदिकमादेशमिति शिक्षा तामित्यर्थः नैव आद्रियन्ते=कदाचिदपि न स्वीकुर्वन्ति नानाविधानात्मपदार्थपरिष्कारपरपदसन्दर्भरचनापाटवाऽभिमानभ्रान्तमतित्वादिति भावः। एष एव नैयायिकानां नयेऽन्यायो यत्सदसद्विवेकराहित्यमित्याशयः ॥७४॥

सं०—अब तार्किक मत में उक्त अन्याय का स्पष्टीकरण दिखाते हैं—

पदार्थ—ते=वह नैयायिक ब्रह्म एव नित्यम्=ब्रह्म ही एक नित्य पदार्थ है तद्भिन्नम्=उससे भिन्न यावत् अनात्म पदार्थ

अनित्यम्=अनित्य हैं अर्थात् स्वप्नदृष्ट गजतुरगादि के समान मायामात्र हैं इति=इस प्रकार शाश्वतीम्=सनातन वैदिक नित्याऽनित्यविवेकिनी म्=नित्याऽनित्य पदार्थ के विवेक वाली शिक्षाम्=शिक्षा को नैव आद्रियन्ते=सत्कारपूर्वक ग्रहण नहीं करते, यही उनका अन्याय है ॥७४॥

न्यायमते दोषान्तरमप्याह—"नित्यत्वम् इति—

**नित्यत्वमिच्छतां खादेरनित्यत्वं जिहासताम् ।**
**श्रुतहानिः प्रसज्येत तथैवाश्रुतकल्पना ॥७५॥**

खादेः=आकाशादेः नित्यत्वम्=अबाध्यसत्त्वम् इच्छताम्=वाञ्छताम् अनित्यत्वम्=वियदधिकरणोक्तन्यायेन साधितं तेषामेवाऽनित्यत्वम् जिहासताम्=परित्यजतामनङ्गीकुर्वतां श्रुतहानिः=श्रुतस्याऽनित्यत्वरूपस्यार्थस्य हानिः परित्यागः तथैव=तथा च अश्रुतकल्पना=अश्रुतस्य श्रुत्यगोचरस्य नित्यत्वरूपस्यार्थस्य कल्पना प्रसज्येत=प्राप्ता भवति । खादिनित्यत्ववादिनां तार्किकाणा मते श्रुतहान्यश्रुतकल्पनारूपौ द्वौ दोषौ प्रसज्येयातां यदि ते वैदिकं सिद्धान्तं परित्यजेयुरिति भावः ॥ ७५ ॥

सं०—न्यायमत में अन्य दोष भी कथन करते हैं—

पदार्थ—खादेः=आकाशादि पदार्थों की नित्यत्वम्=नित्यता को इच्छताम्=मानने वाले तथा उनकी अनित्यत्वम्=अनित्यता को जिहासताम्=त्यागने की इच्छा वाले नैयायिकों के मत में श्रुतहानिः=श्रुतहानि तथा एव=तथा अश्रुतकल्पना=अश्रुतकल्पना (यह दो दोष) प्रसज्येत=प्राप्त होते हैं अर्थात

"तस्माद् वा एतस्मादात्मन आकाशः सम्भूतः" (तै० २।१) इत्यादिश्रुतिप्रतिपादित अर्थ के परित्याग करने से "श्रुतहानि" और श्रुति से प्रतिपादन न किये हुए आकाशादि के नित्यतारूप अर्थ के स्वीकार से "अश्रुतकल्पना" यह दो दोष नैयायिक मत में अनिवार्य हैं ॥७५॥

न केवलं श्रुतिविरोधोऽपितु शिष्टाचारव्याकोपोऽपीत्याह—"यतो नैषः" इति—

**यतो नैष सतां मार्गो यत्र वेदव्यतिक्रमः।**
**विस्पष्टोऽतः सदा त्याज्यः शिष्टाग्राह्यमताऽऽग्रहः ७६**

यतः=यस्मात् कारणात् यत्र=यस्मिन् पक्षे वेदव्यतिक्रमः=वेदस्य व्यतिक्रम उल्लङ्घनमर्थात् वेदप्रतिपादितार्थपरित्यागः विस्पष्टः=स्फुट एव भातीति शेषः एषः=असौ सताम्=शिष्टानां वेदप्रामाण्याभ्युपगन्तॄणां मन्वादिमहर्षीणां मार्गः=पद्धतिराचारो न=नास्त्येव अतः=अस्मात् कारणात् शिष्टाग्राह्यमताऽऽग्रहः[1]=शिष्टैरग्राह्यं शिष्टाग्राह्यं तच्च तन्मतं तस्याऽऽग्रहोऽङ्गीकारः सदा=सदैव त्याज्यः=परिहेयः। परिष्कृतश्चायमर्थः शिष्टपरिग्रहाधिकरणे "एतेन शिष्टपरिग्रहा अपि व्याख्याताः" (ब्र० सू० २।१।१२) इत्यत्र ॥७६॥

---

(१) आग्रहशब्दोऽत्र स्वीकृतिपरो हठपरो वा बोध्यः।

(२) सूत्रार्थस्तु—"एतेन मन्वादिभिः शिष्टैः केनचित्सत्कार्यवादाद्यंशेन परिगृहीतप्रधानवादनिराकरणप्रकारेण शिष्टापरिग्रहाः शिष्टैः केनचिदप्यंशेनापरिगृहीता अण्वादिकारणवादा अपि व्याख्याताः निरस्ता द्रष्टव्याः, अतस्तार्किकन्यायस्य वेदबाधितत्वान्न तेन समन्वयस्य विरोध इति सिद्धम्" इति।

सं०—तार्किक मत में श्रुति विरोध की न्याईं शिष्टाचार का विरोध भी कथन करते हैं—

पदार्थ—यतः=जिस कारण से यत्र=जिस पक्ष में वेदव्यातिक्रमः=वेद से विरोध विस्पष्टः=स्पष्ट ही होवे एषः=यह सताम्=शिष्ट पुरुषों का मार्गः=मार्ग ( अङ्गीकरणीय पक्ष ) न=नहीं होता अतः=इस हेतु से शिष्टाग्राह्यमताऽऽग्रहः=जिस मत को शिष्ट पुरुषों ने ग्रहण नहीं किया उसका स्वीकार अथवा उस में आग्रह सदा=सदैव त्याज्यः=त्यागने योग्य है।

भाव यह है कि—जिस प्रकार वेदप्रामाण्य को स्वीकार करने वाले मन्वादि महर्षियों ने प्रधानवाद की न्याईं वेदविरुद्ध अणुवाद को स्वीकार नहीं किया इसी प्रकार उन्होंने आकाशादि के अनुत्पत्तिवाद को भी नहीं अङ्गीकार किया। अतः इसका अङ्गीकार करने से तार्किकमत में केवल वेदविरोध ही नहीं प्रत्युत शिष्टाचारविरोध भी जानना चाहिये ॥७६॥

ननु—यथा कथञ्चित् श्रौतसिद्धान्तेनाणुवादस्यैकवाक्यतां विधास्यामो येन विरोधो न भविष्यति ? इत्याशङ्कमानम्प्रत्याह—"ये" इति—

ये वैशेषिकतर्काणां वेदान्तैरेकवाक्यताम्।
चिकीर्षन्त्यविरोधाय ते दण्डैः खण्डयन्तु ते ॥७७॥

ये=केऽपि विद्वांसः उदयनाचार्यप्रभृतयो नैयायिकाः "सम्बाहुभ्यां धमति सम्पतत्रैः"=( यजु० १७। १९ ) इति पतनशीलैर्गतिशीलैः परमाणुभिः सन्धमति सङ्गतो भवतीत्यादिवेदवाक्यार्थमूलतामवधार्य सम्भूतादिशब्दानां गौणत्वेन व्याख्यानं कृत्वा वैशेषिकतर्काणाम्=काणादतर्काणां परमाणुवादादीनाम् अविरोधाय=विरोधाभावाय वेदान्तैः="एतस्माज्जायते प्राणः' ( मुं० २। १। ३ ) इत्यादिपूर्वदर्शितवेदवाक्यैः सह एकवाक्यताम्=समानतात्पर्यवत्त्वम् चिकीर्षन्ति=कर्तुमिच्छन्ति ते ( पूर्वम् ) खम्=आकाशम् दण्डैः=काष्ठयष्टिभिः खण्डयन्तु=कुट्टयन्त्वित्यर्थः। यथाऽऽकाशस्य दण्डैः कुट्टनमसम्भवि तथा वैशेषिकतर्काणां वेदान्तवाक्यैः सहैकवाक्यताऽपि दुर्घटेति निष्फलस्तेषामस्मिन् विषये प्रयास इति भावः।

अयमभिसन्धिः—"विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्" इत्यस्या याजुषसप्तदशाध्यायवर्त्तिन्याः कण्डिकाया पूर्वं कथं परमेश्वरो जगत्सृजतीति प्रश्नोत्तराभ्यां निर्णिनीषुर्भगवान् वेदोऽनया कण्डिकया एकस्मादेवेश्वरादसहायात्सृष्टिमाचक्षाणः "पतत्र"पदेन काणादमतसिद्धानणून् नाऽभिप्रैति किन्तु पतत्रैः=पतनशीलैरनित्यैः पञ्चभूतैः सूक्ष्मावस्थापन्नैरपि धर्माऽधर्मरूपैर्निमित्तैः पञ्चभूतरूपैरुपादानैः सन्धमति=सङ्गतो भवति साधनान्तरं विनैव सर्वं सृजतीत्यत्र तात्पर्यम् , नहि महामायस्य ब्रह्मणो जगत्सर्जने कुलालादिवदेकान्ततो लौकिकसाधनापेक्षा शक्यसुसम्पादा येन तर्काचार्याणां तथा श्रुत्यर्थलापनं सङ्घटेत अद्वितीयब्रह्मण्येव सकलवेदान्तानां समन्वयस्य सुपपादित्वात्।

किञ्च—तत्सत्तानतिरिक्तसत्ताकत्वं प्रपञ्चस्याभिप्रयन् चक्षुरादिशब्दैः सर्वात्मिमाचक्षाणो भगवान्वेदः परमेश्वरस्य सर्वप्राण्यात्मकत्वाद्यस्य यस्य प्राणिनो ये चक्षुरादयस्ते तदुपाधि-

कस्य परमेश्वरस्यैवेति सर्वत्र ब्रह्मणश्चक्षुरादिसम्पत्तिस्तदद्वैत-बोधपर्यवसायिनीति सर्वथैवाणुवादे वेदतात्पर्योद्भावनं तार्किकाणामदूरदर्शितामेवावेदयतीति दिक् ॥७७॥

शङ्का—ननु—वेदान्तसिद्धान्त के साथ तार्किकमतसिद्ध अणुवाद की एकवाक्यता कर लेने से उक्त दोष (विरोध) नहीं हो सकता ? उत्तरः—

पदार्थ—ये=जो उदयनाचार्यादि नैयायिक वैशेषिक-तर्काणाम्=वैशेषिक तर्कों के अविरोधाय=विरोधपरिहार के लिये वेदान्तैः=वेदान्तवाक्यों के साथ एकवाक्यताम्=एक वाक्यता चिकीर्षन्ति=करने की इच्छा करते हैं ते=वे (प्रथम) खम्=आकाश को दण्डैः=दण्डों से खण्डयन्तु=खण्डन करें।

अभिप्राय यह है कि जैसे दण्डों के द्वारा आकाश का कुट्टन असम्भव है वैसे ही वेदान्तों के साथ अणुवादादि वैशेषिक तर्कों की एकवाक्यता भी सम्भव नहीं, क्योंकि ब्रह्माद्वैत बोधन के विना वेद का अन्य किसी अर्थ में भी परम तात्पर्य सिद्ध नहीं हो सकता ॥७७॥

वस्तुतस्तु वेदान्ताऽविरोधेनैव वैशेषिकादितर्का नेतव्या इत्याह—"दृष्टा" इति—

**दृष्टा शारीरके शास्त्रे पूर्वपक्षपरम्परा ।**
**तत्सिद्धान्तैकवाक्यत्वं तैरेवाभ्युपगम्यताम् ॥७८॥**

शारीरके शास्त्रे=शरीरमेव शरीरकं कुत्सिते कन्। कुत्सितं शरीरमित्यर्थः, तन्निवासी "शारीरको" जीवः, तस्य ब्रह्मत्वविचा-

रात्मकं शास्त्रं "शारीरकं शास्त्रम्" तस्मिन् शारीरके शास्त्रे व्यासप्रणीते ब्रह्ममीमांसाशास्त्र इत्यर्थः । शास्त्रत्वञ्चास्य हितशासनात् । ननु—

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥

इतीदमैकान्तिकमेकदेशित्वादस्य लक्षणस्य ।

एवमस्मिञ्शास्त्रे पूर्वपक्षपरम्परा=पूर्वपक्षाणां प्रधानादिवादिनां ये पूर्वपक्षाः प्रधानकारणवादोऽणुकारणवादश्चेत्येवमाद्याः सिद्धान्ताभासाः तेषां परम्परा एकपूर्वपक्षोत्थापनोत्तरमपरंपूर्वपक्षोत्थापनक्रमरूपा परिपाटी दृष्टा=आलोकिता अर्थात् भेदवादिनां सर्वेऽपि पूर्वपक्षास्तत्र तत्रोत्थापिताः तत्सिद्धान्तैकवाक्यत्वम्=तस्य शारीरकमीमांसाशास्त्रस्य ये सिद्धान्ता अद्वैतबोधाय अवतारिता अद्वैतबोधान्ताः तैरेव=वैशेषिकप्रभृतिभिरेव अभ्युपगम्यताम्=स्वीक्रियताम् । वेदान्तशास्त्राऽविरोधेनैव काणादाद्याः सिद्धान्ता नेतव्या नतु वेदान्तशास्त्रेण तेऽनुसर्त्तव्या इति भावः । एवञ्च—विरोधस्थले वेदान्तानामेव प्रामाण्यमितरेषामप्रामाण्यमन्यथा गुणवादस्तेषामिति विपश्चितामपश्चिमः परामर्शः ॥७८॥

सं०—वेदान्तशास्त्रानुसार ही वैशेषिकादि शास्त्रों का तात्पर्य मानना उचित है इस बात को स्पष्ट करते हैं—

पदार्थ—शारीरके शास्त्रे=वेदान्तमीमांसा शास्त्र में पूर्वपक्षपरम्परा=साङ्ख्य वैशेषिकादि शास्त्रों के अनेक पूर्वपक्ष दृष्टा=उठाय गए हैं तैः एव=उन्हीं शास्त्रों को तत्सिद्धान्तैकवाक्यत्वम्=

(१) व्यावहारिकदृष्ट्या तत्र तत्रांशे प्रामाण्यं, यथाच सूतसंहितादिषु निरूपितमित्यत्र तात्पर्यम् ।

वेदान्तसिद्धान्त के साथ एकवाक्यता अभ्युपगम्यताम्=स्वीकार करनी चाहिये ।

अर्थात् विरोधस्थल में वेदान्तशास्त्र ही मुख्य प्रमाण है अन्य शास्त्रों का सिद्धान्त परित्याज्य है अथवा उन सिद्धान्तों को गुणवाद वा अधिकारिभेद से लापन करना चाहिये,जैसा कि—सूतसंहिता यज्ञ० खं० अ० २३ आदिकों वर्णन किया गया है ॥ ७८ ॥

अत्रैव परं रहस्यमुद्‌घाटयति "न सम्यग्" इति—

न सम्यग्दर्शनं याति मिथ्यादर्शनसङ्गतिम् ।
न मिथ्यादर्शनं याति सम्यग्दर्शनसङ्गतिम् ॥७९॥

सम्यग्दर्शनम्=यथार्थदर्शनम् यथार्थज्ञानं वा मिथ्यादर्शनसङ्गतिम्=मिथ्यादर्शनेन मिथ्याज्ञानेन वा सहैकवाक्यताम् न याति=नैव प्राप्नोति मिथ्यादर्शनम्=मिथ्याज्ञानं सम्यग्दर्शनसङ्गतिं न याति इति व्याख्यातप्रायम् । नहि तेजस्तिमिरवद्विरुद्धयोर्यथार्थमिथ्याज्ञानयोरेकार्थे तात्पर्यमस्तीति भावः ॥७९॥

सं०—उक्त अर्थ का परम रहस्य कथन करते हैं—

पदार्थ—सम्यग्दर्शनम्=अबाधित अर्थ को प्रतिपादन करने वाला वेदान्तमीमांसाशास्त्र अथवा यथार्थ ज्ञान मिथ्यादर्शनसङ्गतिम्=मिथ्यादर्शन के साथ एकवाक्यता को न याति=(कदापि) प्राप्त नहीं हो सकता और न=ना ही मिथ्यादर्शनम्=मिथ्या ज्ञान अथवा मिथ्या शास्त्र सम्यग्दर्शनसङ्गतिम्=यथार्थ

ज्ञान वा सत्यशास्त्र के साथ एकवाक्यता को याति = प्राप्त हो सकता है ।

यथार्थज्ञान और मिथ्याज्ञान का परस्पर तेजस्तिमिरवत् विरोध होने से उन की एकवाक्यता असम्भव है ॥७९

इत उत्तरमनेकैः[1] श्लोकैः सम्यग्दर्शनप्रतिपक्षभूतं मिथ्यादर्शनं प्रपञ्चयति "शुद्धचिन्मात्रे" इति—

**शुद्धचिन्मात्रवस्त्वेकस्वरूपासक्तनामतः ।**
**लोकान्प्रलोभ्य मिथ्यार्थो दुस्तर्कैर्ग्राह्यते यतः ॥८०॥**

शुद्धचिन्मात्रवस्त्वेकस्वरूपासक्तनामतः=शुद्धं निर्विशेषञ्च तच्चिन्मात्रं वस्तु परमार्थभूतमेकमद्वितीयं स्वरूपं स्वयम्प्रकाशमखण्डं ब्रह्मेत्यर्थः तस्मिन्नासक्तं यन्नाम प्रातिपदिकशब्दः आत्मशब्दः तद्द्वारा देहाद्यतिरिक्त एवंगुणविशिष्ट आत्मैव परमार्थभूतः कर्त्ता भोक्ता चेति लोकान्=जिज्ञासून् प्रलोभ्य=लम्भयित्वा यतः=यस्मात् कारणात् तैरेव तार्किकैः दुस्तर्कैः=श्रुतिबाह्यैः श्रुतितात्पर्योदासीनैर्वा अनुमानादिरूपैस्तर्कैर्युक्त्याभासैरित्यर्थः मिथ्यार्थः=अवस्तुभूतोऽर्थः ग्राह्यते=बोध्यते । अतएव तेषां तानि दर्शनानि सम्यग्दर्शनप्रतिपक्षभूतानि मिथ्यादर्शनसञ्ज्ञया व्यवहरणीयानीति भावः ॥ ८० ॥

सं०—इस के अनन्तर १२० श्लोक पर्यन्त सम्यक दर्शन के प्रतिपक्षभूत मिथ्यादर्शन का प्रपञ्च करते हैं—

---

(१) १२० पर्यन्तैः श्लोकैः ।

पदार्थ—यतः=जिस कारण से (वह तार्किक) शुद्धचिन्मात्रवस्त्वेकस्वरूपासक्तनामतः=निर्विशेष चिन्मात्र एक अखण्ड परमार्थ वस्तुस्वरूप के नाम से लोकान्=जिज्ञासु जनों को प्रलोभ्य=प्रलोभन देकर दुस्तर्कैः=तर्काभासों के द्वारा मिथ्यार्थः=वेद-विरुद्ध अर्थ (आत्मपदार्थ) का ग्राह्यते=ग्रहण कराते हैं अतएव उन का दर्शन "मिथ्यादर्शन" कथन करने के योग्य है।

भाव यह है कि–तार्किक लोग श्रुतितात्पर्य को न जान कर आत्मा को ज्ञानादिगुणों से विशिष्ट मानते हैं, परन्तु श्रौत तर्कों द्वारा उसके स्वरूप को भले प्रकार नहीं जानते, अतएव उन का ज्ञान वा उपदेश यथार्थ न होने के कारण जिज्ञासु जनों के लिये परम हितकारी नहीं ॥८०॥

कथं तैर्दुस्तर्कैरात्मा ग्राह्यत इत्याह–"ज्ञानेच्छा"इति—

ज्ञानेच्छासुखदुःखाद्या विकारा हि यदाश्रिताः।
सोऽनात्मैव हि दुस्तर्कैरात्मत्वेन समर्पितः ॥८१॥

हि=यतः ज्ञानेच्छासुखदुःखाद्याः=ज्ञानञ्च इच्छा च सुखञ्च दुःखञ्च तानि ज्ञानेच्छासुखदुःखानि आद्यानि येषां ते ज्ञानेच्छा-सुखदुःखाद्याः। तत्र ज्ञानं–"बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्" (न्या० १।१।१५) इति न्यायसूत्रोक्तम्, इच्छा–इच्छामीत्यनुभवविषय-वृत्तिगुणत्वव्याप्यजातिमान् गुणविशेषः अथवा इष्टसाधनताज्ञान-जन्योऽभिलाषः, सुखम्–सर्वेषामनुकूलवेदनीयं सत्त्वपरिणामरूप-प्रीत्यात्मकचित्तवृत्तिविशेषो वा, दुःखम्–सर्वेषां प्रतिकूलवेद-

नीयं रजःपरिणामाप्रीत्यात्मकचित्तवृत्तिविशेषो वा आद्यपदेन द्वेषप्रयत्नादीनां परिग्रहः,एते हि विकाराः=अन्तःकरणधर्माः यदाश्रिताः यस्मिन्मनसि स्थिताः सः अनात्मा एव=आत्मभिन्नत्वादनात्मैव । नहि विकारिणः कथमप्यात्मत्वं घटेत "अविकार्योऽयमुच्यते" ( भ० गी० २ । २५ ) इत्युक्तेः । स एवम्भूतोऽनात्मपदार्थ एव तार्किकैः दुस्तर्कैः=तर्काभासैः "यज्जातीयस्यार्थस्य सन्निकर्षात्सुखमात्मोपलब्धवांस्तज्जातीयमेवार्थं पश्यन्नुपादातुमिच्छति सेयमादातुमिच्छा एकस्यानेकार्थदर्शिनो दर्शनप्रतिसन्धानाद् भवति लिङ्गमात्मनः’ ( न्या० भा० १ । १ । १० ) इत्येवं रूपाभिर्युक्तिभिर्देहभेदमात्रसाधनपराभिरपि आत्मस्वरूपसिद्धिमात्रत्वेन भाविताभिः हि=निश्चयेन आत्मत्वेन=आत्मरूपत्वेन समर्पितः=ग्राहितो गृहीतश्चेत्यर्थः ।

अयम्भावः—"उपयन्नपयन् धर्मो विकरोति हि धर्मिणम्" इति नियमेन उपयन्तोऽपयन्तो ज्ञानाद्या धर्माःकथं स्वाश्रयं न विकुर्वीरन् यदि ते तद्धर्माः स्युः । तथा सति तदाश्रयत्वेनाभिमतस्तार्किकाभिमत आत्मा घटादिवदनात्मैव स्यात्, नह्यात्मपदार्थः कथमपि विकारी भवितुमर्हति श्रुतिस्मृतिविरोधात्, तर्कविरोधाच्च । "नैयायिकाभिमत आत्मा अनात्मा भवितुमर्हति विकारित्वात् घटादिवत्" इति घटादिष्वनात्मत्वप्रसिद्धेर्नाप्रसिद्धविशेषणः पक्षः । नच"आत्मेतरत्वम्"उपाधिस्तस्य साधनाव्यापकत्वग्राहकप्रमाणाभावात्,घटादिष्वनात्मत्वसमानाधिकरणविकारित्वसत्त्वाच्च न साधनवैकल्यम्, हेतोर्व्याप्तिपक्षधर्मताबलवत्त्वेन साध्यवैकल्यमपि नेति परं राद्धान्तमविज्ञाय ज्ञानादीनामात्मधर्मत्वमाचक्षाणानां तार्किकाणां दर्शनं मिथ्यादर्शनमेवेति न वेदान्तैः सह तस्य सङ्गतिरिति सर्वं सुस्थम् ।

(१) नैष्कर्म्यसिद्धिः २ । ३५ ।

ननु—पूर्वं "दृष्टा शारीरके शास्त्रे पूर्वपक्षपरम्परा" इत्यत्राष्टसप्ततितमपद्यव्याख्यायां वैशेषिकप्रभृतीनां सिद्धान्तैकवाक्यत्वमवोचः सम्प्रति तार्किकादीनां दर्शनं मिथ्यादर्शनं ब्रुवन् वेदान्तैः सह तेषां सङ्गतिं वारयसीति कस्ते विश्वासः? उच्यते—विवक्षितांशे विरोधाभावोऽविवक्षितांशे च सति विरोधे तेषां प्रामाण्यपरित्याग इति सिद्धान्ताऽविरोध्येव पूर्वोत्तरः शास्त्रार्थ इत्यविश्वासकारणगन्धोऽपि नास्ति। कथमन्यथा समन्वयसूत्रीयम्—"तथाचाचार्यप्रणीतं न्यायोपबृंहितं सूत्रम्" इत्याद्याचार्यवचः तद्व्याख्यानपरा "तत्त्वज्ञानान्मिथ्याज्ञानापाय इत्येतावन्मात्रेण सूत्रोपन्यासः" इत्यादिका भामती च सङ्गच्छेताम्, कथं वा "एतेन योगः प्रत्युक्तः" (ब्र० सू० २।१।३) इत्यत्र योगप्रत्युक्त्यधिकरणभाष्यलापनमप्युपपद्येतेति सूक्ष्मं निरीक्ष्यम्॥ ८१॥

सं०—अब उक्त अर्थ को स्पष्ट करते हैं—

पदार्थ—हि=यद्यपि ज्ञानेच्छासुखदुःखाद्याः=ज्ञान इच्छा सुख दुःख आदि विकाराः=विकार यदाश्रिताः=जिस के आश्रित हैं सः=वह अनात्मा एव=अनात्मा ही है आत्मा नहीं तथापि तार्किकों ने दुस्तर्कैः=तर्काभासों के द्वारा उस को हि=निश्चय करके आत्मत्वेन=आत्मरूप से समर्पितः=ग्रहण किया है।

सार यह कि—" उत्पन्न तथा विनष्ट होता हुआ धर्म अपने आश्रयभूत धर्मी को विकारी कर देता है, ऐसा कोई उत्पत्ति विनाशशाली धर्म नहीं जो अपने धर्मी को विकारी

न करे" इस नियम के अनुसार उत्पत्ति विनाश वाले ज्ञानेच्छादि धर्मों का आश्रय आत्मा नहीं हो सकता, क्योंकि जो विकारी हो वह घट पटादिकों की न्याईं अनात्मा है, इत्यादि तर्कों से नैयायिकाभिमत आत्मा विकारी ही सिद्ध होता है अतएव उन का दर्शन सम्यक्-दर्शन नहीं हो सकता ॥ ८१ ॥

ज्ञानेच्छादेराश्रयभूतमनात्मानं दर्शयति—"कामः" इति—

**कामः सङ्कल्प इत्युक्तेर्विकारा मनसि स्थिताः ।**
**तदेवात्मेत्युपस्थाप्य मनोनाम पृथक् कृतम् ॥८२॥**

"कामः सङ्कल्पः" इत्युक्तेः="कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" (बृ० १।५।३) इत्याकारायाः श्रुतेरुक्तेः विकाराः=कामाद्या विकाराः मनसि=अन्तःकरणे स्थिताः=वर्त्तन्ते तदेव=तादृशकामादिधर्मि मन एव मनोऽन्तःकरणं श्रुत्या यदभिहितं तत् आत्मा इति उपस्थाप्य=आत्मेत्येवमभिलाप्य पृथक्=भिन्नं नाम=अभिधेयम् कृतम्=व्यवहृतं तार्किकैरिति शेषः । यदेवान्तःकरणं कामादिधर्मि श्रुतिर्जगौ, "ज्ञानाधिकरणमात्मा" इत्यात्मलक्षणमाचक्षाणैर्नैयायिकैस्तदेवानात्मभूतमात्मत्वेनोक्तमित्यहो तेषां साहसिक्यं तस्मादस्त्येव तेषां दर्शनं मिथ्यादर्शनमिति भावः ॥ ८२ ॥

सं०—अब ज्ञानेच्छादि के आश्रयभूत को श्रुति द्वारा अनात्मा कथन करते हुए तार्किकों की कुतर्कणा को स्पष्ट करते हैं—

पदार्थ—कामः सङ्कल्पःइत्युक्तेः—"काम सङ्कल्प श्रद्धा आदि सब मन=अन्तःकरण के ही धर्म=विकार हैं" इस अर्थ के प्रतिपादन करने वाली बृदाहरण्यक श्रुति (बृ० १।५।३) के कथन करने से विकाराः=कामादि विकार मनसि=अन्तःकरण में स्थिताः=स्थित हैं तदेव मनः=उसी मन का आत्मा इति उपस्थाप्य=आत्मशब्द द्वारा अभिलाप करके नैयायिकों ने पृथक् नाम कृतम्=मन नाम वाला स्वतन्त्र पदार्थ मान लिया है।

श्रुति ने ज्ञानेच्छादि अन्तःकरण के धर्म कथन किये हैं, नैयायिक ज्ञानेच्छादि गुणों वाले को ही "आत्मा" कथन करते हैं, सो श्रुति ने जिस अनात्म पदार्थ की सञ्ज्ञा "मन" कही है, उसी को तार्किकों ने आत्मा मान लिया है, इस लिये उन का दर्शन सम्यग्दर्शन कैसे हो सकता है? अर्थात कदापि नहीं ॥८२॥

उक्तेऽर्थे गीतावाक्यमपि प्रमाणयति-"इच्छा द्वेषः" इति—

इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः ।
एतत्क्षेत्रमितीशोक्तोऽनात्मैवात्मतयोदितः ॥८३

इच्छा=यज्जातीयं सुखहेतुमर्थमुपलब्धवान् पूर्वं पुनस्तज्जातीयमुपलभमानस्तमादातुमिच्छति सुखहेतुरिति सेयमिच्छान्तः-

(१) भ० गी० १३।६

करणधर्मो ज्ञेयत्वात्क्षेत्रमनात्मैवेत्यर्थः । एवमिच्छावद् द्वेषः=ईर्ष्यापरपर्यायः सुखम्=अनुकूलं सत्त्वात्मकम्, दुःखम्=प्रतिकूलात्मकं सङ्घातः=देहेन्द्रियादीनां संहतिः पञ्चभूतपरिणामविशेषः चेतना=स्वरूपभूतज्ञानव्यञ्जिका प्रमाणासाधारणकारणिका चित्तवृत्तिर्ज्ञानाख्या धृतिः=ययावसादं प्राप्तानि देहेन्द्रियाणि ध्रियन्ते साऽन्तःकरणावस्थाविशेषः एतत्क्षेत्रम्=एतत्सर्वमिच्छादिकं महाभूतादि धृत्यन्तं दृश्यमानं जडं क्षेत्रं भास्यमचेतनमनात्मकमिति यावत् इति=इत्येवं रूपेण ईशोक्तः=ईशेन भगवदवतारभूतेन साक्षाद्भगवता श्रीकृष्णेन उक्तः कथितः यः अनात्मा=अनात्मपदार्थः सः एव=नूनं नैयायिकैः आत्मतया=आत्मत्वेन ऊहितः=तर्कितः अनुमानेन साध्यत इत्यर्थः । इत्थञ्च श्रुतिस्मृतिन्यायविरोधस्तार्किकाणां मतेऽपरिहार्य इति सारः ॥८३॥

सं०—उक्त अर्थ में गीता वाक्य का प्रमाण कथन करते हैं—

पदार्थ—इच्छा=इच्छा, द्वेषः=द्वेष, सुखम्=सुख दुःखम्=दुःख, सङ्घातः=देहेन्द्रियादि सङ्घात चेतना = बुद्धि, धृतिः = धैर्य एतत् क्षेत्रम् = यह सब क्षेत्र अनात्म पदार्थ हैं इति = इस प्रकार ईशोक्तः = श्रीकृष्णभगवान् से कथन किया हुआ (सविकार क्षेत्ररूप) अनात्मा एव = अनात्मा ही (नैयायिकों ने) आत्मतया = आत्मरूप करके ऊहितः = शास्त्र प्रतिकूल अनुमानादि द्वारा निश्चित किया है ।

सार यह कि न्याय मत में श्रुति, स्मृति, न्याय विरोध अपरिहार्य है ॥८३॥

अन्यदपि नैयायिकानां स्खलनमाह—"एतस्यैव" इति—

**एतस्यैवाप्यनेकस्य स्वल्पानित्यविकारिणः ।**
**नित्यता विभुता चोक्ता शुद्धानन्ताचिदात्मगा ॥८४**

एतस्य = उक्तस्य क्षेत्रात्मकस्यानात्मनो ज्ञानादिधर्मिणः अनेकस्य अपि = नानात्ववतोऽपि तथा स्वल्पाऽनित्यविकारिणः = स्वल्पञ्च तदनित्यञ्च विकारि चेति तादृशस्य परिच्छिन्नस्य जडस्य विनाशिनश्चेत्यर्थः एव = एव नित्यता = अबाध्यता विभुता च = व्यापकताऽनन्तता चापि उक्ता = कथिता तार्किकैः । या नित्यता विभुताऽनात्मनि कदापि न सम्भवित्री सा कीदृशीत्याह—" शुद्धानन्तचिदात्मगा " इति । या नित्यता विभुता सच्चिदानन्दस्वरूपात्मभूतेत्यर्थः ॥८४॥

सं०—न्यायमतानुयायियों का अन्य प्रमाद कथन करते हैं—

पदार्थ—एतस्य = उक्त क्षेत्र स्वरूप ज्ञानादि धर्म वाले, अनेकस्य अपि = अनेक प्रकार के तथा स्वल्पाऽनित्यविकारिणः = स्वल्प परिच्छिन्न अनित्य और विकार स्वभाव अनात्मा की एव = ही नित्यता = अबाध्यता विभुता च = तथा व्यापकता उक्ता = तार्किकों ने कथन की है ( वस्तुतः वह नित्यता और अबाध्यता) शुद्धानन्तचिदात्मगा = सच्चिदानन्द आत्मा का स्वरूपभूत है (किसी का धर्म नहीं) ॥ ८४ ॥

प्रकृते किं फलितमित्याह—" अनेकत्वम्" इति—

**अनेकत्वमनित्येषु दृश्यमानमनात्मसु ।**
**यत्र स्वीक्रियते तत्राऽनित्यताऽनात्मता ध्रुवा ॥८५॥**

यत्र=येषु अनित्येषु=ध्वंसप्रतियोगिषु अनात्मसु=घटपटादिषु दृश्यमानम्=उपलभ्यमानं प्रमाणसिद्धम् अनेकत्वम्=नानात्वं विभक्तत्वमिति यावत् स्वीक्रियते=अङ्गीक्रियते वादिभिरपि तत्र=तेषु अनित्यता=विनश्वरता अनात्मता=आत्मभिन्नता च ध्रुवा=निश्चितैवेत्येवं विभक्तत्वात्तेषामनात्मत्वं सिद्धम् । तथा चायं प्रयोगः फलितः—"तार्किकाऽभिमत आत्माऽनित्योऽनात्मा च भवितुमर्हति अनेकत्वात् विभक्तत्वात् घटादिवद्" इति ।

नचात्मन्येव व्यभिचारस्तस्याऽस्माभिरनेकत्वस्यास्वीकारात् । नचाऽप्रसिद्धविशेषणः पक्षः पक्षसमेषु घटादिषु अनेकत्वसमानाधिकरणाऽनित्यत्वाऽनात्मत्वप्रसिद्ध्याऽपि साध्यसाधनसम्भवात् । नापि हेतोर्विरुद्धता व्यभिचारवत्तस्याप्युद्धर्त्तुं शक्यत्वात् । नचाऽसिद्धो हेतुर्वादिना स्वाऽभिमतात्मस्वनेकत्वस्वीकारात् । नच—"विमत आत्मा नित्यश्च अजन्यत्वे सति चेतनत्वात् । व्यतिरेके घटादिर्दृष्टान्तः"इति प्रतिरोधः शङ्क्य, "विवादाध्यासित अनात्माऽनित्यश्च स्यात् आद्यन्तयोरविद्यमानत्वाद्विकारित्वाद् दृश्यत्वाच्च शुक्तिरजतादिवत" इत्यबाध्यहेतुभिरनात्मत्वसिद्धौ प्रतिरोधकथाया दूरोत्सारितत्वादिति दिक् ॥८५॥

**सं०—अब प्रकृत में तात्पर्यसिद्धि दर्शाते हैं—**

**पदार्थ**—यत्र=**जिन** अनित्येषु=**अनित्य** अनात्मसु=**घटपटादि में पदार्थों** दृश्यमानम्=**दृश्यमान ( प्रमाणसिद्ध )** अनेकत्वम्=**नानात्व** स्वीक्रियते=**वादियों ने अङ्गीकार किया**

है तत्र = उन में अनित्यता = विनाशिता और अनात्मता = आत्मभिन्नता ध्रुवा = निश्चित ही है ।

यहां इस प्रकार का अनुमान जानना—"तार्किकाभिमत आत्माऽनित्योऽनात्मा च भवितुमर्हति अनेकत्वाद् विभक्तत्वाद् घटादिवत्" = तार्किक मत सिद्ध आत्मा, अनात्मा और अनित्य होने योग्य है, नानात्व धर्म वाला तथा आत्मा (ब्रह्म) से भिन्न होने के कारण, घटादि पदार्थों की न्याई॥८५॥

उक्तेऽर्थे प्रयोगान्तरमप्याह । यद्वोक्तार्थसिद्धयै दृष्टान्ते प्रतिबन्धं दर्शयति "अनित्यगुणता " इति—

**अनित्यगुणताऽप्येवं दृश्यमाना घटादिषु ।**
**यत्रैवाङ्गीकृता तत्रानित्यानात्मत्वधीः स्थिता ॥८६**

यत्र अपि=यत्रापि घटादिषु=कुम्भादिपदार्थेषु एवमेव=दर्शितरीत्या दृश्यमाना=उपलभ्यमाना अनित्यगुणता=अनित्यगुणाश्रयता अङ्गीकृता=स्वीकृता तार्किकैरिति शेषः तत्र=तेषु अनित्याऽनात्मत्वधीः= अनित्यत्वधीः अनात्मत्वधीश्च स्थिता=अव्यभिचारिणी वर्त्तत इत्यर्थः । " यत्र यत्राऽनित्यगुणाश्रयत्वं तत्र तत्राऽनित्यानात्मबुद्धिविषयत्वम्" इति सुग्रहा व्याप्तिर्घटादिष्विति भावः । तथाचायं प्रयोगः—"तार्किकाऽभिमत आत्माऽनित्योऽनात्मा च भवितुमर्हति अनित्यगुणाश्रयत्वाद् घटादिवद् " इति ॥८६॥

सं०—अब उक्त अर्थ में हेत्वन्तर कथन करते हैं—

पदार्थ—यत्र अपि घटादिषु = जिन जिन घटपटादि पदार्थों में

एवमेव = इसी प्रकार दृश्यमाना = प्रतीयमान अनित्यगुणता = अनित्य(रूपादि)गुणों की आश्रयता अङ्गीकृता = (नैयायिकों ने) स्वीकार की है तत्र = उन में अनित्यानात्मत्वधीः = अनित्यत्व और अनात्मत्व बुद्धि स्थिता = (स्पष्टरूप से ही) विद्यमान है।

अर्थात "जो जो अनित्यगुण का आश्रय होता है वह अनित्य तथा अनात्मा होता है" इत्याकारक व्याप्ति ज्ञान घटपटादि पदार्थों में उभयवादिसिद्ध है जिस से अनुमान का आकार यह हुआ कि–"न्यायमत सिद्ध आत्मा अनित्य तथा अनात्मा ही है, अनित्यगुणों का आश्रय होने से, घटपटादिकों की न्याईं ॥८६॥

उक्तमेवार्थं प्रकारान्तरेणापि साधयति–"नित्याधिकरणे"ति–

**नित्याधिकरणान्योन्याभावस्य प्रतियोगिता।**
**दृष्टाऽनित्येषु यत्रेष्टा तत्रानित्यत्वमक्षतम् ॥८७॥**

नित्याधिकरणान्योन्याभावस्य = नित्यमाकाशादि अधिकरणं यस्य तादृशो योऽन्योन्याभावः तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावः तस्याऽभावस्य या प्रतियोगिता=प्रतियोगित्वं अनित्येषु= ध्वंसप्रतियोगिषु घटपटादिषु दृष्टा=प्रमाणसम्मता यत्र=येषु सा इष्टा =तार्किकादिवादिसम्मता अस्ति तत्र=तेषु घटादिषु अनित्यत्वम्=विनश्वरत्वम् अक्षतम्=सिद्धमनिवार्यमित्यर्थः। तथाचाऽयं प्रयोगः फलितः—"तार्किकाऽभिमत आत्माऽनित्यो भवितुमर्हति नित्यधर्मिकान्योन्याभावप्रतियोगित्वात् पटवत्" इति। एतेन

"सद्विविक्तत्वं मिथ्यात्वम्" इति मिथ्यात्वलक्षणमप्युक्तं भवति, सति सत्प्रतियोगिकभेदाऽसिद्धेः। भेदश्च प्रतियोगिसमसत्ताको बोध्यः, तेन तत्र कल्पितभेदमादाय न व्यभिचारः।

इदमत्राकूतकम्—"सद्विविक्तत्वं" नाम सत्प्रतियोगिकभेदवत्त्वम्। सत्त्वं च प्रमाणसिद्धत्वम्। प्रमाणत्वं च दोषाऽसहकृतज्ञानकरणत्वरूपं बोध्यम्। अर्थात्–दोषविधया[1] घटादिज्ञाने निमित्तकारणमविद्या, तादृशाऽविद्यानिष्ठकारणताया निरूपकं तत्त्वमस्यादिवेदान्तवाक्याऽजन्यज्ञानम्, तादृशघटादिज्ञानस्य (अयं घटः,अयं पट इत्यादिज्ञानस्य)भ्रमरूपत्वात्। तत्त्वमस्यादिवेदान्तवाक्यजन्यज्ञानन्तु न भ्रमस्तस्याऽबाधितार्थगोचरत्वेन प्रमात्वात्। परन्तु एतल्लक्षणलक्षितं वृत्त्युपहितब्रह्मभिन्नं शुद्धभिन्नम्, अलीकभिन्नञ्च बोध्यम्, अन्यथा[2] वृत्त्युपहितब्रह्मण्यव्याप्त्यापत्तेः तत्र तत्त्वमस्यादिवेदान्तवाक्यात्मकप्रमाणसिद्धभिन्नत्वाभावात् तत्र तु प्रमाणसिद्धत्वमेव[3]। एवम्भूताऽनुमाने[4] एतादृशस्य[5] साध्यत्वे तु दृश्यत्वमपि तादृशब्रह्मालीकाऽविषयकवृत्ति-

---

१—भ्रमत्वावच्छिन्नकारणत्वाद् दोषपदार्थव्याप्यरूपेणेत्यर्थः। तच्च प्रकृतेऽविद्यात्वमेव।

२—सद्विविक्तत्वस्योक्तपरिष्कारानङ्गीकारे।

३—वेदान्तवाक्यात्मकप्रमाणसिद्धत्वमित्यर्थः।

४—"प्रपञ्चो मिथ्या दृश्यत्वात् शुक्तिरजतादिवद्"इत्याकारके प्रयोगे।

५—सद्विविक्तत्वरूपमिथ्यात्वस्येत्यर्थः।

६—वृत्त्युपहितब्रह्मेत्यर्थः। अत्राहुर्विठ्ठलेशोपाध्यायाः—"एतन्मते दृश्यत्वं वृत्तिविषयत्वमात्रम्, तदभावादेव शुद्धब्रह्मणि व्यभिचारवारणे

विषयत्वादिरूपमेव ग्राह्यम्, अन्यथा व्यभिचारापत्तेः ।

ननु—व्यावहारिकघटाद्याकारवृत्तावविद्याया दोषविधया निमित्तकारणत्वे नैव किञ्चिन्मानं पश्याम इति चेद् ? अत्र ब्रूमः—दोषाऽसहकृतज्ञानकरणसिद्धभिन्नत्वरूपं यत् प्रमाणसिद्धभिन्नत्वं, तत्त्वेन, स्वप्नादिवद् घटादीनामपि मिथ्यात्वं सिद्ध्यति स्वाप्नघटादिवत् व्यावहारिकेऽपि तत्र प्रपञ्चे फलतो " विद्वान्नामरूपाद्विमुक्तः " ( मुं० ३ । १ । ८ ) इत्यादिश्रुत्या ब्रह्मज्ञानबाध्यत्वबोधनेन तदाकार-( घटाद्याकार- )वृत्तेर्भ्रमत्वात्, तत्राऽविद्यायाः कामकर्मणोश्च दोषविधया निमित्तकारणत्वस्यावश्यकत्वात् ।

अयमाशयः । द्विविधा ह्यविद्या आवरणशक्तिमती विक्षेपशक्तिमती चेति । तत्र विक्षेपशक्तिमती अविद्या विपरीतकार्यकारिणी, आवरणशक्तिमती त्वस्तिभातिधीप्रतिबन्धिका । एवं रूपायामविद्यायां पित्तादिदोषवन्निमित्तकारणत्वाभ्युपगमेऽपि न किञ्चिद् बाधकं पश्यामः ।

अपि चास्त्ययमेको नियमः—"यद्विशेषयोः कार्यकारण-

---

वृत्तिप्रतिबिम्बिताचिद्विषयतापर्यन्तानिवेशो प्रयोजनाभावात् । एवञ्च वृत्त्युपहितस्य वृत्तिविषयतामात्रेणाज्ञाननिवृत्त्या स्वप्रकाशब्रह्मसाक्षात्कारसम्भवे जडघटादेरिव वृत्तिप्रतिबिम्बितचिद्विषयत्वे प्रयोजनाभावात् वृत्त्युपहिते व्यभिचारप्रसक्तिरतस्तद्विषयकत्वसङ्गतिः । विकल्पाख्यवृत्तिसाधारणरूपेण वृत्तेर्निवेशोऽलीकेऽपि व्यभिचारप्रसक्त्याऽलीकाविषयकत्वस्यापि निवेशसङ्गतिः" इति ।

१—कामशब्देनात्र रागस्य ग्रहणम् ।

२—अविद्याया शक्तिद्वयमित्यर्थः ।

भावस्तत्सामान्ययोरपि" इति यथा तद्घटत्वेन तद्दण्डत्वेन कार्यकारणभावे घटत्वावच्छिन्नम्प्रति दण्डत्वावच्छिन्नस्यापि कार्यकारणभावः। एवमेव पित्तादिविशेषरूपेण परिणताया अविद्यायाः पित्तत्वादिविशेषरूपेण यथा भ्रमत्वावच्छिन्नम्प्रति हेतुत्वसम्भवस्तथा पित्तत्वादिव्यापकीभूताऽविद्यात्वसामान्यरूपेणापि तादृशभ्रमत्वावच्छिन्नं प्रति हेतुता निराबाधा। अविद्यासामान्यरूपे दोषकारणसत्त्वेऽपि प्रातिभासिकभ्रमेषु अन्वयव्यतिरेकाभ्यां पित्तादिदोषविशेषाणां दोषविधया (निमित्तत्वेन) कारणता, व्यावहारिकघटपटादिभ्रमेषु चेन्द्रियसन्निकर्षादीनामेवदोषविधया कारणत्वमास्थेयम्। किञ्च—"वाचस्पति" मते अविद्यायाः कार्यमात्रम्प्रति नोपादानत्वं, किन्तु प्रमातृनिष्ठदोषविधया

(१) यद्यपि वाचस्पतिमतेऽज्ञानाश्रयविषयभेदाभ्युपगमात् अज्ञानाश्रयजीवस्यैव जगत्कारणत्वं युक्तम्, "पुरत्रये क्रीडति यश्च जीवस्ततस्तु जातं सकलं विचित्रम्" (कै० १।१४) "मायान्तु प्रकृतिं विद्यात्" (श्वे० ४।१०) "तत्सृष्ट्वा तदेवानुप्राविशत्" (तै० २।६) "मूढ इव व्यवहरन्नास्ते माययैव" (नृसिंहोत्तरतापिनी ९) इत्यादिश्रुतीनामप्येवं सत्येव स्वारस्यात्, "यतो वा इमानि भूतानि जायन्ते" (तै० ३।१) इति श्रुतिस्तु जीवब्रह्माऽभेदाभिप्रायेणेत्यादि "न्यायरत्नावली" वचनपर्यालोचनायां वाचस्पतिमतेऽपि मायाया उपादानत्वमेवेत्येव प्रतीयते तथापि जीवनिष्ठाऽज्ञानविषयब्रह्मोपादानकं जगत् न जीवोपादानकं "जगद्वाचित्वाधिकरणीय"-(ब्र०सू०१।४।१६) सिद्धान्तविरोधात्। एवमविद्यापि नोपादानं ब्रह्मनिष्ठजगतो व्यधिकरणत्वात्, नहि शरावादिनिष्ठदुग्धादेर्घटादिनिष्ठदध्यादिरूपः परिणामः सम्भवतीति कल्पतर्वादौ वाचस्पत्याशयस्य वर्णितत्वात्तदभिप्रायेणोक्तमिति मन्तव्यम्।

(अद्वैतसिद्धौ विट्ठलेशीयं टिप्पणम्)

निमित्तकारणत्वमित्यस्यार्थस्य कल्पतर्वादौ निर्णीतत्वात्तन्मते मिथ्यात्वमीदृशं सम्भवत्येवेति तन्मतेनैवेदं लक्षणम्बोध्यम् । शुद्धब्रह्मणि तु नातिव्याप्तिस्तस्य सत्प्रतियोगिकभेदवत्त्वाभावात् । विवरणादिमते तु शुद्धब्रह्मण एव दोषाजन्यवृत्तिविषयत्वेन तत्रानतिव्याप्तेः । किञ्च अविद्याया उपादानत्वमेव न तु दोषविधया निमित्तत्वमित्याग्रहेऽपि घटादिज्ञानेष्विन्द्रियसन्निकर्षादीनामेव दोषविधया कारणत्वात्तेषां दोषजन्यत्वात्प्रकृते नाऽनुपपत्तिः। अधिकन्तु गौडब्रह्मानन्द्यां द्रष्टव्यम् ।

ननु—"दोषासहकृते"त्यादिरूपस्य प्रमाणसिद्धत्वस्य कुतो निवेशः ? अबाध्यविषयकधीविषयत्वस्यापि तस्य सम्भवादिति चेन्न प्रमाणसिद्धत्वञ्चाबाध्यत्वव्याप्यमित्यन्यदित्यस्येष्टत्वात्, अबाध्यं शुद्धं ब्रह्म, तस्य शुद्धब्रह्मणो यद्वृत्त्युपहितरूपं तत्त्वस्य व्याप्यं, ततोऽन्यद् बाध्यत्वघटितभिन्नम्, अर्थाद् बाध्यत्वघटितं यदबाध्यत्वं ततोऽतिरिक्तम् ।

अयं भावः—"अबाध्यविषयकधीविषयत्व"निवेशे तु "अबाध्यविषयकधीविषयत्वाश्रयान्यत्वं मिथ्यात्वम्"इति मिथ्यालक्षणं निष्पद्यते । परमेतादृशलक्षणघटकं यद्बाध्यत्वं तस्यैव मिथ्यात्वप्रयोजकत्वे इतरांशस्य वैयर्थ्यमेव । आहुश्च "गौडब्रह्मानन्दीकाराः" "तथाच बाध्यत्वघटितस्य निवेशे बाध्यत्वेतरांशस्यानतिप्रयोजनकतया बाध्यत्वाऽघटितस्यैव निवेशो युक्त इति भावः" इति ।

( शशशृङ्गादौ ) असति, निर्धर्मके ब्रह्मणि चातिव्याप्तिवारणाय "सत्त्वेन प्रतीयमानत्वं" विशेषणं देयम्,असद्ब्रह्मणोर्द्वयोरपि सत्त्वप्रकारकप्रतीत्यविषयत्वात् । ननु—कथं तत्रैतल्लक्षणमतिगतमिति चेच्छृणु—" तत्त्वमस्यादिवाक्यजन्यधीविषयत्वाश्रयान्यत्वं मिथ्यात्वम्" इति पर्यवसिते लक्षणे तत्त्वमस्यादिवाक्य-

जन्यधीविषयत्वं यत्, तत् तत्त्वमस्यादिवाक्यजन्यबुद्ध्युपहिते ब्रह्मण्यपि वर्त्तते, तादृशविषयत्वाश्रयस्तदुपहितं ब्रह्मैव, ततोऽन्यत्वं नाम भिन्नत्वं यथाऽविद्यायां तत्कार्ये प्रपञ्चे चास्ति, तथैवोपहितभिन्नत्वं (शुद्धे) निर्धर्मके ब्रह्मणि शशशृङ्गादावसति(अलीके) च वर्त्तत एवेति तत्राऽतिव्याप्तं तादृशं लक्षणम्। "सत्त्वेन प्रतीयमानत्वे सति" इत्याकारके निवेशे क्रियमाणे तु शुद्धं ब्रह्म न सत्प्रकारकप्रतीतिविषयः (वृत्तिविषयः) स्वप्रकाशत्वाद्, उपहिततादात्म्यान्यभावरूपधर्मानाधारत्वाच्च। अतस्तत्र नातिव्याप्तिः। शशशृङ्गादावलीकेऽपि च सा नास्त्येव, नह्यलीकं वृत्तिविषयः, वृत्तेः सत्त्वेन सदसतोः संसर्गासम्भवात्। अलीकाऽविषयकेणापि विकल्पेन शशविषाणादिपदोक्तिरूपव्यवहारोत्पत्तिसम्भवाच्च। अथवा विकल्पस्याऽसद्विषयकत्वेऽपि नासौ भ्रमः प्रमाणबाध्यविषयस्यैव भ्रमत्वात्, विकल्पश्च न तथा। अतएव "प्रमाणविपर्ययविकल्पनिद्रास्मृतयः" (यो० १।६) इति पातञ्जलं सूत्रमपि सङ्गच्छते। तथाच—विकल्पविषये मिथ्यात्वं नेष्यते दर्शितरीत्या

---

१ अलीकाऽसम्बद्धस्य विकल्पस्य कथं तद्व्यवहारनियामकत्वमत आह—"अलीकाविषयकेणापि" इति। अतएव—"शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" (यो० १।९) इत्युक्तम्। वस्तुशून्यो निर्विषयक इत्यर्थः। कालिकप्रत्यासत्त्या आत्मनिष्ठप्रत्यासत्त्या वा विकल्पासद्व्यवहारयोः कार्यकारणभाव इति भावः। (विठ्ठलेशी)

२ अत्र विठ्ठलेशोपाध्यायाः—"प्रमाणं=प्रत्यक्षादिप्रमाणजन्या, विपर्ययो=दोषजन्या, विकल्पः=शशविषाणादिपदमूला, निद्रा=स्वापः, स्मृतिः=स्मरणं पञ्चवृत्तय इति सूत्रशेषः। अत्र विकल्पस्य पृथक् परिगणनादेवोक्तभ्रमत्वे प्रमाणाधीनत्वस्य बाधे निवेश इति भावः" इति टीकयन्ति।

च तत्राप्यतिगतं लक्षणम्,तस्मात्तद्वारणायोक्तो निवेशः सार्थकः ।

इत्थञ्च—'सद्विविक्तत्वम्' इत्यत्र सत्पदार्थे प्रकारीभूतं सत्त्वं सत्ताजात्यधिकरणत्वं वा, अबाध्यत्वं वा, ब्रह्मरूपत्वं वा ?। नाद्यः घटादावाविद्यकजातेस्त्वयाऽभ्युपगमेनासम्भवः । द्वितीये बाध्यत्वरूपमिथ्यात्वपर्यवसानम्, तथा च तदितरांशवैयर्थ्यमिति भावः । तृतीये–सिद्धसाधनमस्माकमपि मते प्रपञ्चे ब्रह्मस्वरूपस्य भेदाङ्गीकाराद्" इति यदाक्षिप्यते माध्वैस्तदपि व्युदस्तं वेदितव्यम्, अनभ्युपगमादेव ।

नच—"सत्त्वेन प्रतीयमानत्वे सति सद्भिन्नत्वं मिथ्यात्वम्" इत्येव साध्यशरीरं निष्पादितं भवद्भिस्तत्र पूर्वभागस्याऽस्मन्मतेऽपि सत्त्वादांशिकं सिद्धसाधनं दुरुद्धरम्–इति वाच्यम् मिलितसिद्धेरुद्देश्यत्वादिति दत्तोत्तरमेतदद्वैतसिद्धौ प्रथममिथ्यात्वनिरूपणे । एतादृशसत्प्रतियोगिकभेदवत्त्वरूपं यन्मिथ्यात्वं तदेव तार्किकाऽभिमतात्मनां घटादिवदनित्यत्वे हेतुत्वेनोपन्यस्तमिति सूक्ष्मं निरीक्ष्यं सुधीभिः ॥८७॥

सं० अब उक्त अर्थ को प्रकारान्तर से सिद्ध करते हैं—

पदार्थ–नित्याधिकरणान्योन्याभावस्य=आकाशादि नित्य पदार्थ हैं अधिकरण=धर्मी जिसके ऐसा जो अन्योन्याभाव=भेद उसकी प्रतियोगिता=प्रतियोगिता आनित्येषु=अनित्य घटपटादि पदार्थों में दृष्टा=देखी गई है यत्र=जहां पर वह इष्टा=तार्किकादि वादिओं को इष्ट है, तत्र=उन सब पदार्थों में अनित्यत्वम्=अनित्यता अक्षतम्=अनिवार्य है ।

जैसे आकाशादि नित्य पदार्थों में अन्योन्याभावकी प्रतियोगिता तार्किक को इष्ट है वैसे ही वह अनित्य घटादि पदार्थों में भी इष्ट है, एवं घटादिकों की भांति वह प्रतियोगिता जिन स्वमतसिद्ध आत्मादि पदार्थों में अभिमत है उनमें अनित्यत्व अनिवार्य बना रहता है। यहां ऐसा प्रयोग जानना— "तार्किकाभिमत आत्माऽनित्यो भवितुमर्हति अन्योन्याभावप्रतियोगित्वात् घटवत्" = न्यायमतसिद्ध आत्मा अनित्य होने के योग्य है (अर्थात् अनित्य है) अन्योन्याभाव का प्रतियोगी होने से, घट की न्याईं ॥ ८७ ॥

सं०—इत्थं तार्किकमते नित्यवस्तुसिद्ध्यभावमाह—"नैवं तर्कमते" इति—

नैवं तर्कमते नित्यं किञ्चिद्वस्तु प्रसिद्ध्यति ।
किं चेदं साधकासिद्धेः सर्वथा नोपपद्यते ॥ ८८॥

एवम्=उक्तेन प्रकारेण तर्कमते=न्यायादिमते किञ्चित्=किञ्चिदपि वस्तु=वस्तु नित्यम्=त्रैकालाबाध्यं न प्रसिध्यति=कोऽपि परमार्थभूतः पदार्थः सिद्धो न भवतीत्यर्थः । किञ्च=अपिच इदम्=तर्कमतम् साधकाऽसिद्धेः=साधकं चिद्वपुरात्मा तस्याऽसिद्धेः सर्वथा=सर्वप्रकारेणापि येन केनाऽपि तर्कादिना प्रकारेण न उपपद्यते=नैव युक्तं भवति, तर्काप्रतिष्ठानात् तद्युक्त्यैव तन्मते चैतन्यासिद्धेश्चेत्यर्थः ॥ ८८ ॥

(१) स्वमतसिद्ध ।

सं—न्यायमत में नित्यपदार्थ की सिद्धि का अभाव कथन करते हैं—

पदार्थ—एवम्=दर्शित रीति के अनुसार तर्कमते=न्यायमत में किञ्चित्=कोई भी वस्तु=पदार्थ नित्यम्=त्रैकालाबाध्य न प्रसिद्ध्यति=सिद्ध नहीं होता। किञ्च=और इदम्=यह तर्कमत साधकाऽसिद्धेः=सर्वसाधक चेतन स्वरूप आत्मा की सिद्धि न होने के कारण सर्वथा=सर्वप्रकार से भी न उपपद्यते=युक्तिसङ्गत सिद्ध नहीं हो सकता।

सार यह है कि शुष्क तर्क की प्रतिष्ठा न होने से और न्यायमतसिद्ध तर्क द्वारा ही उनके मत में चेतन पदार्थ सिद्ध न हो सकने से तार्किकों का मत समीचीन नहीं है ॥८८॥

यथाच तर्कमते कथमपि चैतन्यं न सिद्ध्यति तथोपपादयति 'सप्तानामपि" इति—

**सप्तानामपि साधर्म्यं चिद्भास्यत्वमपीष्यते।**
**चिच्चिदन्तरभास्येति जडं सर्वमुपास्थितम् ॥८९॥**

सप्तानाम् अपि=द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाख्यानां सप्तसङ्ख्यानां पदार्थानां चिद्भास्यत्वमपि=ज्ञेयत्वरूपं साधर्म्यम् अपि=समानो धर्मोऽपि इष्यते=मन्यते तार्किकैरिति शेषः। तत्र ज्ञेयत्वं च ज्ञानविषयत्वमेव, एवं ज्ञानमपि तेषां मते घटादिवद्रूपादिवच्च जडमेव, तथा सति चित्=संवित् (ज्ञानं)

१ "सप्तानामपि साधर्म्यं ज्ञेयत्वादिकमुच्यते" (कारिकावली१।१३)

चिदन्तरभास्या=संविदन्तरप्रकाश्या अर्थात् सापि ज्ञेया स्यात्, एवमेव संविद्भासिका संविदपि ज्ञेया इति=इत्येवम्प्रकारेण उत्तरोत्तरं सर्वम=सर्वमपि पदार्थजातं सप्तापि पदार्था इत्यर्थः जडम्=अचेतनमेव उपस्थितम्=प्राप्तं न्यायमते स्वयम्प्रकाशस्वरूपस्य कस्यापि ज्ञानस्यानङ्गीकारादिति भावः ॥ ८९ ॥

सं—अब न्यायमत में चेतन पदार्थ का अभाव कथन करते हैं, अर्थात् ८९ से लेकर ९७ पर्यन्त पदार्थ मात्र की जडता को दर्शाते हैं—

पदार्थ—सप्तानाम् अपि=( द्रव्य, गुण, कर्म सामान्य, विशेष, समवाय,अभाव इन ) सब सात पदार्थों का चिद्भा-स्यत्वम्=ज्ञेयत्वरूप अपि=भी साधर्म्यम्=समानधर्म इष्यते= नैयायिकों ने स्वीकार किया है ( उनके इसी नियम के अनुसार ) चित्=चैतन्य पदार्थ चिदन्तरभास्या=ज्ञानान्तर ( अन्य ज्ञान ) से प्रकाश होने योग्य है ( इसी लिए वह व्यवसाय ज्ञान को अनुव्यवसाय से प्रकाश्य मानते हैं ), इति=इस प्रकार ( न्यायमत में ) सर्वम्=पदार्थमात्र ही जडम्=जडरूप उपास्थितम्=सिद्ध होता है ॥ ८९ ॥

ननु—ज्ञानाधिकरणे आत्मनि चेतने स्वीकृते कथं न्यायमते पदार्थमात्रस्य जडतोद्घोषणे तव साहसिक्यमित्या-शङ्क्याह "सर्वम्" इति—

सर्वं ग्राह्यधिया ग्राह्यमित्येवं तर्कितं यतः ।
स्वतोऽसिद्धं जडं सर्वं प्रतिज्ञातं भवेत्ततः ॥ ९० ॥

यतः=यस्मात् कारणात् सर्वम्=पदार्थमात्रं ग्राह्यधिया=ज्ञेयत्वबुद्ध्या (एव) ग्राह्यम्=ज्ञेयमस्तीति शेषः, इत्येवम्=एवम्प्रकारेण तर्कितम्=ऊहितं नैयायिकैः। ततः=तस्मादेव कारणात् स्वतः=स्वयम् असिद्धम्=अप्रकाशम् परप्रकाशापेक्षत्वात् स्वप्रकाशत्वाविहीनम् सर्वम्=पदार्थमात्रं जडम्=अचेतनमेव तैः प्रतिज्ञातम्=साध्यत्वेन निर्दिष्टं भवेत्=स्यात्। पदार्थमात्रस्य ज्ञेयत्वोक्तेर्ग्राह्यत्वप्रतिज्ञानात् स्वतो ग्रहीतुरभावात्तार्किकनये सर्वं जडमेवायातं भवतीति न मे तन्मतविषयकजडतोद्घोषणे साहसिक्यमिति भावः॥ ९०॥

सं०—ननु ज्ञानाधिकरण आत्मा को चेतन मानने से न्याय मत में पदार्थमात्र को जड कथन करना तुम्हारा साहस है ? इस आशङ्का का समाधान करते हैं—

पदार्थ—यतः=जिस कारण से सर्वम्=पदार्थ मात्र को ही ग्राह्यधिया=ग्राह्य ( ज्ञेयत्व ) बुद्धि से ग्राह्यम्, इति, एवम्=ग्राह्यरूप से ही ( नैयायिकों ने ) तर्कितम्=तर्कित किया है अर्थात माना है, ततः=इसी कारण स्वतः=स्वरूप से असिद्धम्=सिद्धिशून्य सर्वम्=पदार्थ मात्र ही उन के मत में जडम्=जडरूप प्रतिज्ञातम्=प्रतिज्ञात भवेत्=होता है।

सार यह कि—न्याय मत में कोई स्वयंप्रकाश पदार्थ नहीं माना, किन्तु पदार्थमात्र का ज्ञेयत्वरूप साधर्म्य कथन करते हुए आत्मा को भी ज्ञेय कहा है अर्थात् घटपटादि की न्याईं आत्मा भी परप्रकाश्य माना है। जब उन के मत में

पदार्थमात्र ही परप्रकाश्य हुआ तो आत्मा भी घटपटादि की न्याईं जडरूप सिद्ध होता है चेतन नहीं ॥९०॥

न्यायमते स्वप्रकाशवस्त्वभावमेव स्फुटयति "नित्यकूटस्थे"ति—

नित्यकूटस्थचिन्मात्रः साक्षी सप्तविलक्षणः ।
परो नाङ्गीकृतो यस्मान्न सिद्धिः परतोऽप्यतः ॥९१॥

यस्मात्=कारणात् नित्यकूटस्थचिन्मात्रः=नित्यस्त्रैकालाबाध्यः कूटस्थो निर्विकारश्चासौ चिन्मात्रो ज्ञानघनः साक्षी=साक्षाद् द्रष्टा जीवेश्वरानुगतसर्वानुसन्धातृचैतन्यमात्रस्वरूपः सप्तविलक्षणः=द्रव्यादिसप्तपदार्थेभ्यो विभिन्नस्वभावः परः आत्मा न=नैव अङ्गीकृतः=स्वीकृतः, अतः=अत एव हेतोः परतः=प्रमाणान्तरेण अपि=तस्य न सिद्धिः=प्रमितिर्न भवितुमर्हतीत्यर्थः । परस्यापि साधकस्य तेषां मते स्वतः स्फुरतिशून्यतया जडत्वात्स्वयम्प्रकाशस्वभावस्य सर्वसाधकस्याभावाच्चेति भावः ॥९१॥

सं०—न्यायमत में स्वप्रकाशस्वभाव वस्तु के अभाव को स्फुट करते हैं—

पदार्थ—यस्मात्=जिस कारण से नित्यकूटस्थचिन्मात्रः=नित्य बाधशून्य निर्विकार चेतनस्वरूप सप्तविलक्षणः=द्रव्यादि सात पदार्थों से विलक्षण साक्षी=साक्षात् द्रष्टा स्वयम्प्रकाश परः=आत्मा नैयायिकों ने न अङ्गीकृतः=स्वीकार नहीं किया, अतः=अतएव परतः=प्रमाणान्तर से अपि=भी उस की न सिद्धिः=सिद्धि नहीं हो सकती ।

सार यह कि—यदि तार्किक रीति से आत्मा का साधक कोई प्रमाण मानेंगे तो वह जड होने से उस का साधक= प्रकाशक कैसे होगा ? यदि वह आत्मा को स्वयम्प्रकाश स्वीकार करें तो उन के मत में अपसिद्धान्त की आपत्ति होती है इस प्रकार उनके मत में उभयतः पाशारज्जु अनिवार्य है ॥ ९१ ॥

न्यायप्रक्रिययैव तन्मते स्वप्रकाशवस्त्वभावे जगदान्ध्यप्रसङ्गोऽप्यनिवार्य इत्याह—"असिद्धे"ति—

**असिद्धव्यवसायेन व्यवसेयो हि साध्यते ।**
**व्यवसायस्त्वसिद्धानुव्यवसायेन साध्यते ॥९२॥**

हि=यतः असिद्धव्यवसायेन=असिद्धेन अज्ञातेनव्यवसायेन अर्थात् "अयं घटः अयं पटः" इत्याकारकेण प्रथमज्ञानेन व्यवसेयः= घटपटादिर्ज्ञेयः साध्यते=प्रमीयते तार्किकैरिति शेषः, एवमेव असिद्धानुव्यवसायेन तु=असिद्धेनैव स्वतःसिद्धिशून्येनैवानुव्यवसायेन ज्ञानविषयकज्ञानेन "घटमहञ्जानामि" "पटमहञ्जानामि" इत्याकारकेण द्वितीयेन ज्ञानेन व्यवसायः=प्रथमज्ञानं साध्यते=प्रमीयते, परं स्वयम्प्रकाशस्वभावता तु कस्यापि न स्वीक्रियते । तदनया प्रक्रियया सर्वार्थसिद्धिकरन्तु न किञ्चिदपि तैः स्वीकृतमिति सुतरां तन्मते जगदान्ध्यप्रसङ्ग इति भावः ॥ ९२ ॥

सं०—अब न्याय की प्रक्रिया से ही उन के मत में स्वप्रकाश वस्तु का अभाव कथन करते हुए जगदान्ध्यप्रसङ्ग दोष दिखाते हैं—

पदार्थ—हि=जिस कारण से (तार्किकों ने) असिद्धव्यवसायेन=असिद्ध जो व्यवसाय [ अर्थात् "अयं घटः" ( यह घट है ) "अयं पटः" ( यह पट है ) इत्याकारक जो प्रथम ज्ञान ] उस के द्वारा व्यवसेयः=घटपटादि ज्ञेय विषय को साध्यते=सिद्ध किया है, एवमेव असिद्धानुव्यवसायेन तु=असिद्ध=स्वतःसिद्धिशून्य अनुव्यवसायनामक ज्ञान के द्वारा (अर्थात् "घटमहञ्जानामि" मैं घट को जानता हूं इत्याकारक ज्ञान को विषय करने वाले द्वितीय ज्ञान से ) व्यवसायः=प्रथम ज्ञान साध्यते=सिद्ध किया है।

नैयायिकों की इस प्रक्रिया में किसी ज्ञान को भी स्वप्रकाशस्वरूप नहीं माना गया इसलिए प्रकाशस्वरूप चेतन के न होने से न्यायमत में जगदान्ध्यवादप्रसङ्ग दोष जानना चाहिये। जगत में किसी चेतन पदार्थ की सिद्धि न बन सकने से वस्तुमात्र के ज्ञानाभाव का नाम "जगदान्ध्यवाद-प्रसङ्ग" जानना ॥ ९२ ॥

स्वप्रक्रिययैव तर्कमते आत्मवस्तुनोऽभावः पर्यवस्यतीत्याह-"इत्येषा" इति—

**इत्येषा प्रक्रियाऽसिद्धसाधनाभ्यूहिता यतः ।**
**सर्वार्थसाधकाऽसिद्धिः स्वयं व्युत्पादिता ततः ॥९३॥**

१—वाक्यरचना के लिये ९२ और ९३ इन दोनों श्लोकों के 'पदार्थ' को इकट्ठा पढ़ना चाहिये।

यतः=यस्मात्कारणात् इत्येषा=उक्तप्रकारेण दर्शिता एषा प्रक्रिया=न्यायप्रक्रिया असिद्धसाधना=असिद्धं साधनं यस्यां सा एवंरूपा साधनशून्या अभ्यूहिता=तर्किता तार्किकैः, ततः=तस्मात् कारणात् तैः सर्वार्थसाधकाऽसिद्धिः=सर्वस्य अर्थस्य जडात्मकस्य यत्साधकं स्वयम्भातं विज्ञानं तस्य असिद्धिः सिद्ध्यभावः,स्वयम्= स्वयमेव व्युत्पादिता=समाहिता स्वीकृतेति यावत् ।

इत्थञ्च न्यायमते आत्मवस्तुनोऽभाव एवं पर्यवसितो भवतीति भावः ॥ ९३ ॥

सं०—न्याय की प्रक्रिया से ही न्यायमत में आत्मवस्तु का अभाव सिद्ध है—

पदार्थ—यतः=(और) जिस कारण से इति एषा=उक्त प्रकार की यह असिद्धसाधना=असिद्धसाधन (अर्थात् जिस में कोई निर्दुष्ट साधन नहीं है ऐसी) प्रक्रिया=न्यायप्रक्रिया (नैयायिकों ने) अभ्यूहिता=कल्पित की है ततः=इस कारण उन्होंने सर्वार्थसाधकासिद्धिः=पदार्थमात्र के साधक स्वयं प्रकाश आत्मा की सिद्धि का अभाव स्वयम्=स्वयमेव व्युत्पादिता=सिद्ध किया है।

सार यह है कि दर्शितरीति के अनुसार न्यायमत में आत्मवस्तु का अभाव ही सिद्ध होता है ॥ ९३ ॥

ननु तर्कनये ज्ञानाधिकरणेऽप्यात्मनि चेतने स्वीक्रियमाणे कथञ्जडत्वं वक्षीति महांस्ते व्यामोह इत्याशङ्क्याह "चिद्धास्यत्वम्" इति—

चिद्भास्यत्वमचिद्रूपेष्वीक्ष्यमाणं घटादिषु ।

चित्यङ्गीकुर्वता तस्या जाड्यमेव प्रसाधितम् ॥९४॥

शृणु यथा तवाभिमतायां चिति जाड्यमायाति—अचिद्रूपेषु=चिद्भिन्नेषु जडेषु घटादिषु=घटपटादिपदार्थेषु ईक्ष्यमाणम्=प्रत्यक्षज्ञानविषयीभूतं प्रमाणसिद्धं वा चिद्भास्यत्वम्=चिता प्रकाश्यत्वं=चिद्विषयत्वं यदस्ति तदुभयवादिसम्मतमित्यर्थः । इदं चिद्भास्यत्वं चिति=आत्मनि अङ्गीकुर्वता = स्वीकुर्वता नैयायिकेन तस्याः=चितेः जाड्यम् एव=जडत्वमेव प्रसाधितम्= समाहितम् तस्माद्यावदात्मनश्चैतन्यस्वरूपत्वं नाङ्गीक्रियेत तावत्तस्यात्मत्वमेव न सिद्ध्येत्, जडस्य परिच्छिन्नस्य परतः प्रकाश्यस्याऽनात्मत्वादिति । अत्रायं न्यायाकारः—" विमता चितिर्जडा भवितुमर्हति चिद्भास्यत्वात् घटादिवद्" इति । एवञ्च तवाभिमतस्यात्मनस्तवैव युक्त्याऽनात्मत्वं प्रदर्शयतो मम नास्ति कोऽपि व्यामोहः, तवैवाऽसौ महानिति तत्त्वम् ॥९४॥

शङ्का—ननु ज्ञान का आश्रयभूत आत्मा कैसे जड हो सकता है तुम्हारा ऐसा कथन तुम्हारे महान् व्यामोह को प्रकट करता है ? उत्तर—

पदार्थ—अचिद्रूपेषु = चेतन से भिन्न जड घटादिषु = घटपटादि पदार्थों में ईक्ष्यमाणम् = प्रत्यक्षादिप्रमाणसिद्ध चिद्भास्यत्वम् = चेतन ज्ञान की विषयता (जो उभयवादी सम्मत

---

(१) आत्मनश्चैतन्यस्वरूपाङ्गीकारे तु नैयायिकस्यापसिद्धान्तापत्तिरपीति भावः ।

है इसी चिद्भास्यत्व = ज्ञानविषयता) को चिति = चेतन आत्मा में अङ्गीकुर्वता = स्वीकार करते हुए तार्किक ने तस्याः = उस चिति की अर्थात् चैतन्यस्वरूप आत्मा की जाड्यम् = जडता को एव = ही प्रसाधितम् = सिद्ध किया है।

भाव यह है कि—जब तक आत्मा को स्वयम्प्रकाश नहीं माना जाता तब तक उसका आत्मत्व सिद्ध ही नहीं हो सकता, क्योंकि परप्रकाश्य, परिच्छिन्न, जड घटादि पदार्थ अनात्मरूप देखे गए हैं, इस प्रकार न्यायमतसिद्ध युक्तिद्वारा ही उनके मत में आत्मा की अनात्मता स्पष्ट है। यदि अनात्मत्व आपत्ति के भय से नैयायिक आत्मा को स्वयम्प्रकाश मान ले तो अपसिद्धान्तापत्ति दोष बना रहेगा। इस लिये वेदान्ती का न्यायाभिमत आत्मा को अनात्मा (सिद्ध) कथन करना कदापि असङ्गत नहीं, और नाही उसका इस अर्थ में कोई व्यामोह या विद्वेष है।

यहां अनुमान का आकार ऐसा है—"विमता चितिर्जडा भवितुमर्हति चिद्भास्यत्वाद् घटादिवत्" = न्यायमतसिद्ध चेतन (आत्मा) जड है, चैतन्यद्वारा प्रकाश्य होने से, घटादि पदार्थों की न्याईं। यहां पर "जो २ पदार्थ चिद्भास्य = चेतन द्वारा प्रकाश्य, होता है वह सब जड ही होता है जैसे घटादिक" ऐसा व्याप्ति का आकार जानना ॥९४॥

ननु—भवत्प्रयोगे "ज्ञानाऽनधिकरणत्वम्" उपाधिः तस्य जडेषु घटादिषु साध्यव्यापकत्वात्, आत्मनि ज्ञेये च साधना-व्यापकत्वादिति शङ्कमानम्प्रति व्याघातं दर्शयति "प्रकाशान्तर-सापेक्षः" इति—

**प्रकाशान्तरसापेक्षः प्रकाशो यस्य जायते ।**
**पुनः प्रकाशरूपोऽसावित्येतद्व्याहतं वचः ॥९५॥**

यस्य=यस्य कस्यापि वस्तुनः प्रकाशः=बोधः प्रकाशान्तर-सापेक्षः=बोधान्तरमपेक्षमाणः जायते=उत्पन्नो भवति, अर्थात् यद्विषयकं ज्ञानं ज्ञानान्तरापेक्षम्भवति असौ=तद्वस्तु पुनः=पुन-रपि=ज्ञानान्तरापेक्षप्रकाशवत्त्वेऽपि प्रकाशरूपः=स्वयम्प्रकाशोऽस्ति इति=एवम्प्रकारम् एतद्वचः=इयमुक्तिः व्याहतम्=वदतोव्याघातदोष-दुष्टेत्यर्थः । "मम मुखे जिह्वा नास्ति" "वन्ध्यासुतोऽहमस्मि" इति वाक्यवत् "प्रकाशान्तरापेक्षं ज्ञानं स्वयम्प्रकाशम्" इति वाक्य-मप्यप्रामाणिकमिति भावः ।

इदमत्राकूतकम्—सिद्धान्त्यनुमाने योऽयं वादिना "ज्ञाना-नधिकरणत्वम्" इत्युपाधिरुद्भावितः तत्रोपाध्यभावेन साध्या-भावानुमाने अर्थात् "विमता चितिरजडा ज्ञानाधिकरणत्वात् व्यतिरेके यथा घटादिः" इत्येवं स्थापनायां क्रियमाणायां "चित्स्व-रूपत्वम्" उपाधिरायाति । तस्याऽजडायां चिति साध्यव्यापक-त्वात् ज्ञानाधिकरणे चात्मनि[1] साधनाव्यापकत्वाच्च । एवञ्च पूर्वो-द्भावित उपाधिरनुपाधिरेव । चित्स्वरूपत्वञ्च स्वयम्प्रकाशकत्वम्, अवेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वमित्यन्यदेतत् । इत्थं स्वय-म्प्रकाशे प्रकाशान्तरसापेक्षत्वमङ्गीकुर्वाणस्य नैयायिकस्य मते-ऽनुकूलतर्काभावः फलतीति शिवम् ॥९५॥

---

१—"तार्किकाभिमते" इति शेषः ।

सं०—अब तार्किक मत में "वदतोव्याघात" दोष कथन करते हैं—

पदार्थ—यस्य=जिस पदार्थ का प्रकाशः=ज्ञान प्रकाशान्तरसापेक्षः=अन्य ज्ञान की अपेक्षा करता हुआ जायते=उत्पन्न होता है असौ=वह ज्ञान पुनः=पुनः प्रकाशरूपः=प्रकाशस्वरूप है इति एतत् वचः=इस प्रकार का यह वाक्य व्याहतम्="वदतोव्याघात" दोष युक्त है।

अर्थात् यदि तार्किक वस्तुप्रकाशक ज्ञान को भी ज्ञेय माने तो घटादि की न्याईं उसमें जडत्वापत्ति स्पष्ट सिद्ध है और "मेरे मुख में जिह्वा नहीं" इस वाक्य की न्याईं वदतोव्याघात दोष भी आता है।

यहां पर पूर्वपक्षी का यह अभिप्राय है कि "विमता चितिर्जडा भवितुमर्हति चिद्भास्यत्वाद्"–इत्याकारक सिद्धान्ती प्रदर्शित अनुमान में "ज्ञानाऽनधिकरणत्व" उपाधि है, क्योंकि वह घटादि जड पदार्थों में वर्तमान होने से साध्यव्यापक है और तार्किकाभिमत ज्ञेय आत्मा में ज्ञानाधिकरणत्व के होने से साधनाऽव्यापक है।

इस पर सिद्धान्ती का यह समाधान है कि–"यदि उपाधि के अभाव द्वारा साध्याभाव का अनुमान करने पर

कोई अन्य उपाधि प्राप्त होवे तो प्रथम अनुमान जो सोपाधिक किया गया है वह निरुपाधिक समझा जाता है"। इस नियम के अनुसार नैयायिक के पक्ष में उपाधि के अभाव से साध्याभाव के अनुमान का ऐसा स्वरूप होगा–"विमता चितिरजडा ज्ञानाधिकरणत्वात् व्यतिरेके यथा घटादिः" इति । परन्तु इस अनुमान में "चित्स्वरूपत्व" उपाधि सिद्धान्ती की ओर से दी जाती है–क्योंकि चेतन में उसकी साध्यव्यापकता है, परन्तु नैयायिकाभिमत ज्ञानाधिकरण आत्मा में साधनाऽव्यापकता है । नैयायिक आत्मा को ज्ञानाधिकरण मानकर भी चेतनस्वरूप नहीं मानता । जो स्वयंप्रकाश हो वही चित्स्वरूप होता है । इस प्रकार न्यायमत में "आत्मा स्वयम्प्रकाश नहीं और चेतन है" ऐसा वदतोव्याघात आता है और सिद्धान्ती का अनुमान निर्दुष्ट रहता है ॥ ९५ ॥

उक्तमेवार्थं स्फुटयति—"स्वभिन्नम्" इति ।

**स्वभिन्नं स्वप्रकाशाय यः प्रकाशमपेक्षते ।**
**स सर्वोऽपि जडो दृष्टो न चान्यस्तर्कसम्मतः ॥९६**

यः=यः कोऽपि पदार्थः स्वप्रकाशाय=स्वाऽवबोधाय स्वरूपस्फोरणाय स्वभिन्नम्=स्वातिरिक्तं प्रकाशम्=ज्ञानम् अपेक्षते=आश्रयते सः सर्वः अपि=सः सर्वोऽपि पदार्थो घटादिः जडः=

चिद्भिन्नोऽचेतन एव दृष्टः=ज्ञातः अन्यः=चिद्भिन्नः कोऽपि पदार्थः तर्कसम्मतः=युक्तियुक्तः नच=नैव स्वप्रकाश इत्यर्थः। अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वलक्षणं स्वप्रकाशत्वं चित्येव घटते नतु परप्रकाश्येषु वेद्येषु घटादिपदार्थमात्रेष्विति भावः ॥९६॥

सं०—अब उक्त अर्थ को ही स्फुट करते हैं—

पदार्थ—यः=जो कोई पदार्थ स्वप्रकाशाय=अपने प्रकाश के लिये स्वभिन्नम्=स्वभिन्न प्रकाशम्=प्रकाश=ज्ञान की अपेक्षते=अपेक्षा करता है सः सर्वः अपि=वह सब ही जडः=जड दृष्टः=देखा गया है, अन्यः=चिद्भिन्न[1] कोई भी दूसरा पदार्थ तर्कसम्मतः=युक्तियुक्त अर्थात् स्वप्रकाश सिद्ध नच=नहीं हो सकता।

अर्थात् "अवेद्य होने पर जो अपरोक्ष व्यवहार की योग्यता वाला हो वही स्वप्रकाश है" यह स्वप्रकाश का लक्षण न्यायमत में सङ्गत न होने से उन के आत्मा की जडता ही सिद्ध होती है ॥९६॥

१—केचित्तु—अन्यः च=जडभिन्नः स्वप्रकाशश्च कोऽपि पदार्थः तर्कसम्मतः=तर्कशास्त्राभिमतो न=नैवास्तीति शेषः। अतस्तत्पक्षे सर्वोऽपि पदार्थो जड एवेति भावः—इत्येवं व्याख्यान्ति।

२—कई एक सज्जन इस श्लोक के चतुर्थ पाद का अर्थ इस प्रकार करते हैं:-अन्यः च=और जडभिन्न स्वप्रकाश कोई भी पदार्थ तर्कसम्मतः=तर्कशास्त्र को अभिमत न=नहीं है। इस लिए तर्कशास्त्रानुगामियों के मत में सब पदार्थ जड ही सिद्ध होते हैं।

सम्प्रति "किञ्चेदं साधकासिद्धेः" (१।८८) इत्यादिना उपक्रमितं प्रकरणमुपसंहरति—"इत्थम्" इति—

**इत्थं सप्तपदार्थानां सिद्धं जाड्यं यतस्ततः।**
**सर्वार्थसाधकाऽसिद्धिरुक्ता तर्कमते स्थिता ॥९७॥**

यतः=येन हेतुना इत्थम्=अमुना प्रकारेण दर्शितरीत्या सप्तपदार्थानाम्=न्यायाभिमतानां सप्तानामपि पदवृत्तिविषयाणां पदार्थानां जाड्यम्=जडत्वमेव सिद्धम्=निष्पन्नम् ततः=तस्मात् कारणात् तर्कमते=(न्यायदर्शने) नैयायिकानां नये उक्ता=पूर्वोक्ता सर्वार्थसाधकाऽसिद्धिः=पदार्थमात्रप्रकाशकस्य ज्ञानस्य असिद्धिरेव स्थिता=पर्यवसिता भवतीत्यर्थः ॥ ९७ ॥

सं०—अब (१।८८) श्लोक से आरम्भ किये अर्थ का उपसंहार करते हैं—

पदार्थ—यतः=जिस कारण से इत्थम्=इस प्रकार दर्शितरीति के अनुसार सप्तपदार्थानाम्=न्यायमत सिद्ध द्रव्यादि सप्त पदार्थों की जाड्यम्=जडता ही सिद्धम्=सिद्ध होती है ततः=इस हेतु से तर्कमते=तर्कमत में उक्ता=पूर्वोक्त सर्वार्थसाधकासिद्धिः=पदार्थमात्र के प्रकाशक ज्ञान की असिद्धि ही स्थिता=(स्थित) पर्यवसान को प्राप्त होती है ॥ ९७ ॥

प्रकारान्तरेणापि तर्कमतस्यायौक्तिकत्वमाह—"व्यवसायः" इति—

**व्यवसायोऽनुभूतश्चेत्तर्हि स्वेन परेण वा।**
**स्वकालेऽप्यन्यकाले वा सर्वथैवाप्यसङ्गतम् ॥९८॥**

चेत्=यदि व्यवसायः=प्रथमज्ञानं अनुभूतः=ज्ञातः तर्हि=तत्र पृच्छामो वयं यत् सोऽयं व्यवसायः स्वेन=स्वरूपेणैव परेण वा=अथवा अन्येन केनचित् अनुभूत इति विकल्पद्वयम् । तत्रापि स्वकाले=स्वस्थितिकाले अपि वा=अथवा अन्यकाले=स्वस्थितिकाल-भिन्नकाले (अनुव्यसायकाले) अनुभूत इति सर्वथा एव=सर्वेष्वपि पक्षेषु असङ्गतम्, अपि=सङ्गतिशून्यमेव युक्तिविकलमेव तव दर्शनमित्यर्थः ॥ ९८ ॥

सं०—अब प्रकारान्तर से भी न्यायमत की अयुक्तता कथन करते हैं—

पदार्थ—चेत्=यदि व्यवसायः=प्रथमज्ञान अनुभूतः=अनुभूत (घटादि की भांति ज्ञेय) मानते हो तर्हि=तो (उस में प्रष्टव्य यह है कि वह) स्वेन=स्वरूप से ही अनुभूत=ज्ञात है वा=अथवा परेण=किसी अन्यद्वारा ज्ञात है किञ्च—स्वकाले=स्वस्थितिकाल में ज्ञात है अपि वा=अथवा अन्यकाले=अन्यकाल में ज्ञात है ? सर्वथा एव असङ्गतम् अपि=सर्व प्रकार से ही तर्कमत युक्तियुक्त न होने से असङ्गत है ॥९८॥

तदेवाऽसङ्गत्वं विशदयति—"आद्ये" इति—

आद्ये क्षणे भवेज्जन्म द्वितीये कार्यकारिता ।
तृतीये तु भवेद्ध्वंस इत्येवं तर्कितं यतः ॥९९॥

यतः=यस्मात् कारणात् इति एवं तर्कितम्=एवंरूपेण तर्कितमत एवाऽसङ्गतम्,किन्तद्रूपं येनाऽसङ्गतमित्याह-आद्ये क्षणे=प्रथमे क्षणे

जन्म=ज्ञानस्य उत्पत्तिः भवेत्=भवतीत्यर्थः, द्वितीये=द्वितीयस्मिन्क्षणे कार्यकारिता=घटादिविषयप्रकाशरूपं कार्यकारित्वं ज्ञानस्य, तृतीये तु=तृतीयस्मिन् क्षणे ध्वंसः=नाशः भवेत् इतीयं भवतां प्रक्रियाऽस्ति यतोऽतोऽसङ्गतमेव तर्कसम्मतं मतमित्यर्थः ॥९९॥

सं०—तार्किकमत की अयुक्तता को विशद करते हैं—

पदार्थ—आद्ये क्षणे=प्रथम क्षण में जन्म=ज्ञान की उत्पत्ति भवेत्=होती है द्वितीये=दूसरे क्षण में कार्यकारिता=घटादि विषयप्रकाशरूप कार्य होता है, तृतीये तु=और तृतीय क्षण में ध्वंसः=ज्ञान का नाश भवेत्=हो जाता है, यतः=जिस कारण से इति एवं तार्कितम्=तुम्हारी ऐसी ऊहा (तर्कणा) है अतएव तुम्हारी प्रक्रिया अयुक्त है ( जैसा कि—अगले श्लोक में दर्शाते हैं) ॥ ९९ ॥

दर्शितन्यायप्रक्रियायां दोषं प्रसञ्जयति–"आद्ये पक्षे" इति—

**आद्ये पक्षे प्रसज्जेरन्स्वस्यैव कर्तृकर्मता ।**
**भावनास्मरणाभावस्वत्यागपरसङ्क्रमाः ॥१००॥**

आद्ये पक्षे=प्रथमे पक्षे अर्थात् "व्यवसायज्ञानं स्वस्थितिकाले स्वेनैव प्रकाश्यते" इत्यस्मिन्पक्षे स्वस्य एव कर्तृकर्मता-रूपो दोषः प्रसज्जेत, स्वप्रकाशनक्रियां प्रति स्वमेव व्यवसायज्ञानं कर्तृ, तदेव प्रकाशविषयत्वेन कर्मेति कर्तृकर्मविरोधः प्राप्तो भवेत्,नहि तदेव तत्प्रति कर्म कर्तृ च दृष्टं स्यादिति प्रथमो दोषः किञ्च--भावनास्मरणाभावस्वत्यागपरसङ्क्रमाः=भावनाभावादयोऽपि दोषाः प्रसज्जेरन्=प्रसक्ता भवेयुः। तत्र द्वितीयो भावनाभावो दोषः,अर्थात्

पूर्वानुभवजन्यः स्मृतिहेतुः संस्कारविशेषो "भावना"। तस्या अभावः प्रसक्तो भवति अनुभवितृज्ञानस्य नाशे तदाश्रितसंस्कारस्य स्थैर्यायोगात् यथा विज्ञानवादिनां नये। भावनाभावे च स्मरणाभावस्तृतीयो दोषः स्मरणस्य संस्कारजन्यत्वात्, एवं सति स्वत्यागः स्वसिद्धान्तस्य परित्यागश्चतुर्थो दोषः, तथा—परसङ्गमः परमतस्य विज्ञानवादस्य प्राप्तिरूपः पञ्चमो दोषश्च प्रसज्यते, विज्ञानवादिनयेऽपि संस्कारादेः स्थिराधारस्य कस्यचिदनभ्युपगमादिति भावः ॥१००॥

सं०—उक्त न्यायप्रक्रिया में दोषापादन करते हैं—

पदार्थ—आद्ये पक्षे=प्रथम पक्ष में अर्थात् "व्यवसाय ज्ञान स्वस्थितिकाल में आप ही प्रकाशता है" इस पक्ष में स्वस्य एव कर्तृकर्मता=स्व को कर्म तथा कर्त्ता होने से कर्त्तृकर्मतारूप दोष प्रसक्त होता है [ क्योंकि स्वप्रकाशन क्रिया के प्रति आप ही व्यवसाय ज्ञान कर्त्ता हुआ, और प्रकाशन क्रिया के प्रति विषय होने से आप ही कर्म है, परन्तु एक वस्तु का एक क्रिया के प्रति कर्त्तृत्व और कर्मत्व दोनों एक साथ सम्भव नहीं। ] किञ्च—भावनास्मरणाभावस्वत्यागपरसङ्गमाः=भावनाभाव, स्मरणाभाव, स्वमतत्याग और परमतप्रवेशरूप अनेक दोष प्रसज्जेरन्=प्रसक्त होते हैं।

---

१–भावनाख्यस्तु संस्कारो जीववृत्तिरतीन्द्रियः।
उपेक्षानात्मकस्तस्य निश्चयः कारणं मतम् ॥
( कारिकावली १६० ॥ )

तथाहि—पूर्वानुभवजन्यस्मृतिहेतुसंस्कारविशेष का नाम "भावना" है, उस के अभाव को "भावनाभाव" कहते हैं, जब अनुभविता ज्ञान का नाश हो गया तो तदाश्रित संस्कार का भी नाश आवश्यक है, इस प्रकार "भावनाभाव" नामक दूसरा दोष जानना। भावनाभाव से "स्मरणाभाव" तीसरा दोष भी सिद्ध है क्योंकि संस्कार के विना स्मृति का होना कदापि सम्भव नहीं। इस रीति से "स्वत्याग" अर्थात् स्वसिद्धान्तत्यागरूप चतुर्थ दोष तथा विज्ञानवादी[1] के मत में प्रवेश होने से "परसङ्गम" नाम परमतप्रवेशरूप पञ्चम दोष की आपत्ति भी जान लेनी ॥१००॥

द्वितीयतृतीयपक्षयोरपि दोषमाह—"द्वितीये" इति—

**द्वितीये स्वविनाशान्न स्वस्य स्वेनानुभूतता ।**
**तृतीये त्वपसिद्धान्तो यौगपद्यं धियोर्यतः ॥१०१॥**

द्वितीये=पक्षे अर्थात् "अनुव्यवसायकाले व्यवसायज्ञानं स्वात्मानं गृह्णाति" इत्यस्मिन्पक्षेऽपि स्वविनाशात्=स्वस्य ध्वंसात् हेतोः स्वस्य=स्वात्मनः स्वेन=स्वरूपेण अनुभूतता=अनुभाव्यता विषयतेति यावत् न=नास्त्येव, यतो व्यवसायध्वंसकाल एवानुव्यवसायकाल इत्यनुव्यवसायकाले कथमसावात्मानं विषयीकुर्यात्।

---

१ विज्ञानवादी के मत में किसी स्थिर आत्मा के न होने से तदाश्रित संस्कारों की सिद्धि नहीं हो सकती वैसे ही न्यायमत में दोष की आपत्ति अनिवार्य है।

तृतीये तु=तृतीयस्मिन् पक्षे च अर्थात् "स्वस्थितिकाले एव व्यवसायज्ञानमनुव्यवसायेन विषयीक्रियते" इत्येतस्मिन् पक्षे अपसिद्धान्तः=स्वसिद्धान्तहानिः "प्रसज्यते" इति शेषः । कुत इत्याह "यौगपद्यम्" इति—यतः=यस्मात्कारणात् धियोः=उभयोरपि व्यवसायानुव्यवसायज्ञानयोः यौगपद्यम्=युगपद्भावः प्रसक्तो भवति।

अयमाशयः—"युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्"[1] (न्या०१।१।१६) इत्याचार्योक्तेर्भवन्मते नह्येककालावच्छेदेन नानाज्ञानानि भवितुमर्हन्ति, येन व्यवसायसत्ताकाल एवाऽनुव्यवसायसत्ताप्यभ्युपगम्येत, एवं स्वीकारे तु स्वसिद्धान्तभङ्ग आचार्योक्तिविरोधश्च प्राप्नुतः, अपरथा जगदान्ध्यप्रसङ्ग इति ध्येयम् ॥१०१॥

सं०—प्रथम पक्ष में दोष कथन करके अब द्वितीय, और तृतीय पक्ष में भी दोष कथन करते हैं—

पदार्थ—द्वितीये=दूसरे पक्ष में (अर्थात् "अनुव्यवसाय काल में व्यवसाय ज्ञान अपने स्वरूप को आप ही विषय करता है" इस पक्ष में ) स्वविनाशात्=अपना ध्वंस हो जाने के कारण स्वस्य=स्वस्वरूप की स्वेन=स्वरूप के द्वारा अनुभूतता=अनुभव की विषयता न=नहीं बन सकती,(भाव यह है कि—अनुव्यवसाय काल में व्यवसाय का तो ध्वंस होजाता

---

१—"चक्षुरादीन्द्रियेषु विषयसम्बद्धेष्वपि यस्यासम्बन्धभावादेकं ज्ञानं न जनयति, यत्सम्बन्धादपरञ्च ज्ञानं जनयति तदेवचाणु निखिलज्ञानजनकं सुखादिसाक्षात्कारासाधारणकारणं तदेकमेव लाघवात् सिद्धं मन इत्यर्थः ।" ( विश्वनाथः )

है फिर ध्वस्त=विनष्ट हुआ व्यवसायज्ञान अपने स्वरूप को कैसे विषय कर सकता है ?) तृतीये=यदि तृतीय पक्ष स्वीकार करो ( अर्थात् "व्यवसाय ज्ञान की स्थितिकाल में ही अनुव्यवसाय ज्ञान व्यवसाय को विषय करता [प्रकाशता] है" यह पक्ष माना जाय ) तु=तो अपसिद्धान्तः=अपसिद्धान्त की आपत्ति होगी, यतः=क्योंकि (ऐसा मानने से) धियोः=व्यवसाय और अनुव्यवसाय दोनों ज्ञानों की यौगपद्यम्=युगपत् उत्पत्ति का प्रसङ्ग होगा।

न्यायमत में एक काल में दो ज्ञानों का उत्पन्न होना स्वीकार नहीं किया। जैसा कि—न्यायदर्शन में लिखा है कि "युगपज्ज्ञानाऽनुत्पत्तिर्मनसो लिङ्गम्"=[न्या० १।१।१६]एक काल में एक ही आत्मा में अनेक ज्ञानों की उत्पत्ति का न होना ही मन का लिङ्ग है अर्थात् जिस कारण से एक ही आत्मा में युगपत् नाना ज्ञान उत्पन्न नहीं होते ऐसा जो ज्ञानीयकरणता का अवच्छेदक अणुत्व धर्म है वही मन का लिङ्ग=लक्षण है। इस प्रकार तीनों ही पक्ष दूषित जानने॥१०१॥

ननु—प्रथमक्षणे व्यवसाय उत्पद्यते द्वितीयक्षणेऽनुव्यवसाय इत्यङ्गीकारे कथमपसिद्धान्त इत्याशङ्कायामाह—" आ " इति।

**आपश्चाद्धीविनान्येन स्वोत्पत्तिर्नैव गृह्यते।**
**स्वस्थेमसमयोत्पत्तिः स्वेनैवान्यस्य गृह्यताम् ॥१०२**

आपश्चाद्भाविना = व्यवसायज्ञानादीषदुत्तरभाविना अन्येन= अनुव्यवसायेन स्वोत्पत्तिः=स्वस्य व्यवसायस्य उत्पत्तिः नैव= कदापि न गृह्यते=विषयीक्रियते। नहि पश्चादूभावी पूर्वभाविन उत्पत्तिं विषयीकर्त्तुमर्हतीति भावः। किन्तु अन्यस्य= अनुव्यवसायस्य स्वस्थेमसमयोत्पत्तिः=स्वस्य व्यवसायस्य स्थेमा स्थिरता स्वस्थेमा, तस्य समये काले या उत्पत्तिरर्थादनुव्यवसायस्य जन्म सा स्वेन एव=व्यवसायेनैव पूर्वभाविना गृह्यताम्= विषयीक्रियताम्। नहि पश्चादूभाविना पुत्रेण पितृजन्म विषयीक्रियते पूर्वभाविना जनकेन तु पुत्रजन्म विषयीकर्त्तुं शक्यत इति भावः। अथवा–"आपश्चाद्भाविना" इति सर्वथैव पश्चादूभाविनेत्येवं व्याख्येयम्। यद्वा "आ" इत्यस्य स्थाने "आः" इति पठनीयम्। एवञ्च "आः" इत्याश्चर्यजनकमव्ययम्। अहो ते तर्कवित्त्वाऽभिमानिनो बुद्धिकौशलमिति साश्चर्यं सोपहासोक्तिस्तार्किकं प्रति॥ १०२॥

शङ्का—ननु द्वितीयक्षण में उत्पन्न हुआ अनुव्यवसाय ज्ञान प्रथम क्षण में उत्पन्न हुए व्यवसाय को विषय कर लेगा ऐसा मानने से अपसिद्धान्त की आपत्ति कैसे हो सकती है? उत्तरः—

पदार्थ—आपश्चाद्भाविना=व्यवसायज्ञान की उत्पत्ति के थोडा पीछे (अर्थात् द्वितीय क्षण में) उत्पन्न होने वाले अन्येन=अनुव्यवसाय से स्वोत्पत्तिः=व्यवसाय की उत्पत्ति न,एव=कदापि नहीं गृह्यते=विषय की जासकती (क्योंकि कोई भी पश्चाद् भावी पदार्थ पूर्ववर्त्ती पदार्थ की उत्पत्ति को विषय नहीं कर सकता। प्रत्युत) अन्यस्य=अनुव्यवसाय की जो

स्वस्थेमसमयोत्पत्तिः=व्यवसायस्थिरताकाल में उत्पत्ति, वह स्वेन=व्यवसाय द्वारा एव=ही गृह्यताम्=विषय की जानी चाहिये।

सार यह कि—जैसे पश्चाद्भावी पुत्र पिता की उत्पत्ति को विषय नहीं कर सकता किन्तु पूर्वभावी पिता ही पुत्रोत्पत्ति को विषय करता है, वैसे अनुव्यवसायज्ञान, व्यवसाय की उत्पत्ति को विषय करने में सर्वथा असमर्थ है और व्यवसायज्ञान अनन्तरभावी अनुव्यवसायज्ञान की उत्पत्ति को विषय कर सकता है। इस प्रकार वादी के मत में अपसिद्धान्तापत्ति दोष बना ही रहता है।

इस श्लोक में "आ" के स्थान पर "आः" ऐसा पाठ होने पर "आः" शब्द आश्चर्य का द्योतक होता हुआ वादी के प्रति उपहास का सूचक समझना चाहिये॥ १०२॥

ननु—व्यवसायोत्पत्तिमनुव्यवसायो न गृह्णाति आपश्चाद्भावित्वादिति चेदस्तु तत्, व्यवसायध्वंसं तु अनुव्यवसायो गृह्णीयादेव तस्य तत्स्थितिकाले भाव्यमानत्वादित्यारेकमाणं प्रत्याह—"अन्ये"ति—

अन्यस्थेमक्षणेऽन्येनागृहीतप्रतियोगिना।
स्वध्वंसो नैव गृह्येत गृह्येत स्वेन चेतरः॥१०३॥

अन्यस्थेमक्षणे=अन्यस्य व्यवसायभिन्नस्यानुव्यवसायस्य स्थिरताकाले अगृहीतप्रतियोगिना=न गृहीतो विषयीकृतः व्यवसाय-

रूपः प्रतियोगी येन सः तेन अज्ञातप्रतियोगिना तादृशेन अन्येन=अनुव्यवसायेन स्वध्वंसः=अनुव्यवसायस्थितिकाले भाव्यमानो व्यवसायध्वंसः न, एव गृह्येत=कदापि न विषयीक्रियेतेत्यर्थः। व्यवसायस्याऽज्ञाताऽनुव्यवसायो व्यवसायध्वंसं गृह्णीयादिति निर्युक्तिकमित्यर्थः । प्रतियोगिज्ञानाधीनज्ञानविषयत्वादभावस्येति भावः ।

वा=अथवा स्वेन=व्यवसायेन इतरः=अनुव्यवसायोऽपि (न)गृह्येत् नैव विषयीक्रियेत स्वप्रक्रियाविरोधात्तदनुत्पत्तौ तस्याप्यनुत्पन्नत्वादित्यर्थः। अथवा—नेति नाऽऽवर्त्यम्। स्वेन=व्यवसायेनैव पूर्वभाविना इतरः=अनुव्यवसायो गृह्येत=विषयीक्रियेत, तथापि प्रक्रियाविरोध एव फलतीति भावः। एतास्मिन्पक्षे "वा" इति निश्चये पक्षान्तरे च। सर्वेष्वपि पक्षेषु अनुव्यवसायेन व्यवसायो दुर्ग्रह एवेति सिद्धं भवति ॥ १०३ ॥

शङ्का—ननु पश्चाद्भावी होने के कारण यदि अनुव्यवसाय व्यवसाय को ग्रहण नहीं कर सकता तो न सही परन्तु व्यवसाय के ध्वंस को ग्रहण करने में तो अनुव्यवसाय सर्वथा समर्थ ही है क्योंकि व्यवसायध्वंस अनुव्यवसायस्थिति काल में ही होता है ? इस प्रकार शङ्का करने वाले वादी के प्रति उत्तर देते हुए कहते हैं:—

पदार्थ—अन्यस्थेमक्षणे=व्यवसाय से अन्य=भिन्न जो अनुव्यवसाय, उस के स्थितिकाल में अगृहीतप्रातियोगिना= नहीं जाना गया है प्रतियोगी जिस से ( अर्थात्—जिसने व्यवसायरूप प्रतियोगी को विषय नहीं किया)ऐसे अन्येन=

अनुव्यवसाय से स्वध्वंसः=व्यवसायज्ञान का ध्वंस न, एव, गृह्येत=कदापि विषय नहीं किया जा सकता, (अर्थात् व्यवसाय का अज्ञाता अनुव्यवसाय किसी युक्ति से भी व्यवसायध्वंस का ज्ञाता नहीं हो सकता) वा=अथवा (और) स्वेन=व्यवसाय से इतरः=अनुव्यवसाय भी(न)गृह्येत=विषय नहीं किया जा सकता ( क्योंकि व्यवसाय और अनुव्यवसाय दोनों समकाल नहीं होते।) किंवा–पूर्वभावी व्यवसाय से उत्तरभावी अनुव्यवसाय की विषयता माने तो भी स्वप्रक्रिया के साथ विरोध होगा। इस पक्ष में " वा " शब्द को निश्चयार्थक जान लेना ॥१०३॥

सम्प्रति चतुर्थे पक्षे दोषं प्रसञ्जयितुमाह—" सम्बन्धस्यापि " इति—

सम्बन्धस्यापि तुल्यत्वाद्घटो गृह्येत वा न वा।
चतुर्थेऽतिप्रसङ्गादिदोषाणां स्यात्परम्परा ॥१०४॥

किञ्च—सम्बन्धस्य, अपि=व्यवसायानुव्यवसाययोरात्मना सह समवायसम्बन्धस्य तथा तयोरेव घटादिना सह विषयविषयिभावस्य सम्बन्धस्य च तुल्यत्वात्=समत्वात् घटः=कुम्भादिरेव गृह्येत=द्वाभ्यां विषयीक्रियेत, यथा द्वाभ्यामपि दीपकाभ्यां घटादिर्विषय एव प्रकाश्यते नतु एकेनापरो दीपः;यथा वैवं द्वयोर्दीपकयोः परस्परं ग्राह्यग्राहकभावो नास्ति तथा व्यवसायानुव्यवसाययोरपि परस्परं ग्राह्यग्राहकभावो युक्तिशून्य एवेति भावः। वा=अथवा ( घटः ) नवा=नैव गृह्येतेति पूर्वेणान्वयः।

अत्रायमाशय आभाति—किं ग्राह्ये ग्राह्यत्वं ? किंवा ग्राहकेऽपि ग्राह्यत्वम् ? आद्ये अनुव्यवसायेन घट एव गृह्येत न व्यवसायः तस्य ग्राहकत्वात् । द्वितीयश्चेत् व्यवसायवद् अनुव्यवसायेऽपि ग्राह्यत्वमिति तस्य तस्य ग्रहणायोत्तरोत्तरं ग्राहकानवस्थापत्तिरपरिहार्या । किञ्चाऽस्मिन् पक्षे घटस्याऽपि ग्रहणाभावः ग्राह्यत्वस्य ग्राहकधर्मतया घटस्य तत्त्वाभावात् ।

एवमनया रीत्या चतुर्थे="अनुव्यवसायकाले अनुव्यवसायेन व्यवसायोऽनुभूयते" इति चतुर्थे पक्षे अतिप्रसङ्गादिदोषाणाम्=अतिप्रसक्त्यादिदूषणानां परम्परा स्यात्=प्रवाहः पतितो (प्राप्तो) भवेत् । अनेन भङ्ग्यन्तरेणोक्त एवार्थः स्फोटितः । तथाहि योऽयमनुव्यवसायकालेऽनुभूयमानो व्यवसायः सोऽप्यनुभवविषय इति तस्याऽप्यनुभावेन पूर्ववदनुभाव्यताविशिष्टेन भाव्यमिति तदीयाऽनुभाव्यताभावकेनापि उत्तरोत्तरमनुभाव्यत्वविशिष्टेनेत्यनुव्यवसायेऽपि व्यवसायवदनुभाव्यत्वप्रसक्तावनवस्था, प्राग्लोपो विनिगमनाविरह इत्येवमादयोऽनेके दोषाः प्रादुष्युः, तस्मात् "नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" (बृ० ४ । ३ । ३०) "न विज्ञातेर्विज्ञातारं विजानीयाः" (बृ० ३ । ४ । २) इति श्रुत्योः षष्ठ्यन्तशब्दनिर्दिष्टाया बुद्धिवृत्तिरूपाया विज्ञातेरनित्याया विज्ञातारं नित्यविज्ञप्तिरूपेण ज्ञातारं त्वं न विजानीया इति । यस्तु—विज्ञातेर्विज्ञातृरूपोऽविषयभूतः सर्वसाक्षी प्रतिपन्नः स सर्वावभासक एवेति श्रौततर्कबलोपेतवेदान्तसिद्धान्तविरुद्धश्चैतन्यजडतावादस्तार्किकाणां सर्वथा परिहेय इति भावः । उक्तञ्च पूज्यपादैः "उपदेशसाहस्त्र्याम्"—

विज्ञातेर्यस्तु विज्ञाता स त्वमित्युच्यते यतः ।
स स्यादनुभवस्तस्य ततोऽन्योऽनुभवो मृषा ॥ (प० १२ । ८)

इति । एवञ्च त्वम्पदार्थस्य श्रुत्युक्तप्रकारोऽनुभव एव सत्यः, न

तु बुद्धितत्स्थाभासाविशिष्टरूपतया पराग्रूपोऽनुभवः, स तु मिथ्याऽध्यास एवेत्यर्थः ॥१०४॥

सं०—अब चतुर्थ पक्ष में दोष की प्रसक्ति दिखाते हैं—

पदार्थ—सम्बन्धस्य अपि=व्यवसाय तथा अनुव्यवसाय का आत्मा के साथ जो समवाय सम्बन्ध तथा उन दोनों का जो घट पटादि विषय के साथ विषयविषयिभावसम्बन्ध उन दोनों सम्बन्धों को तुल्यत्वात्=समान होने से घटः= घट आदि पदार्थ ही गृह्येत=उन दोनों के द्वारा विषय किया जाय ( अर्थात् उनका परस्पर ग्राह्यग्राहकभाव न होना चाहिये जैसाकि दोनों दीपों का परस्पर ग्राह्यग्राहकभाव नहीं होता किन्तु उन दोनों का घटादि विषय ही ग्राह्य होता है। यहां ग्राह्य और विषय यह दोनों शब्द तथा ग्राहक और प्रकाशक यह दोनों शब्द पर्याय हैं ) वा=अथवा घटः=घट भी नवा=गृहीत नहीं होना चाहिये।

[अभिप्राय यह है कि—ग्राह्य ( घटपटादि ) में ग्राह्यत्व धर्म है ? अथवा ग्राहक में भी ग्राह्यत्व धर्म रहता है ? यह दो विकल्प हैं। प्रथम पक्ष स्वीकार करें तो अनुव्यवसाय से घट का ही ग्रहण होना चाहिये व्यवसाय का नहीं क्योंकि व्यवसाय ग्राहक है,ग्राहक में ग्राह्यत्वधर्म का अङ्गीकार नहीं। द्वितीय पक्ष मानें तो व्यवसाय की भान्ति अनु-व्यवसाय में भी ग्राह्यत्व धर्म की प्राप्ति होगी एवं उसके

ग्रहणार्थ (प्रकाशनार्थ) भी उत्तरोत्तर ग्राहक की कल्पना करनी पड़ेगी, जिस से अनवस्था का परिहार नहीं हो सकेगा। किञ्च—इस प्रकार ग्राह्यत्व धर्म को ग्राहकवृत्ति मान लेने से इस पक्ष में घट का भी ग्रहण नहीं हो सकेगा क्योंकि तुम ने ग्राह्यत्व को घटादिनिष्ठ नहीं माना। इसी अर्थ को स्फुट करने के लिये अग्रिम ग्रन्थ कहते हैं—]

पदार्थ–चतुर्थे=(अनुव्यवसायकाल में अनुव्यवसाय व्यवसाय का अनुभव करता है,इस) चतुर्थ पक्ष में अतिप्रसङ्गादिदोषाणां=अतिप्रसक्ति आदि दोषों की परम्परा=परम्परा स्यात्=प्राप्त होती है। (इस लिये चतुर्थ पक्ष भी समीचीन नहीं। अनवस्था को "अतिप्रसक्ति" कहते हैं। जैसाकि ऊपर दिखा चुके हैं, अनवस्था की प्राप्ति से पूर्व २ व्यवसाय की ग्राहकता का लोप होने से प्राग्लोप,और अन्यतम व्यवसाय की ग्राहकता मानने से विनिगमनाविरह जानना) ॥१०४॥

ननु—स्वाश्रयेणैव व्यवसायो गृह्येतेति मंस्यामहे तेन न कोपि दोष इति चेद् ? अत्राह—"नाश्रयेति"—

**नाश्रयग्राह्यताप्यूह्या न स्वदीप्तः स्वदीपकः।**
**योऽन्यथा तर्कयेदेवं सोपि दोषैर्न मुच्यते ॥१०५॥**

आश्रयग्राह्यता अपि न ऊह्या=व्यवसायस्य आश्रयो य आत्मा तेनैव व्यवसायनिष्ठा ग्राह्यता तर्कणीयेत्यापि न मन्तव्यमित्यर्थः, कुत इत्याह—"न स्वदीप्तः" इति। स्वदीप्तः=स्वेन व्यवसायेनैव दीप्तः

प्रकाशित आत्मा स्वदीपकः=व्यवसायस्य ग्रहीता न स्यादिति शेषः। अयं भावः—ज्ञानादियोग्याविशेषगुणसम्बन्धेनैव आत्मनः प्रत्यक्षं भवतीति नैयायिकानां सिद्धान्तः । तद्येन व्यवसायेनात्मैव ग्राह्योऽसावात्मना ग्राह्यः स्यादिति कथं घटेत। नह्यग्निप्रदीप्तोऽपि लोहपिण्डोऽग्निं भासयितुमर्हतीतीदमुक्तं "न स्वदीप्तः" इति। "यः" इति। यः=कश्चन ज्ञानाऽस्वप्रकाशत्ववादी तार्किकप्रभृतिः अन्यथा=प्रकारान्तरेणापि तर्कयेत्=ऊहयेत् सोऽपि=असावपि एवम्=दर्शितरीत्या दोषैः=अनवस्थादिदोषैः न=नैव मुच्यते=मुक्तो भवेदित्यर्थः। ते च दोषा दर्शितदिशा विज्ञेयाः ॥ १०५ ॥

सं०—ननु व्यवसाय के आश्रयभूत आत्मा के द्वारा ही व्यवसाय का प्रकाश मान लेंगे फिर किसी दोष की आपत्ति नहीं रहेगी ? इसका समाधान यह है कि:—

पदार्थ—आश्रयग्राह्यता अपि न ऊह्या=व्यवसाय का आश्रय (अधिकरणभूत) जो आत्मा, उस के द्वारा व्यवसाय की ग्राह्यता है अर्थात आत्मा ही व्यवसाय का ग्रहीता=प्रकाशक है इस प्रकार की ऊहा करनी भी ठीक नहीं, क्योंकि स्वदीप्तः=जो स्वकरके दीप्त=प्रकाशित होता है वह स्वदीपकः=स्व का प्रकाशक न=नहीं हो सकता,(अर्थात् जिस प्रकार अग्नि के तादात्म्य को प्राप्त हुआ लोहपिंड अग्नि से दीप्त होता है पर वह अग्नि का दीपक=भासक नहीं हो सकता वैसे ही जिस व्यवसायज्ञान के द्वारा ही आत्मा का प्रकाश

१ प्रकाश्य इत्यर्थः।

होता है वह व्यवसायज्ञान आत्मा का ग्राह्य कैसे हो सकेगा? किन्तु कदापि नहीं होगा ) यः=जो कोई स्थिर स्वयंप्रकाश ज्ञान को नहीं मानता ऐसा वादी यदि अन्यथा=प्रकारान्तर से तर्कयेत्=तर्कणा करे तो एवम्=इस प्रकार=तार्किकवत् सः अपि=वह भी दोषैः=अनवस्थादिक दोषों से न मुच्यते=मुक्त नहीं हो सकता। ( अनवस्थादि दोषों के लापन का प्रकार पीछे कह चुके हैं ) ॥१०५॥

व्यवसायस्यात्मना सह सम्बन्धोऽपि न घटत इत्याह "नचास्य" इति। यद्वा एवं स्वयम्भातव्यवसायस्य ग्राह्यतां निषिद्धय अधुना तस्यासंगताप्रतिपादनाय तत्र यावत्संबन्धं निवारयति "न चास्य" इति—

न चास्याश्रयसम्बन्धः संयोगोऽभ्युपगम्यते ।
मानाभावादयुक्तेश्च समवायस्त्वसङ्गतः ॥ १०६ ॥

अस्य=व्यवसायज्ञानस्य आश्रयसम्बन्धः=आश्रयेण स्वाधिकरणीभूतेन आत्मना सह सम्बन्धः संयोगः="इमौ संयुक्तौ" इति संयुक्तप्रत्ययहेतुः संयोगाख्यः नच=नैव अभ्युपगम्यते=स्वीक्रियते भवद्भिरिति शेषः "द्रव्ययोरेव संयोगः" इति भवदभ्युपगमात् व्यवसायस्य च द्रव्यत्वाभावादिति भावः। ननु मा भूत्संयोगः समवायस्तु भविष्यति "गुणगुणिनोः समवायसम्बन्धाभ्युपगमादित्याशङ्क्याह—"मानाभावाद्" इति। तुना पक्षान्तरव्यावृत्तिः। मानाभावात्=समवाये प्रमाणाभावात् अयुक्तेः च=युक्त्यभावाच्च समवायः तु=समवायाख्यो नित्यः सम्बन्धोऽपि असङ्गतः=भवितुं

नार्हतीत्यर्थः। तस्माद् व्यवसायेनात्मप्रकाशो वाऽऽत्मना व्यवसायग्रहो वेति सर्वथाऽनुपपत्तिरपि तार्किकमते वेदितव्या।

अयमभिसन्धिः—यदि व्यवसायस्य स्वाश्रयेणात्मना सह कश्चित्सम्बन्धः स्यात्, स्यात्तदा कथमपि तयोर्ग्राह्यग्राहकभावोऽपि,स एव तु नास्ति। तथाहि द्वयोस्तावत्संयोगो नास्त्येव तार्किकनयानुरोधेनात्मनो द्रव्यत्वेऽपि व्यवसायस्य द्रव्यत्वाभावात्। न च समवायोऽपि,नहि तत्र प्रमाणं पश्यामः,नच तत्र प्रत्यक्षं प्रमाणं रूपाद्यभावात्। "गुणक्रियादिविशिष्टबुद्धिर्विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वाद्दण्डीपुरुष इति विशिष्टबुद्धिवद्" इत्यनुमानं तत्र मानमिति चेन्न अनेन स्वरूपसम्बन्धसाधनापत्तेस्तौल्यात्, नहि भवति रूपघटयोरत्यन्तभेदबुद्धिर्यथा दण्डपुरुषयोरिति सर्वसाक्षिकम्। प्रत्यक्षानुमानयोर्निरस्तयोः प्रमाणान्तरस्य तु कथैव नास्ति। युक्त्यभावश्च। युक्त्यभावोऽपि समवाये वेदितव्यः। कथमिति चेद्? इत्थम्—समवायः समवायिभिः सम्बद्धो नवा ? आद्ये येन सम्बन्धेन सम्बद्धः स किं समवायः ? स्वरूपं वा ? नाद्यः अनवस्थापातात्, न द्वितीयः—तद्वत् मृद्घटयोरपि स्वरूपसम्बन्धेनैव व्यवहारोपपत्तेः समवायाऽसिद्धेः। प्रथमद्वितीये समवायस्य समवायिषु वृत्तौ सम्बन्धान्तरापेक्षाभावे संयोगस्यापि स्ववृत्तौ सम्बन्धान्तरापेक्षा न स्यात्। न च संयोगस्य गुणत्वात्सम्बन्धान्तरापेक्षा समवायस्य तु तदभावान्नास्तीति वाच्यम् "समवायः समवायिषु सम्बन्धविशिष्टो भवितुमर्हति धर्मत्वात् गोत्ववद्" इत्यनुमानेनाऽपेक्षाकारणस्य तुल्यत्वात्। न ह्यसम्बद्धस्याश्वत्वस्य गोधर्मत्वं दृष्टम्। संयोगो गुणत्वात्स्ववृत्त्यर्थं सम्बन्धान्तरमपेक्षते, समवायस्तु न तथेति चेत् कल्पनामात्रमेतत्, अपेक्षाकारणस्य तौल्यादित्यवोचाम। गुणपरिभाषायास्तु गुणत्वा-

भावेऽपि कर्मसामान्यादीनां सम्बन्धापेक्षादर्शनेनाऽप्रयोजकत्वम् । किञ्च—निष्पापत्वादयो गुणाः श्रुतिस्मृत्यादिप्रसिद्धाः, इष्टधर्मो गुण इत्यपि च शास्त्रीया परिभाषा, तस्मात्समवायस्यापि गुणत्वमेष्टव्यम् । जातिविशेषो गुणत्वमिति परिभाषा तु समवायसिद्ध्युत्तरकालीना, नित्यानेकसमवेता जातिरिति ज्ञानाधीना च । समवायज्ञानाधीनत्वेन समवायसिद्धेः प्राक् संयोगस्य गुणत्वमेवाऽसिद्धम् ।

यदप्ययुतसिद्धयोः समवाय इति तत्र भवान् प्रष्टव्यः किमुभयोरयुतसिद्धत्वम् ? उतान्यतरस्य ? नाद्यः–प्राक् सिद्धस्य कार्यात् कारणस्याऽयुतसिद्धत्वाऽनुपपत्तेः । द्वितीये तु किमसिद्धस्य समवायः ? उत सिद्धस्य ? नाद्यः—प्रागसिद्धस्यालब्धात्मकस्य कार्यस्य कारणेन सह सम्बन्धायोगेनायुतसिद्धत्वायोगात्, सम्बन्धस्य द्विष्ठत्वाच्च । न द्वितीयः—प्राक् कारणसम्बन्धात् कार्यस्य सिद्धावभ्युपगम्यमानायामयुतसिद्धत्वं न स्यात्, सतोरप्राप्तयोः प्राप्तिः संयोग इत्यभ्युपगमेन तन्तुपटयोरपि संयोगापत्तिः ।

किञ्च—किन्नामायुतसिद्धत्वम् ? देशतोऽपृथक्सिद्धत्वं वा ? कालतो वा ? अथवा स्वभावतः ? नाद्यः—" शुक्लः पटः " इत्यत्र तन्तुदेशे पटः, पटदेशे शुक्लगुणश्चेति व्यभिचारात् । न द्वितीयः—सव्यदक्षिणयोरपि गोविषाणयोरयुतसिद्धत्वप्रसङ्गात् । न तृतीयः–स्वभावस्य स्वरूपानतिरेकेऽस्मदिष्टाऽभेदसिद्धेः ।

अपि च–संयोगस्य समवायस्य सम्बन्धिभिन्नत्वेनाऽस्तित्वे प्रमाणाभावोऽपि । नच—" सम्बन्धः सम्बन्धिभिन्नस्तद्विलक्षणशब्दधीगम्यत्वात् वस्त्वन्तरवद् " इत्यनुमानं मानमिति रेकणीयम्, स्वरूपबाह्यरूपापेक्षया "मनुष्यो ब्राह्मणः" "श्रोत्रियो वदान्यः"

इत्याद्यनेकविलक्षणशब्दधीगम्यत्वेन व्यभिचारात् । सम्बन्धिनोरेव सम्बन्धशब्दप्रत्ययव्यतिरेकेण मनुष्यो ब्राह्मणः श्रोत्रियः इत्यादिवत्संयोगसमवायादिशब्दप्रत्ययार्हत्वसम्भवाच्च, विलक्षणशब्दधीगम्यत्वादित्युपलब्धिघटितेन लिङ्गेन प्राप्तस्य वस्त्वन्तरस्य संयोगादेः सम्बन्धिव्यतिरेकेणाऽनुपलब्ध्या तद्भावनिश्चयाच्चेति । प्रपञ्चितश्चायमर्थो विस्तरेण पूज्यपादैस्तर्कपादे—"समवायाभ्युपगमाच्च साम्यादनवस्थितेः" (ब्र० सू० २।२।१३) इत्यत्र भामतीकारैश्चेति दिक् ॥ १०६ ॥

सं०—अब तर्कमत में आत्मा के साथ व्यवसाय ज्ञान के सम्बन्ध की अनुपपत्ति कथन करते हैं—

पदार्थ—( हे तार्किक ! ) अस्य=व्यवसाय ज्ञान का आश्रयसम्बन्धः=अपने आश्रय आत्मा के साथ सम्बन्ध अर्थात् संयोगः=संयोग सम्बन्ध न च अभ्युपगम्यते=आपने स्वीकार नहीं किया, ( क्योंकि "द्रव्यों का ही संयोग होता है" यह तुम्हारा सिद्धान्त है और तुम्हारे मत में व्यसायज्ञान गुण है द्रव्य नहीं ) ।

वादी—हम आत्मा में व्यवसायज्ञान की स्थिति सम-

---

१ "तद्भावः" इत्यनुषङ्गः । तस्य द्व्यणुकादिसृष्ट्युत्पादस्य अभावः, कुतः परमाणुद्व्यणुकानां समवायाभ्युपगमात् । अस्त्वेवमिति किन्तेनेति चेत् ? साम्यादनवस्थितेः=यथैवाणुभ्यामत्यन्तभिन्नं द्व्यणुकं समवायेन ताभ्यां सम्बद्ध्यते तथैव समवायोऽपि समवायिभ्योऽत्यन्तभिन्नः सन् अन्येन समवायेन समवायिभिः सम्बध्येत अत्यन्तभेदसाम्यात् ततश्च तस्याप्यन्योऽन्यः सामवायः कल्पनीयः स्यादित्यनवस्थानादिति सूत्रार्थः ।

वायसम्बन्ध से मानते हैं और गुण गुणी का परस्पर समवायसम्बन्ध होता है। उत्तरः—

पदार्थ—मानाभावात्=( समवायसम्बन्ध की सिद्धि में प्रत्यक्षादि कोई) प्रमाण न होने से अयुक्तेः च=और उसकी सिद्धि में युक्ति के भी अभाव से समवायः तु=समवाय सम्बन्ध भी ( सर्वथा ) असङ्गतः=असङ्गत है। यहां पर "तु" शब्द समवायवाद की व्यावृत्ति के अभिप्राय से जानना।

भाव यह है कि—आत्मा के साथ व्यवसाय का संयोगसमवायादि सम्बन्ध न बनसकने से आत्मा भी व्यवसाय का ग्रहीता (प्रकाशक) नहीं बन सक्ता है। इस लिये व्यवसाय से आत्मा का प्रकाश वा आत्मा से व्यवसाय का प्रकाश सर्वप्रकार से तार्किक मत में ज्ञान की असिद्धि होने से जगदान्ध्यप्रसङ्ग भी अनिवार्य रहेगा ॥१०६॥

न च तयोः पारमार्थिकः कश्चिदन्योऽपि सम्बन्धः सिध्यतीति प्रतिपादयति "न चान्यः" इति—

**न चान्योऽभ्यूहितुं शक्यः सम्बन्धो येन चिद्वपुः ।**
**असङ्गः क्वापि सज्जेत यः पुनः पारमार्थिकः ॥१०७॥**

तयोरात्मव्यवसाययोः अन्यः=संयोगसमवायभिन्नः कश्चिदपि सम्बन्धः = विशिष्टप्रतीतिहेतुः संसर्गः अभ्यूहितम् = तर्कितुं न च शक्यः=नैव योग्योऽस्ति, येन = सम्बन्धेन चिद्वपुः=चैतन्यस्वरूपः असङ्गः=असङ्गश्चात्मा क्वापि=कस्मिंश्चिदप्यनात्मनि पदार्थे सज्जेत=

सक्तो भवेत्, येनात्मव्यवसाययोः परस्परं प्रकाश्यप्रकाशकभावः सम्भवेदित्यर्थः । किञ्च सम्भवन्नपि यः=यः सम्बन्धः पुनः पारमार्थिकः=परमार्थसत्तोपेत आत्मवदबाध्योऽपि सिद्ध्येदिति शेषः ॥ १०७ ॥

सं०—आत्मा के साथ व्यवसायज्ञान के अन्य सम्बन्ध के अभाव का भी कथन करते हैं—

पदार्थ—अन्यः=संयोग, समवाय से भिन्न कोई और सम्बन्धः=सम्बन्ध भी अभ्यूहितुम्=तर्कणा करने के न च शक्यः=योग्य नहीं येन=जिस सम्बन्ध के द्वारा चिद्वपुः= चेतन तथा असङ्गः=असङ्ग स्वरूप आत्मा के अपि=किसी भी अनात्म पदार्थ के साथ सज्जेत=सक्त (सम्बद्ध) हो सके. पुनः=और फिर यः=जो सम्बन्ध पारमार्थिकः=परमार्थ =सत्य भी सिद्ध हो सके ।

सार यह है कि चेतनस्वरूप असङ्ग आत्मा का किसी वस्तु के साथ कोई वास्तव सम्बन्ध बन नहीं सकता, और कल्पित सम्बन्ध मानने से तार्किक के लिये स्वमतत्याग तथा वेदान्तमत में प्रवेश की आपत्ति होगी ॥१०७॥

सम्प्रति ९८ श्लोकोक्तमर्थमेव सङ्क्षिप्य दर्शयति—"नाद्यन्ते"ति—

**नाद्यन्तग्राह्यताधारसम्बन्धा यस्य वस्तुतः ।**
**तस्मिन्मिथ्यैव तद्धाङ्क्षिरिति प्रागुपपादितम् ॥१०८॥**

यस्य=आत्मनः आद्यन्तग्राह्यताधारसम्बन्धाः=आदिरुत्पत्तिः, अन्तो विनाशः, ग्राह्यता प्रकाश्यता ज्ञेयतेति यावत्, आधारोऽधिकरणत्वम् एतद्रूपाः सम्बन्धाः वस्तुतः=परमार्थदृष्ट्या न=नैव "सन्ति" इति शेषः। तस्मिन्=एवम्भूते परमार्थदृशि (चिन्मात्रैकवपुषि) तस्मिन्नात्मनि तद्बुद्धिः=तेषामुत्पत्त्यादीनां बुद्धिर्ज्ञानं मिथ्या एव=शुक्तिरजतादिवत्प्रतिभासरूपैव, इति=इत्येतत् प्राक्=पूर्वमेव "विना दृश्यस्य मिथ्यात्वम्" (१।६१) इत्यादिभिरनेकैः श्लोकैः उपपादितम्=सम्यङ्निरूपितम्।

स्फुटीकृतश्चायमर्थः–"तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्" इत्यत्र (ब्र० सू० २।३।२९) उत्क्रान्त्यधिकरणीयभाष्यभामत्यादावपि। तस्मादात्मनि सम्बन्धोऽप्यौपाधिक एवेति तत्त्वम्।

सं०—अब पूर्वोक्त अर्थ का सङ्क्षेप कथन करते हैं–

पदार्थ—यस्य=जिस आत्मा के आद्यन्तग्राह्यताधारसम्बन्धाः=उत्पत्ति, विनाश, ग्राह्यत्व (ज्ञेयत्व) तथा आधारतादिक सम्बन्ध वस्तुतः=परमार्थ दृष्टि से न=कदापि नहीं बन सकते तस्मिन्=उस असङ्ग आत्मा में तद्बुद्धिः=उत्पत्ति आदिकों की बुद्धि मिथ्या एव=शुक्तिरजतादि की न्यांई मिथ्या ही है

१ सूत्रार्थस्त्वयम्–नैवाणुर्जीवः सर्वगतस्यैव ब्रह्मणो जीवभावेन प्रवेशश्रवणात् तादात्म्योपदेशाच्च। जीवेऽणुत्वव्यपदेशस्तु तद्गुणसारत्वात्=तस्या बुद्धेर्गुणा अणुत्वोत्क्रान्तिगत्यागतिसुखदुःखादयः ते गुणाः सारं प्रधानं यस्य जीवस्य स तथा तद्भावस्तत्त्वं तस्मात्, तद्व्यपदेशोऽणुत्वादिव्यपदेशो न स्वाभाविकः, प्राज्ञवत्=यथा प्राज्ञस्य परमात्मनः सगुणोपासनेषु दहराद्युपाधिवशात् अणुत्वादिकं व्यपदिश्यते, तद्वदित्यर्थः—इति बोध्यम्।

इति=यह प्राक्=पूर्व ("विना दृश्यस्य मिथ्यात्वम्" (१-६१) इत्यादि अनेक श्लोकों से) उपपादितम्=भले प्रकार निरूपण कर दिया है ॥१०८॥

स्वयम्प्रकाशमेव ज्ञानमेष्टव्यमिति सिद्धान्तमेव द्रढयति "ज्ञातृज्ञाने"ति—

**ज्ञातृज्ञानान्तराभावात्स्वयम्भातस्य सत्यता ।**
**मन्तव्या व्यवसायस्य प्रसज्जेतान्ध्यमन्यथा ॥१०९**

ज्ञातृज्ञानान्तराभावात्=दर्शितरीत्या अन्यस्य कस्यचन ज्ञातुर्ग्रहीतुः ज्ञानस्य भासिकाया संवित्तेश्चाभावात् स्वयम्भातस्य=अवेद्यत्वे सत्यपरोक्षव्यवहारविषयलक्षणस्य स्वयम्प्रकाशस्य व्यवसायस्य=ज्ञानस्य सत्यता=त्रैकालाबाध्यता मन्तव्या=स्वीकर्त्तव्या अखण्डैकरसमेकमेव स्वयम्भातं चैतन्यमङ्गीकर्त्तव्यं न तत्र वस्तुतो धर्मधर्मिभावकल्पना युक्तिमतीत्यर्थः । अन्यथा=एतादृशस्वयञ्ज्योतिरात्मवस्त्वनङ्गीकारे आन्ध्यम्=जाड्यमेव प्रसज्जेत=प्रसक्तं भवेत्, तथा चाऽनात्मनोऽपि प्रतिभासो न भवेदिति भावः॥१०९॥

सं०—स्वयम्प्रकाशस्वरूप नित्य ज्ञान अवश्य अङ्गीकार करना चाहिये इस अर्थ को दृढ करते हैं—

पदार्थ—ज्ञातृज्ञानान्तराभावात्=दर्शित रीति के अनुसार अन्य किसी ज्ञाता व ज्ञान की सिद्धि न बन सकने के कारण स्वयम्भातस्य=स्वयम्प्रकाशस्वरूप व्यवसायस्य=ज्ञान की सत्यता=अबाध्यत्वरूपसत्यत्व मन्तव्या=अवश्य अङ्गीकार करना चाहिये, अन्यथा=यदि कूटस्थ नित्य स्वयम्प्रकाशस्वरूप

ज्ञान को स्वीकार न किया जाय तो आन्ध्यम्=अन्धभाव (केवल जडता) प्रसज्जेत=प्रसक्त होगा।

भाव यह है कि साधक वस्तु के अभाव से किसी पदार्थ की सिद्धि न होगी और वादिव्यवहार के लोप का भी प्रसङ्ग होगा इस लिये स्वयम्प्रकाश आत्मा का स्वीकार-पक्ष ही समीचीन जानना चाहिये ॥१०९॥

उक्तमेवार्थं विशदयति—"यत्प्रसादाद्" इति—

**यत्प्रसादाद्घटादीनां जडानामपरोक्षता।**
**तस्य स्वतोऽपरोक्षत्वे विवदेत पुमान्कथम् ॥११०॥**

यत्प्रसादात्=यस्य चिद्वपुषः स्वञ्ज्योतिःस्वभावस्यात्मनः प्रसादादनुग्रहात्सत्तास्फूर्तेरिति यावत् जडानाम्=तमःस्वभावानामपि घटादीनाम् अपरोक्षता=घटोऽयं पटोऽयमित्याकारकापरोक्षव्यवहारयोग्यता सर्वसिद्धा सुप्रसिद्धा च, तस्य=तादृशाऽव्यभिचारिस्वभावस्यात्मनः स्वतोऽपरोक्षत्वे=स्वयम्भातिस्वरूपत्वे पुमान्=कः पुरुषः कथम्=केन प्रकारेण विवदेत=विवादं कुर्यात्, तत्सत्ताऽपलापे कः समर्थः स्यात् न कोपीत्यर्थः।यो विवदेत स पशुतुल्य एवेति भावः। उक्तञ्च "दक्षिणामूर्ति"स्तोत्रे—

नानाच्छिद्रघटोदरस्थितमहादीपप्रभाभास्वरं
ज्ञानं यस्य तु चक्षुरादिकरणद्वारा बहिः स्पन्दते।
जानामीति तमेव भान्तमनुभात्येतत्समस्तं जगत्
तस्मै श्रीगुरुमूर्त्तये नम इदं श्रीदक्षिणामूर्त्तये ॥ ४ ॥ इति।

तस्माद् "अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वलक्षणं" स्वप्र-

काशत्वमात्मन एवेति युक्तमुक्तं "विवदेत पुमान् कथम्" इति ॥११०॥

सं०—उक्त अर्थ को विशेषतया स्फुट करते हैं—

पदार्थ—यत्प्रसादात्=जिस आत्मा के प्रसाद से अर्थात सत्तास्फूर्तिरूप अनुग्रह के द्वारा जडानाम्=जडस्वभाव घटादीनाम्=घटपटादि पदार्थों की अपरोक्षता=प्रत्यक्षव्यवहार-योग्यता (होती है=जिस के प्रकाश को ले कर घटादि पदार्थ भासते हैं) तस्य=उस आत्मा के स्वतोऽपरोक्षत्वे=स्वयम्प्रकाश-स्वरूप होने में पुमान्=पुरुष कथम्=किस प्रकार विवदेत=विवाद करे ॥११०॥

नच स्वयम्प्रकाशस्य स्वभात्यै परापेक्षापीति दर्शयति "अभातः" इति—

**अभातो हि स्वभानाय भानमन्यदपेक्षते ।**
**स्वयम्भातः स्वभानाय नान्यद्भानमपेक्षते ॥१११॥**

हि=निश्चयेन अभातः=न भातोऽभातः स्वप्रकाशाय परापेक्षो यथा घटादिः सः स्वभानाय=स्वज्ञप्त्यै अन्यत्=स्वतो भिन्नं भानम्=प्रकाशम् अपेक्षते=इच्छति, यश्च स्वयम्भातः=स्वयम्प्रकाश आत्मा सः स्वभानाय=स्वरूपप्रकाशार्थे अन्यत्=स्वतो भिन्नं किमपि भानं न अपेक्षते=नैव वाञ्छति । स्वयम्प्रकाशस्वरूपस्य स्वरूपस्फो-रणाय नान्यापेक्षा यथा घटादीनामिति व्यतिरेकः सूर्यादिव-दित्यन्वयो वा । "तमेव भान्तमनुभाति सर्वम्"[1] इत्यादिश्रुतेः "न तद्भासयते सूर्यो न शशाङ्को न पावकः" ( भ० गी० १५ । ६ ) इत्यादि-स्मृतेश्चात्मनः स्वप्रकाशत्वं सर्वथैव निराबाधामिति भावः ॥१११॥

१—कठ० २ । २ । १५; मुं० २ । २ । १०; श्वे० ६ । १४ ।

स०—अब स्वप्रकाश को स्वभान के लिये परापेक्षा-शून्य कथन करते है—

पदार्थ—हि=निश्चय कर के अभातः=जो स्वप्रकाशरूप नहीं है अर्थात् जो जड है जैसे घटादि, वह स्वभानाय=अपने स्वरूप के प्रकाशार्थ अन्यत्=स्वरूप से भिन्न भानम्=दीपादि प्रकाश की अपेक्षते=अपेक्षा करता है। परन्तु जो पदार्थ स्वयम्भातः=स्वयम्प्रकाश है जैसे कि आत्मा, वह स्वभानाय=अपने प्रकाशार्थ अन्यत्=अपने से भिन्न भानम्=किसी प्रकाश की न अपेक्षते=अपेक्षा नहीं करता। (जैसे प्रदीपादिक स्वप्रकाशार्थ प्रदीपान्तर की अपेक्षा से रहित हैं वैसे ही ज्ञानस्वरूप आत्मा स्वरूपप्रकाश के लिये परापेक्षाशून्य है॥) ॥१११॥

ननु—"व्यवहारो व्यवहर्त्तव्यज्ञानसाध्यो व्यवहारत्वात् घटादिव्यवहारवद्" इत्यनुमानेन व्यवसायव्यवहारोऽनुव्यवसायसाध्यः सिद्ध्यतीत्यवश्यं व्यवसायसाधनायानुव्यवसायापेक्षेति शङ्कां पराणुदन्नेवाह—"सर्वोऽपि" इति—

**सर्वोऽपि व्यवहारोऽयं जडो हि स्वपरास्पदः।**
**स्वेनैव व्यवसायेन स्वतःसिद्धेन साध्यते ॥११२॥**

"हि" इति निश्चितमेतत्। किन्तत्? इत्याह—अयम्=पुरतो दृश्यमानः सर्वानुभवसिद्धः सर्वः अपि=अवच्छेद्यावच्छेदेन यावानप्यस्ति तावान् स्वपरास्पदः=स्वपरसाधकः अर्थात् परस्पर-

मुपकार्योपकारकभावेन वर्त्तमानः व्यवहारः=घटपटादिशब्दप्रयोगरूपस्तत्तदर्थानुसन्धानरूपश्च व्यवहारः जडः=परप्रकाशापेक्षः, सच स्वतःसिद्धेन=स्वसत्तायां परापेक्षारहितेन प्रकाशस्वरूपेण व्यवसायेन=ज्ञानेन स्वेन एव=स्वस्वरूपेणैव साध्यते=प्रकाश्यते। नहि प्रकाशस्वरूपो व्यवसायः स्वं परं वा साधयितुं परापेक्षसत्ताकोऽस्ति येनाऽनुव्यवसायसापेक्षता तस्याभ्युपगम्येत। अनवस्थापत्तेश्च। अनवस्थापत्तिश्चापि दोषो भवति व्यवसायपरापेक्षतायाम्, अनुव्यवसायव्यवहारस्यापि व्यवहारत्वेन व्यवहर्त्तव्यज्ञानसाध्यतया तस्य तस्याप्युत्तरोत्तरापेक्षायां स्थित्यभावात्। अचित्त्वञ्चोपाधिः, तस्य घटादिषु साध्यव्यापकतया स्वप्रकाशायामनुभूतौ साधनाव्यापकत्वाच्च। तस्माद् यत्किञ्चिदेतद् "व्यवहारो व्यवहर्त्तव्यज्ञानसाध्यः" इति ॥११२॥

शङ्का—ननु व्यवहारहेतु से व्यवसाय को अनुव्यवसाय की अपेक्षा सिद्ध है क्योंकि जो २ व्यवहार है वह सब व्यवहर्त्तव्यज्ञान द्वारा साध्य होता है ? इस आशङ्का के होने पर समाधान दिखाते हैं—

पदार्थ—स्वपरास्पदः=स्व पर का साधक अयम्=पुरोवर्त्ती अर्थात प्रतिदिन सब के अनुभव से सिद्ध सर्वः अपि=सब ही व्यवहारः=घटपटादिशब्दों का प्रयोगरूप व्यवहार अथवा तत्तद् अर्थों का अनुसन्धानरूप व्यवहार जडः हि=निश्चय से परप्रकाश्य है (और) वह स्वतः सिद्धेन=स्वतःसिद्ध (स्वयम्प्रकाश)व्यवसायेन=व्यवसायज्ञान से स्वेन एव=स्वस्वरूप से ही साध्यते=सिद्ध किया जाता है।

अर्थात् प्रकाशस्वरूप व्यवसाय ही स्व पर का साधक है इस लिये व्यवसाय सिद्धि के अर्थ अनुव्यवसाय की कल्पना वृथा है। किञ्च—व्यवसाय की न्याई अनुव्यवसाय को भी किसी अन्य व्यवसाय की अपेक्षा बनी रहने से उत्तरोत्तरकल्पना से धारारूप अनवस्थादोष की प्राप्ति होने के कारण एक अखण्ड त्रैकालाबाध्य ज्ञान को ही स्वप्रकाशस्वरूप मानना समीचीन है ॥११२॥

वस्तुतस्तु स्वप्रकाशं ज्ञानमेव वास्तविकमिति दर्शयति "यस्मिन्" इति—

यस्मिन्नाज्ञानसन्देहाऽभावज्ञानविपर्ययाः ।
तद्विरोधिप्रमा तस्मिन्नन्यथान्यतमस्थितिः॥११३॥

यस्मिन्=वस्तुनि अज्ञानसन्देहाभावज्ञानविपर्यया:=अज्ञानं यथा कुड्यादिव्यवधाने स्थितानां पदार्थानाम्, सन्देहो यथा स्थाणुर्वा पुरुषो वेति, अभावज्ञानं यथेह भूतले घटो नास्ति, विपर्ययो यथा शुक्ताविदं रजतमिति, एते यत्र वस्तुनि न=न भवन्ति तस्मिन्= तत्र वस्तुनि तद्विरोधिप्रमा=अज्ञानादिविरोधियथार्थज्ञानमवश्यं भवति । अन्यथा=अज्ञानादिविरोधियथार्थज्ञानाभावे तु अन्यतम-स्थितिः=अज्ञानादिषु मध्ये अन्यतमस्य कस्यचिद् अज्ञानादेरव-श्यमवस्थानं भवति इति निर्विवादमेव। एवञ्च यदेव ज्ञानमज्ञा-नादिविरोधि सर्वावभासकं तदेव स्वभिन्नप्रकाशान्तरनिरपेक्षं स्वतःसिद्धमिति राजमार्गः ॥ ११३ ॥

सं०—विचारदृष्टि से स्वप्रकाश स्वरूप ज्ञान ही वास्तविक है इस अर्थ को कथन करते हैं—

पदार्थ—यस्मिन्=जिस वस्तु में अज्ञानसन्देहाभावज्ञान-विपर्यया:=अज्ञान, सन्देह, अभावज्ञान, अथवा विपर्यय न=नहीं होता है तस्मिन्=उस वस्तु में तद्विरोधिप्रमा=उन का विरोधी (बाधक) जो ज्ञान है, वह अवश्य होता है अन्यथा=यदि उस में अज्ञानादि का बाधक ज्ञान न हो तो अन्यतमस्थिति:=अज्ञानादिकों में से किसी न किसी की स्थिति अवश्य रहती है।

प्रकृत में भित्ति आदि से व्यवहित पदार्थों के ज्ञाना-भाव का नाम "अज्ञान" है। यह स्थाणु है वा पुरुष है इत्यादि ज्ञानों का नाम "सन्देह" है। भूतल में घट नहीं है इत्यादि ज्ञान का नाम "अभावज्ञान" और शुक्ति आदि में रजतादि प्रतीतियों को "विपर्यय" जानना चाहिए ॥ ११३ ॥

किन्तद्वस्तु यत्राज्ञानादिचतुष्टयस्याभावे सति यथार्थ-त्वमिति जिज्ञासमानम्प्रत्याह—"धर्म्यंशे" इति। यद्वा ननु कोऽसौ पदार्थो यत्र प्रमाऽऽस्ते यतो लोके तु नैकोऽप्येतादृशः पदार्थो दृष्टिगोचरो भवति यत्राज्ञानादिचतुष्टयमध्यादेकोऽपि न स्यादि-त्याशङ्कयामाह "धर्म्यंशे" इति—

**धर्म्यंशे ज्ञानमभ्रान्तं प्रकारे तु विपर्ययः।**
**तद्विशेषावगत्यर्थां जिज्ञासा दृश्यते यतः॥११४॥**

धर्म्यंशे=धर्मिणोंऽशो धर्म्यंशस्तस्मिन् धर्म्यंशे सामान्य-वस्तुविषये इत्यर्थः, ज्ञानम्=सर्वं ज्ञानम्, अभ्रान्तम्=भ्रमाऽविषयकं

भ्रमभिन्नं वेति यावत्, प्रकारे तु=प्रकार एव अर्थात् वस्तुविशेषांश एव विपर्ययः=विपरीतज्ञानादिकं भवतीत्यर्थः । यतः=यतो हेतोः तद्विशेषावगत्यर्था=तस्य वस्तुनो विशेषः प्रकारः तस्य या अवगतिर्ज्ञानं तदर्था तत्प्रयोजना जिज्ञासा=ज्ञातुमिच्छा विचारः दृश्यते=अनुभूयते लोक इति शेषः । सर्वो हि सन्दिग्धो विपर्यस्तो वा जनो वस्तुविशेषावगत्यर्थमेव विचाराय प्रवर्त्तते, तस्माद् वस्तुसामान्यांशे ज्ञानमभ्रान्तं, भ्रान्तन्तु तद्विशेषांश इति भावः॥११४॥

सं—अब अज्ञानादि चतुष्टय के अभाव स्थल को दिखाते हैं—

पदार्थ—धर्म्यंशे=धर्मी के अंश में अर्थात वस्तु के सामान्यांश में ज्ञानम्=ज्ञान अभ्रान्तम्=भ्रमरूप नहीं होता किन्तु भ्रमभिन्न (यथार्थ) होता है प्रकारे तु=प्रकार में ही अर्थात् वस्तु के विशेषांश में ही विपर्ययः[1]=विपरीत ज्ञान देखा गया है यतः=जिस कारण से तद्विशेषावगत्यर्था=वस्तु के विशेषस्वरूप के निश्चयार्थ ही जिज्ञासा=(लोक में) विचार दृश्यते=देखा जाता है ।

भाव यह है कि—प्रत्येक पुरुष जिसको किसी पदार्थ में संशय अथवा विपर्यय उत्पन्न हुआ हो वह उस पदार्थ के विशेषस्वरूप को जानने के लिये ही विचार में प्रवृत्त होता है सामान्यांश को जानने के लिये नहीं, क्योंकि

१—यहां विपर्यय शब्द अज्ञान सन्देह और अभावज्ञान इनका भी उपलक्षक है ।

भ्रान्ति आदि का विषय विशेषांश ही होता है, इस से यह स्पष्टसिद्ध है कि धर्मी अंश में अज्ञानादि चतुष्टय नहीं होते और उसके विशेषांश में होते हैं। इस प्रकार वस्तु का सामान्य अंश अज्ञानादि के अभाव का स्थल जानना चाहिये ॥११४॥

एवं स्थिते वस्तुसामान्यस्वरूपावगाहनाय न प्रमाणाद्यपेक्षेत्याह—"अज्ञानादिप्रकाशांशे" इति—

**अज्ञानादिप्रकाशांशे नाज्ञानादिचतुष्टयम् ।**
**तत्स्वरूपप्रमा तस्मिन्नज्ञानादिविरोधिनी ॥११५॥**

अज्ञानादिप्रकाशांशे=अज्ञानादीनां प्रकाशको यः स्वरूपचैतन्यांशः तस्मिन् अज्ञानादिचतुष्टयम्=अज्ञानसन्देहाभावज्ञानविपर्ययाः न=नैव भवन्ति[1] । तस्मिन्=प्रकाशांशे या तत्स्वरूपप्रमा=स्वरूपभूतं चैतन्यं सा अज्ञानादिविरोधिनी=अज्ञानादीनां बाधिका वर्त्तते, नहि स्वरूपभूतं चैतन्यमपह्नोतुमज्ञानादीनां सामर्थ्यमस्त्यतस्तत्र प्रमाणादेरपेक्षैव नास्तीति भावः ॥११५॥

सं—वस्तु[2] के सामान्यांश के ज्ञानार्थ प्रमाणादि की अपेक्षा का अभाव कथन करते हैं—

पदार्थ—अज्ञानादिप्रकाशांशे=अज्ञानादि का प्रकाशक

---

१ अयमत्राभिसन्धिः—अज्ञानादिप्रकाशांशेऽपि यदि अज्ञानादयः स्युस्तर्हि अप्रकाशिततया तेषामसिद्धिरेव स्यात् इति तत्सिद्ध्यन्यथाऽनुपपत्त्या अज्ञानादिप्रकाशांशेऽज्ञानादीनामभावः स्वीकार्यः ।

२—परमार्थसत् ब्रह्मचेतन ।

जो सामान्य चेतनांश उसमें अज्ञानादिचतुष्टयम्=अज्ञान, सन्देह, अभावज्ञान तथा विपर्यय (विपरीत ज्ञान) यह चारों न=नहीं होते हैं क्योंकि तस्मिन्=उस सामान्यप्रकाश अंश में तत्स्वरूपप्रमा=प्रकाशस्वरूप चैतन्य प्रमा अज्ञानादि-विरोधिनी=अज्ञानादिकों का विरोध करने वाली है।

भाव यह है कि स्वरूपभूत चैतन्य किसी प्रमाणादि की अपेक्षा नहीं करता और नाही अज्ञानादिक स्वरूपचैतन्यांश का आवरणादि करने में समर्थ हो सक्ते हैं। अतः स्वरूप-चैतन्य सर्वथा निराबाध तथा परापेक्षा से रहित है ॥११५॥

"ज्ञातृज्ञानान्तराभावाद्" (१। १०९) इत्यत आरभ्य "अज्ञाना-दिप्रकाशांशे" (१।११५) इति पर्यन्तमुक्तमर्थं पिण्डीकृत्य दर्शयति "स्वापरोक्ष्ये"ति—

**स्वापरोक्ष्यस्वभानस्वव्यवहारस्वमानताः।**
**स्वतः सिध्यन्ति यस्यैव तज्ज्योतिर्ज्योतिषां श्रुतम्॥**

यस्य=आत्मनः स्वापरोक्ष्यस्वभानस्वव्यवहारस्वमानताः=अपरोक्षस्य भावः आपरोक्ष्यं स्वस्याऽऽपरोक्ष्यं स्वापरोक्ष्यम्, स्वस्य भानं स्वभानम्, स्वव्यवहारः स्वसम्बन्धिशब्दप्रयोगः, स्वमानता स्व-विषयकप्रमाणता अथवा स्वनिष्ठप्रमात्वम्, एतानि स्वतः=स्वत एव परापेक्षां विनैव सिद्ध्यन्ति=सिद्धानि भवन्ति तत्=तत्सर्वात्म-भूतं ब्रह्मचैतन्यं ज्योतिषाम्=आदित्यादीनामपि ज्योतिः=प्रकाशकम् श्रुतम्=श्रुतितात्पर्यविषयीभूतमित्यर्थः। तथाच श्रुतिः—"न तत्र

सूर्यो भाति" इत्यादिकोक्तैव विज्ञेया ॥११६॥

सं—अब उक्त अर्थ का निष्कर्ष दिखाते हैं—

पदार्थ—यस्य=जिस आत्मा की स्वापरोक्ष्यस्वभानस्वव्यवहारस्वमानताः=अपनी अपरोक्षता, अपनी प्रतीति, अपना व्यवहार तथा अपनी प्रमाणता यह सब स्वतः सिद्धयन्ति=स्वतः ही सिद्ध होते हैं तत्=वह ज्योतिषाम्=सूर्यादि ज्योतियों का भी ज्योतिः=प्रकाशक श्रुतम्=श्रुति द्वारा प्रतिपादन किया गया है।

तथाच श्रुतिः—"अत्रायं पुरुषः स्वयञ्ज्योतिर्भवति" (बृ० ८। ३।९) अर्थात् इस स्वप्नावस्था में आत्मा स्वयञ्ज्योति है। अथवा—"न तत्र सूर्यो भाति"इत्यादि श्रुतियें भी जान लेनी ॥

न केवलमात्मनः स्वयञ्ज्योतिष्ट्वं श्रौतमेव किन्त्वनुमानसिद्धमपीत्याह—"अवेद्यत्वे"ति—

**अवेद्यत्वापरोक्षत्वात्स्वप्रकाशो भवत्ययम् ।**
**व्यवसायोऽथ यो नैवं स एवं न यथा घटः ॥११७॥**

अयम्=सर्वस्याप्यसन्दिग्धोऽविपर्यस्तश्च व्यवसायः=ज्ञानस्वरूप आत्मा स्वप्रकाशः=स्वयञ्ज्योतिः भवति। कुतो हेतोरित्याह "[2]अवेद्यत्वाऽपरोक्षत्वात्" इति। अवेद्यत्वे सति अपरोक्षव्यवहार-

---

१—कठ० ५।१५; श्वे० ६ १४; मुं० २।२।१०।

२—खपुष्पेऽतिव्याप्तिवारणाय अपरोक्षत्वमुक्तम्। घटादावतिव्याप्तिवारणाय अवेद्यत्वमुक्तम्।

विषयत्वादित्यर्थः । अत्र व्यतिरेकिदृष्टान्तं दर्शयति—"अथ" इति । अथ यः=यः कोऽपि पदार्थः एवं न=आत्मवत् स्वयम्प्रकाशो न भवति सः एवं न=स पदार्थः अवेद्यत्वे सत्यपरोक्षोऽपि न भवति, यथा=येन प्रकारेण यद्वदित्यर्थः घटः=घटो न स्वप्रकाशः । अन्यथा तस्य वेद्यत्वापरोक्षत्वे न स्यातामिति भावः ॥११७॥

अत्रायं प्रयोगः—"आत्मा स्वयम्प्रकाशः अवेद्यत्वे सत्यपरोक्षत्वात् व्यतिरेके घटवत्" इति । नच विशेषणाऽसिद्धो हेतुः आत्मनः स्वसंवेद्यत्वे कर्मकर्तृविरोधात् परवेद्यत्वेऽनवस्थापातात् । अतः स्वप्रकाशत्वेन भासमानोऽयमात्मेत्यात्मन एव सर्वावभासकत्वसम्भवान्न जगदान्ध्यप्रसङ्गः । तार्किकाभिमतो व्यवसायस्तु घटवदनात्मैव अनुव्यवसायवेद्यत्वात् । अनुव्यवसायस्य स्वयम्प्रकाशत्वस्वीकारे त्वस्मन्मतप्रवेश इति सूक्ष्मधिया निरीक्ष्यम् ॥ ११७ ॥

सं०—आत्मा की स्वयम्प्रकाशता को श्रुतिसिद्ध कथन करके अनुमानप्रौढि के अभिमानी तार्किकों के सन्तोषार्थ अब उक्त अर्थ में अनुमान प्रमाण कथन करते हैं—

पदार्थ—अयम्=सर्वानुभवस्वरूप व्यवसायः=ज्ञानस्वरूप आत्मा स्वप्रकाशः=स्वयम्प्रकाश भवति=है अवेद्यत्वापरोक्षत्वात्=अवेद्य तथा अपरोक्ष होने से। "जो स्वयम्प्रकाश नहीं वह अवेद्य

१ मूल में अवेद्यत्व सहकृत अपरोक्षत्व व्यवसाय (ज्ञान) के स्वप्रकाशत्व में हेतु कथन किया है। वहां घटादि वेद्यों में अतिव्याप्ति के वारणार्थ 'अवेद्यत्व' पद का सन्निवेश किया है और खपुष्पादिकों में अतिव्याप्ति वारण करने के लिए 'अपरोक्षत्व' पद को रक्खा है ॥

और अपरोक्ष भी नहीं होता" इस अर्थ में व्यतिरेकी दृष्टान्त कथन करते हैं)—अथ=और यः=जो एवं=ऐसा न=नहीं (अर्थात् स्वयम्प्रकाश नहीं) स एवं न=वह अवेद्य और अपरोक्ष भी नहीं यथा=जैसे घटः=घट है, घट स्वयंप्रकाश न होने से वेद्यत्वसहकृतअपरोक्षत्व वाला है अवेद्यत्वसहकृतअपरोक्षत्व वाला नहीं ॥

भाव यह है कि घट वेद्य होकर अपरोक्ष होता है परन्तु व्यवसाय=ज्ञानस्वरूप आत्मा अवेद्य होता हुआ ही अपरोक्ष होता है अत एव वह स्वयम्प्रकाश है ॥११७॥

ननु व्यवसायोऽपि वेद्योऽनुव्यवसायगम्यत्वादिति विशेषणाऽसिद्धो हेतुरिति शङ्कमानं तार्किकं प्रत्याह—"वेद्यते" ति—

**वेद्यताजन्मनाशाद्या व्यवसायस्य विक्रियाः ।**
**ये मन्यन्ते बुधास्तेषां सम्पन्नस्तरणिस्तमः ॥११८॥**

ये बुधाः[1]=ये तर्कमतानुगाः पण्डिताः वेद्यताजन्मनाशाद्याः=वेद्यस्य भावो वेद्यता ज्ञेयतेत्यर्थः, जन्मोत्पत्तिः प्रागभावप्रतियोगित्वमिति यावत् नाशो ध्वंसप्रतियोगित्वमित्याद्याः व्यवसायस्य=ज्ञानस्य विक्रियाः=विकारान् मन्यन्ते, तेषाम्=तेषां तर्ककौशलाभिमानिनां तरणिः=सूर्यः, तमः=अन्धकारः सम्पन्नः=सिद्धो भवति, । यथा सूर्यस्य तमोभावोऽनुपपन्नस्तथैव व्यवसायस्य वेद्यत्वजन्मादिविकारोऽपीत्यहो पाण्डित्यं तार्किकाणामित्युपहासः ॥११८॥

१ यद्वा 'मन्यन्ते बुधा' इत्यत्राकारप्रश्लेषयुक्त्या वस्तुतस्तु ते अबुधा एव इति सूचितम् ।

सं०—ननु–व्यवसायज्ञान अनुव्यवसाय के द्वारा वेद्य भी है और अपरोक्ष है इस लिये उक्त हेतु "विशेषणाऽसिद्ध" हेत्वाभास जानना चाहिये ? उत्तरः—

पदार्थ—ये बुधाः=जो तार्किक वेद्यताजन्मनाशाद्याः= वेद्यत्व, जन्म, नाश आदि व्यवसायस्य=व्यवसाय ज्ञान के विक्रियाः=विकार मन्यन्ते=मानते हैं तेषाम्=उनके मत में तरणिः= सूर्य को तमः=अन्धकार भाव को सम्पन्नः=प्राप्त हुआ समझना चाहिये ।

भाव यह है कि—जैसे सूर्य का तम होना सर्वथा असम्भव है वैसे ही ज्ञान के वेद्यत्व तथा उत्पत्ति आदि विकार भी नहीं बन सक्ते, किन्तु उस को स्वयम्प्रकाश ही मानना समीचीन है ॥ ११८ ॥

भूयोऽपि तार्किकमतं दूषयन् खेदमाश्चर्यं वा प्रकटीकरोति "स्वतः सिद्धम्"इति—

**स्वतःसिद्धमदूरस्थं सर्वसाधकमच्युतम् ।**
**महोऽप्यस्तमहो मोहमाहात्म्यं तर्कसम्मतम् ॥११९**

अहो=इति महान्शोकः आश्चर्यं वा । किन्तदित्याह–स्वतः- सिद्धम्=स्वत एव सिद्धममेयत्वात् अदूरस्थम्=न दूरस्थमदूरस्थं

१ इस श्लोक में यह ध्यान रहे कि व्याकरण नियमानुसार "मन्यन्ते अबुधाः" ऐसा पदच्छेद भी बन सकता है इस से आत्मा को घटादि की भांति वेद्य मानने वाले अज्ञानी हैं यह भी सूचित किया गया है ॥

सर्वस्याप्यात्मत्वात्, सर्वसाधकम्=सर्वस्य चराचरस्य साधकं प्रकाशकं सत्तास्फूर्त्तिप्रदत्वात् अतएव अच्युतम्=न च्युतमच्युतमविनाशि सर्वव्यापकत्वात् "अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्" ( भ० गी० २ । १७ ) इति स्मृतेः एतादृशं यत् महः=ज्योतिषामपि ज्योतिः सर्वावभासकं चिन्मयं तेजः तद् अपि अस्तम्=अस्ततां गतं "तार्किकमते" इति शेषः। तदेतत् तर्कसम्मतम्=तर्कमतप्रविष्टं मोहमाहात्म्यम्=मोहस्य अज्ञानस्यैव माहात्म्यं बलमस्ति यदेतादृशं स्वतःसिद्धं ज्योतिस्तार्किकैर्न मन्यते तत्तेषां महदज्ञानमेवेति भावः ॥११९॥

सं०—अब प्रकारान्तर से तार्किक मत में दूषण कथन करते हुए खेद [ अथवा आश्चर्य ] प्रकट करते हैं—

पदार्थ—अहो=बहुत शोक [अथवा आश्चर्य] है ।(कैसे है ? सो कथन करते हैं) स्वतः सिद्धम्=जो प्रमाण से अगोचर स्वतः सिद्ध है और अदूरस्थम्=सब का अन्तरात्मा होने से अतिसमीप है सर्वसाधकम्=सब के प्रति सत्तास्फूर्त्ति देने से सर्वसाधक है और अच्युतम्=सर्वव्यापक अर्थात् देश कालादि परिच्छेद से रहित होने के कारण अच्युत अविनाशि महः=तेज है वह अपि=भी अस्तम्=न्यायमत में लुप्त हो गया है, यह तर्कसम्मतम्=तर्क मत में प्राप्त हुआ मोहमाहात्म्यम्=अज्ञान का ही सामर्थ्य जानना चाहिये ।

सार यह है कि स्वतःसिद्ध सर्वावभासक आत्मज्योति

को न मानने वाले नैयायिकों के मत में सर्वथा अज्ञान का ही प्रभाव है यही आश्चर्य वा खेद[1] है ॥११९॥

सम्प्रति "शुद्धचिन्मात्र०" (१।८०)इत्यादिनोपक्रान्तं मिथ्यादर्शनमुपसंहरति "नित्यकूटस्थे"ति—

**नित्यकूटस्थचिन्मात्रः साक्षी भाति न यन्मते ।**
**तन्मिथ्यादर्शनं सिद्धं तमोमूलमिति स्थितम् ॥१२०**

यन्मते=यस्य नैयायिकादेर्मते सिद्धान्ते नित्यकूटस्थचिन्मात्रः=नित्यः त्रैकालाबाध्यश्चासौ कूटस्थो निर्विकारः चिन्मात्रः चिद्रूपः साक्षी=साक्षाद् द्रष्टा अर्थात् सर्वप्रकाशक आत्मा न भाति=नैव भातोऽस्ति, यन्मते एवंविधस्यात्मनोऽनङ्गीकार इत्यर्थः तत्=तदेव तमोमूलम्=अज्ञानमूलकम् मिथ्यादर्शनम्=वेदविरोधि दर्शनं सिद्धम्=सिद्धं भवति इति स्थितम्=एष एव सिद्धान्तो विज्ञेय इति फलितम् ॥ १२० ॥

सं०—अब "शुद्धचिन्मात्रे"त्यादि [ १।८० ] श्लोक से उपक्रान्त मिथ्यादर्शन का उपसंहार करते हैं—

पदार्थ—यन्मते=जिस नैयायिकादि के मत में नित्यकूटस्थचिन्मात्रः=नित्य [ त्रैकालाबाध्य] कूटस्थ [निर्विकार] चिन्मात्र [ चेतन स्वरूप ] साक्षी=सब का प्रकाशक आत्मा

---

१ आश्चर्य इस लिये कि नैयायिक स्वतःसिद्ध वस्तु का अपलाप करते हैं और खेद इसलिये कि ऐसे अज्ञान के अधीन हुए जीवों का कब उद्धार होगा इस से अज्ञानियों के विषय में सिद्धान्ती का दयाभाव ही जानना चाहिये ।

न भाति = भान नहीं होता, या यूं कहो कि—जो उक्त स्वरूप आत्मा को अङ्गीकार नहीं करते तत् = वह तमोमूलम् अज्ञानमूलक मिथ्यादर्शनम् = मिथ्यादर्शन सिद्धम् = सिद्ध है इति स्थितम् = यह सिद्धान्त है, अर्थात उक्त स्वरूप आत्मा को अङ्गीकार न करने वालों का दर्शन ही "मिथ्यादर्शन" कहाता है ॥१२०॥

सम्प्रति मिथ्यादर्शनप्रतियोगि सम्यग्दर्शनमाह—"पृथग्" इति—

पृथगेवात्मनो धर्माः पृथग्धर्मास्त्वनात्मनः ।
न यस्मिन्धर्मसाङ्कर्यं तत्सम्यग्दर्शनं सताम् ॥१२१

आत्मनः धर्माः=सत्त्वादयः पृथग् एव=अन्य एव सन्ति । अनात्मनः तु=जडस्याहमादिवर्गस्य तु धर्माः=परप्रकाश्यजाड्यादयः पृथग्=आत्मधर्मेभ्यो विलक्षणा एव (अनया रीत्या द्वयोरात्मानात्मनोः) धर्मसाङ्कर्यम्=धर्माणां सङ्करभावः यस्मिन्=दर्शने न=नास्ति तत्=तदेव सताम्=व्यासादीनां महर्षीणां सम्मतं दर्शनम्=शास्त्रम् सम्यग्=समीचीनं सत्यमिति यावत् ।

श्रुतिपारङ्गतानां श्रुतितात्पर्यज्ञानवतामेव दर्शनं सम्यग्दर्शनं नेतरेषां शुष्कतर्काडम्बरिणां कुतार्किकाणामिति भावः ॥१२१॥

सं०—अब सम्यक् दर्शन का स्वरूप कथन करते हैं—

पदार्थ—आत्मनः=आत्मा के धर्माः=चैतन्यानन्दादि धर्म पृथक् एव=अन्य ही हैं अनात्मनः तु=और अहङ्कारादि

अनात्मा के धर्माः=धर्म पृथक्=पृथक् ही हैं, (अर्थात आत्म-धर्मों से विलक्षण है । इस प्रकार ) यस्मिन्=जिस दर्शन में (आत्मा, अनात्मा के) धर्मसाङ्कर्यम्=धर्मों का सङ्करभाव न=नहीं है तत्=वही सताम्=व्यासादि महर्षियों का अभिमत (दर्शन ) सम्यक् दर्शनम्="सम्यग्दर्शन" कहाता है ॥१२१॥

के त आत्मधर्मा येऽनात्मधर्मेभ्यो विविक्ता इत्यापृच्छमानं प्रत्याह "अस्ति"इति—

**अस्त्यात्मैकः स्वतःसिद्धो नित्योऽनित्यावभासकः ।**
**कूटस्थः श्रुतितात्पर्यविश्रान्तिभूमिरद्वयः ॥१२२॥**

आत्मा एकः=अद्वितीयः अस्ति, त्रिविधोऽपि भेद आत्मनि नास्तीति भावः । स पुनः कीदृशः इत्याह—स्वतःसिद्धः= परानपेक्षसत्तात्मकः नित्यः=त्रैकालाबाध्यः, तथा अनित्यावभासकः= अनित्यस्याहमाद्यनात्मवर्गस्य प्रकाशकः साक्षिभूत इत्यर्थः तथाच कूटस्थः=निर्विकारः श्रुतितात्पर्यविश्रान्तिभूमिः=श्रुतीनां तात्पर्यस्य समन्वयस्य या विश्रान्तिः विरामोऽवसानमिति यावत् तस्याः भूमिः श्रुतितात्पर्यविषय इत्यर्थः । एवम्—अद्वयः=द्वैतविवर्जितः । एते स्वतःसिद्धत्वादयः स्वरूपादनतिरिक्ताः सन्तोऽपि जिज्ञासुजनमनःसन्तोषाय धर्मा इत्युच्यन्ते । अनात्मा तु एभ्यो विलक्षणः अर्थात् परतःसिद्धो नानाऽनित्यः परावभास्यो विकारी श्रुतितात्पर्याऽविषयः सद्वयश्चेति बोध्यम् ।

---

१ अत्र **एकाद्वय**शब्दाभ्यामात्मनि त्रिविधस्यापि भेदस्याभावो ज्ञाप्यते तथाहि सजातीयस्वगतभेदनिराकरणपरः **एक**शब्दः, विजातीयभेदनिराकरणपरश्च **अद्वय**शब्दः । एवमेव **आत्म**शब्देन देशवस्तुकृतपरिच्छेदौ **नित्य**शब्देन च कालकृतपरिच्छेदो निरस्ता वेदनीया इत्यसङ्करः ।

इदन्तु बोध्यम्=अत्र अस्तित्वेन शून्यवादस्य, एकत्वेन नानावादस्य, स्वतःसिद्धत्वेन परतःसिद्धत्वस्य, नित्यत्वेनाऽनित्यत्वस्य, अनित्यावभासकत्वेन जडत्वस्य, कूटस्थत्वेन प्राभाकराभिमतस्य, श्रुतितात्पर्यविषयत्वेन चात्मनि प्रमाणान्तरस्य व्युदासः ॥ १२२ ॥

सं०—अब अनात्मा से विलक्षण आत्मधर्मों का कथन करते हैं—

पदार्थ—आत्मा=आत्मा एकः=एक स्वतःसिद्धः=स्वतः सिद्ध नित्यः=नित्य, अनित्यावभासकः=अहङ्कारादि अनित्य अनात्म पदार्थ का प्रकाशक=सत्तास्फूर्तिदेनेवाला, कूटस्थः=निर्विकार, श्रुतितात्पर्यविश्रान्तिभूमिः=श्रुतियों के तात्पर्य का विश्रामस्थान अर्थात सकल वेदवाक्यों का जिस के बोधन कराने में ही परम तात्पर्य है, और अद्वयः=द्वैतवर्जित अस्ति=है[1] ।

यहां इतना विशेष ध्यान रहे कि–"अस्ति" कथन से शून्यवाद का, "एक" से नानावाद का, "स्वतःसिद्ध" से परतःसिद्धत्व का, "नित्य" से अनित्यत्व का, "अनित्यावभासक" से जडत्व का, "कूटस्थ" से प्राभाकरादि अभि-

१—यहां पर ध्यान रखना चाहिये कि **एकः** इस शब्द से सजातीय और स्वगत भेदों का, **अद्वयः** पद से विजातीय भेद का, **आत्मा** पद से देशकृत और वस्तुकृत परिच्छेदों का और **नित्यः** पद से कालकृत परिच्छेद का निराकरण किया गया है।

मत आत्मा का, और "श्रुतितात्पर्यविश्रान्तिभूमि" पद से प्रमाणान्तर की विषयता का निरास किया है। किञ्च— उक्त विशेषणों के व्यतिरेक से नानात्व, परतःसिद्धत्व, विकारवत्त्व, अस्थिरत्व, सद्वयत्व, और श्रुतितात्पर्य का विषय न होना इत्यादि धर्म अनात्मा के जानने चाहिये १२२.

नन्वेवंविधश्चेदात्मा कुतो न सर्वेषां भाति यथाऽनात्मेत्याह "तस्याऽज्ञाने" इति—

**तस्याऽज्ञाने प्रमाणं स्युर्वितर्का भिन्नवादिनाम् ।**
**यतोऽनूह्या विनाऽज्ञानमात्मानात्मसधर्मता ॥१२३**

भिन्नवादिनाम्=भेदवादिनां साङ्ख्यादीनां नास्तिकानां वा चार्वाकादीनां वितर्काः=विविधास्तर्काः देहः प्राणो मनो विज्ञानमानन्दो वा आत्मेत्येवज्जातीयिकाः कल्पनाः तस्य=अद्वयात्मनः अज्ञाने=अबोधे प्रमाणम्=उपपादकाः स्युः=सन्तीत्यर्थः। नह्यसत्त्वेनात्मोपलम्भाभावोऽपित्वज्ञानप्रयुक्तोपलब्ध्यभाव इति भावः। अत्रैवार्थे उपपत्तिमाह—"यतः" इति। यतः=यस्मात् कारणात् अज्ञानं विना=अनाद्यबोधमन्तरेण आत्माऽनात्मसधर्मता=आत्मानात्मनोः समानधर्मता धर्माणां साङ्कर्यम् अन्योन्याध्यासपदवाच्यम् अनूह्या=ऊहितुमशक्या, नहि रज्जौ सर्पधर्मकल्पनायां शुक्तौ वा रजतधर्मकल्पनायामज्ञानादन्यन्निमित्तं भवितुमर्हति, तद्वत् प्रकृतेऽप्यात्मनि अनात्मधर्मारोपस्याऽनात्मनि वाऽऽत्मधर्मारोपस्याज्ञानमेवैकं शरणमस्तीति भावः ॥१२३॥

सं०—ननु उक्तलक्षण स्वतःसिद्ध आत्मा की सब

को प्रतीति क्यों नहीं होती ? ऐसी शङ्का होने पर कथन करते हैं—

पदार्थ—भिन्नवादिनाम्=साङ्ख्य चार्वाकादि भेदवादियों की वितर्काः=नाना प्रकार की कल्पना ही तस्य=उस आत्मा के अज्ञाने=अज्ञान में प्रमाणम्=प्रमाण स्युः=हैं यतः= क्योंकि अज्ञानम् विना=अज्ञान के विना आत्माऽनात्मसधर्मता= आत्मा और अनात्मा की समानधर्मता (अर्थात दोनों के धर्मों का अन्योन्याध्यास) अनूह्या=तर्कित नहीं की जा सक्ती।

भाव यह है कि—जिस प्रकार रज्जु में सर्पधर्मों की समानता ( सर्पबुद्धि ) तथा शुक्ति में रजतधर्मों की समानता ( रजतबुद्धि ) अज्ञान के विना नहीं होती वैसे ही अद्वय आत्मा में वादियों की नाना प्रकार की कल्पना अज्ञान के विना कदापि नहीं हो सकती ॥१२३॥

आत्मानात्मनोः साधर्म्यमेव स्फुटं निराकरोति "अनित्ये"ति—

**अनित्याव्याप्यनात्मस्थं नित्यव्याप्यात्मनीच्छताम् ।**
**धर्मं[1] तर्कात्कुतस्तस्मिन्नित्यव्याप्यात्मतामतिः ॥१२४॥**

अनित्याव्याप्यनात्मस्थम्=अनित्ये अव्यापिनि अर्थात् परिच्छिन्ने अनात्मनि तिष्ठतीति अनित्याव्याप्यनात्मस्थः तं तादृशं धर्मम्= स्वभावम् तर्कात्=श्रुतिनिरपेक्षात् केवलात् तर्कात् नित्यव्याप्यात्मनि=

१—अथवा धर्मान् इत्यर्थः, जातावेकवचनम् ।

नित्ये व्यापिनि आत्मनि इच्छताम्=कामयमानानां तार्किकाणाम् तस्मिन्=आत्मनि नित्यव्याप्यात्मतामतिः=नित्यत्वव्यापकत्वात्मत्वं विषयीकुर्वाणा बुद्धिः कुतः=कस्माद्धेतोः भवेदिति शेषः।

तार्किका हि आत्मानं नित्यं व्यापकञ्च मन्वतेऽथ च तत्र ज्ञानादीनां धर्माणां विकारमाचक्षते, विकारश्चानात्मधर्मो यथा घटादेः तदित्थमनात्मधर्मवन्तमात्मानं कथयतां महानयं व्यामोह एवेति भावः।

अत्रायं प्रयोगो विज्ञेयः—"न्यायाभिमत आत्माऽनात्मा भवितुमर्हति अनात्मधर्मवत्त्वात् घटादिवत्" इति ॥१२४॥

सं०—अब आत्मा तथा अनात्मा की समानधर्मता के निराकरण में युक्ति कथन करते हैं—

पदार्थ—अनित्याव्याप्यनात्मस्थम्=अनित्य परिच्छिन्न अनात्मा में स्थित धर्मम्=धर्म को तर्कात्=केवल शुष्कतर्क से नित्यव्याप्यात्मनि=नित्य व्यापक आत्मा में इच्छताम्=माननेवाले तार्किकों की तस्मिन्=उस शुद्ध आत्मा में कुतः=किस कारण के द्वारा नित्यव्याप्यात्मतामतिः=नित्य और व्यापक आत्मविषयिणी बुद्धि प्राप्त हुई है।

भाव यह है कि—तार्किक आत्मा को नित्य विभु मानकर भी उसमें ज्ञानादि अनित्यगुणों का उत्पत्तिविनाशरूप विकार मान लेते हैं जैसा कि घटादि अनात्म पदार्थों में रूपादि अनित्यगुणों का उत्पत्तिविनाश देखा गया है। परन्तु उनका यह मानना किस तर्क के आधार पर है यह

महान् आश्चर्य है। यहां ऐसा अनुमान जानना "न्यायाभिमत आत्माऽनात्मा भवितुमर्हति अनात्मधर्मवत्त्वात् घटादिवत्" =न्यायमतसिद्ध आत्मा, अनात्मा होने के योग्य है, अनात्म-धर्मवाला होने से, जैसे घटादिक पदार्थ अनात्मधर्मवान् होने के कारण अनात्मा हैं ॥१२४॥

सम्प्रति आत्मनो वास्तवं स्वरूपमाह "अनित्ये"ति—

**अनित्याव्याप्यनात्मस्थाः सर्वे धर्माः स्वभावतः।**
**व्यावर्तन्ते यतस्तस्मिन्नित्यव्याप्यात्मतोचिता॥१२५**

अनित्याव्याप्यनात्मस्थाः=अनित्ये विनाशिनि अव्यापिनि परिच्छिन्ने अनात्मनि वर्त्तमानाः ये सर्वे धर्माः=जडत्वानृतत्वादयः स्वभावतः=स्वतः एव यतः=यस्मादात्मनः व्यावर्त्तन्ते=दूरतस्तिष्ठन्ति यमात्मानं वस्तुतो न स्पृशन्ति यथाऽहिविषं गुणं न स्पृशति तस्मिन्=तस्मिन्नेव परमार्थे वस्तुनि नित्यव्याप्यात्मता=नित्यत्वाऽपरिच्छिन्नत्वसमानाधिकरणमात्मत्वमित्यर्थः उचिता=योग्येत्यर्थः।

यत्राऽनात्मधर्माणां जाड्यादीनां मात्रयाऽपि न स्पर्शः यश्चाऽपरिच्छिन्नोऽनन्तश्चिद्धपुरानन्दघनः स एवात्मेति भावः ॥१२५॥

सं०—अब आत्मा का वास्तव स्वरूप कथन करते हैं—

पदार्थ—अनित्याव्याप्यनात्मस्थाः=अनित्य अव्यापि अनात्मा में होने वाले सर्वे धर्माः=सब जाड्यादि धर्म स्वभावतः=स्वभाव से ही यतः=जिस से व्यावर्त्तन्ते=निवृत्त रहते हैं, तस्मिन्=उसी परमार्थ वस्तु में नित्यव्याप्यात्मता=नित्यत्व तथा

व्यापकत्व की समानाधिकरण आत्मता उचिता=योग्य है।

अर्थात् स्वभाव से ही जिस में अनात्मसम्बन्धी जाड्यादि धर्मों का स्पर्श नहीं, वही अपरिच्छिन्न ( अनन्त ) चिन्मात्र आनन्द घन स्वरूप आत्मपदार्थ है ॥१२५॥

नन्वात्मन्यपि घटादिवद्वेद्यत्वादिसधर्मता अन्यथा तद्विचाराय [जिज्ञासूनां] प्रवृत्तिरेव नोदीयादिति शङ्काव्युदसनव्याजेन ११३ श्लोकोक्तमर्थमुपसंहरति—"चिद्भास्यः" इति—

चिद्भास्योऽपि च यो धर्मोऽचिद्रूपे च समीक्षितः।
चिद्रूपे वर्णनं तस्य चिदज्ञाननिबन्धनम् ॥१२६॥

चिद्भास्यः अपि च यः धर्मः=यश्च वेद्यत्वादिधर्मो वस्तुतश्चिद्भास्यः चिन्मात्रसत्तानिबन्धनः च=अथच अचिद्रूपे=जडे घटादौ समीक्षितः=वस्तुतो वर्त्तमानो भाति तस्य=तादृशस्य ज्ञेयत्वादेर्धर्मस्य चिद्रूपे=चिन्मात्रैकवपुष्यात्मनि वर्णनम्=कथनं भानं वा चिदज्ञाननिबन्धनम्=चिदाश्रितं यदज्ञानं तद्धेतुकं वेदितव्यमिति शेषः। नह्यन्यधर्मोऽन्यत्र भासमानोऽज्ञानं विना भवितुमर्हति रज्ज्वादौ सर्पत्वादेर्भासमानताया अज्ञानैकनिबन्धनत्वेन सर्वसम्मतत्वादिति भावः ॥ १२६ ॥

सं०—ननु अनात्मा के समान आत्मा में भी घटादि की न्याईं वेद्यत्वादि धर्मों की उपलब्धि है, अन्यथा आत्मजिज्ञासा की अनुपपत्ति होगी ? इस आशङ्का के खण्डन व्याज से ११३ श्लोक में कथन किये अर्थ का उपसंहार करते हैं—

**पदार्थ**—चिद्भास्यः अपि च यः धर्मः=जो धर्म चेतन करके भास्य भी होवे (परन्तु वस्तुतः जो) अचिद्रूपे च समीक्षितः=जड अनात्म पदार्थ में साक्षात् देखा गया हो तस्य=उस धर्म का चिद्रूपे=चैतन्य आत्मा में वर्णनम्=कथन अथवा प्रतीति चिदज्ञाननिबन्धनम्=एकमात्र चेतनाश्रित अज्ञानमूलक जाननी चाहिये ॥ १२६ ॥

नन्वस्त्येव घटादिष्वेकत्वं ब्रह्मात्मनि चेति कथमुच्यते आत्माऽनात्मनोर्धर्मसाङ्कर्यं नास्तीति शङ्कायामाह—"एकजात्याश्रयेषु" इति—

**एकजात्याश्रयेष्वेवं दृष्टा प्रत्येकमेकता ।**
**सानेकत्वसमाक्रान्ता नैवानेकत्वमात्मनि ॥१२७॥**

एकजात्याश्रयेषु=एका चाऽसौ जातिर्घटत्वादिरूपा तस्या आश्रयेष्वाधिकरणभूतेषु घटादिष्वेव या प्रत्येकम्=एकमेकं प्रतीति प्रत्येकम् एकैकव्यक्तिवृत्तिः एवम्=एवंरूपा एकता=एकत्वम् इत्यर्थः दृष्टा=प्रत्यक्षाद्युपलब्धाऽस्ति सा=एकता अनेकत्वसमाक्रान्ता=अनेकत्वसङ्ख्यया समाक्रान्ता व्याप्ता एवेति शेषः अनेकत्वम्=नानात्वम् आत्मनि=परमार्थवस्तुन्यद्वये न, एव=नैव दृष्टं श्रुतं वेत्यर्थः तथा च नैवात्मानात्मनोर्धर्मसाङ्कर्यमिति भावः ॥१२७॥

एतेनेदमपि फलितं विज्ञेयम्—तार्किकाभिमत आत्माऽनात्मा भवितुमर्हति अनेकत्वसमाक्रान्तैकत्ववत्त्वात् घटादिवत्" इति । यत्र यत्रानेकत्वसमाक्रान्तैकत्ववत्त्वं तत्र तत्राऽनात्मत्वमिति प्रतिबन्धः, ब्रह्मात्मनि च अनेकत्वसमाक्रान्तैकत्ववत्त्वाभा-

वाद्व्यापकविरुद्धोपलब्धिरिति कथमपि द्वयोर्धर्मसाङ्कर्यं नास्ति। यदि चाकाशकालदिशामेकत्वं ब्रह्मणश्चेति वर्त्तत एव धर्मसाङ्कर्यमिति ब्रूषे तदाऽनभिज्ञोऽसि शास्त्ररहस्यानां भवान् दत्तोत्तरत्वात्,चित्तादात्म्याध्यासनिबन्धनत्वाच्च तदैक्यस्य। विभक्तत्वाच्चाकाशादीनामनात्मत्वं प्रत्यपीपदामेति दिक् ॥ १२७ ॥

सं० — ननु घटनिष्ठ एकत्व धर्म ब्रह्म में भी वर्त्तता है इसलिये दोनों का धर्मसाङ्कर्य स्फुट है? ऐसी आशङ्का के वारणार्थ लिखते हैं—

पदार्थ—एकजात्याश्रयेषु=एक जाति के आश्रयभूत अर्थात घटत्वादि सामान्य के अधिकरणभूत जो घटादिपदार्थ उन में प्रत्येकम्=एक एक के प्रति जो एवं=इस प्रकार की एकता=एकता दृष्टा=देखी गई है सा=वह (एकता) अनेकत्वसमाक्रान्ता=अनेकत्व समानाधिकरण ही है ( अन्यथा नहीं ) परन्तु—आत्मनि=परमार्थ अद्वय आत्मवस्तु में अनेकत्वम्=नानात्व न एव=नहीं है।

भाव यह है कि यद्यपि आत्मा मे एकत्व है और घटादिकों में भी एकत्व उपलब्ध होता है तथापि आत्मा में नानात्व न होने से, नानात्वसमानाधिकरण एकत्व उस का विजातीय ही है अतएव दोनों के धर्मों का साङ्कर्य नहीं।

यहां तार्किकमतविरोधी अनुमान का ऐसा आकार जानना तथाहि—"तार्किकाभिमत आत्माऽनात्मा भवितुम-

हंति अनेकत्वसमाक्रान्तैकत्ववत्त्वाद् घटादिवद्" इति=तर्क-मतसिद्ध आत्मा अनात्मा होने के योग्य है, अनेकत्वविशिष्ट एकत्वधर्मवाला होने से, घटादि की न्याईं। जैसे घटादिक अनेकत्वविशिष्ट एकत्वधर्मवाले होने से अनात्मा हैं वैसे तार्किक का आत्मा भी अनात्मा ही सिद्ध होता है ॥१२७॥

उक्तमेवार्थं द्रढयति—"अनेकत्वे" इति—

**अनेकत्वसमाक्रान्ता दृष्टाऽनात्मसु चैकता ।**
**सा यस्मिन्ननुवर्तेत तत्राऽनात्मत्वधीर्ध्रुवा ॥१२८॥**

अनात्मसु च=सर्वेषु घटपटाद्यनात्मपदार्थेषु अनेकत्वसमाक्रान्ता=अनेकत्वविशिष्टैव एकता दृष्टा=उपलब्धा सा=अनेकत्वविशिष्टैकता यस्मिन्=यस्मिन् यस्मिन् तार्किकाद्यभिमतात्मनि पदार्थे अनुवर्तेत=अनुवृत्त्या वर्तेत उपलब्धा भवति, तत्र=तस्मिन् तस्मिन् अनात्मत्वधीः=अनात्मत्वबुद्धिः ध्रुवा=निश्चिता अस्तीति शेषः ॥१२८

सं०—अब उक्त अर्थ को ही स्फुट करते हैं—

**पदार्थ**—अनात्मसु च=किञ्च यावत अनात्म पदार्थों में एकता=एकता अनेकत्वसमाक्रान्ता=अनेकत्वविशिष्ट ही दृष्टा=देखी गई है सा=वह ऐसी एकता यस्मिन्=जिस तार्किकाभिमत आत्मादि पदार्थ में अनुवर्तेत=अनुवृत्तरूप से उपलब्ध होती है तत्र=उस उस पदार्थ में अनात्मत्वधीः=अनात्मत्व को विषय करने वाली बुद्धि ध्रुवा=निश्चित ही है, (इस में कोई सन्देह नहीं) ॥१२८॥

ननु केवलमात्मानात्मनोः साधर्म्यमेव न मन्यामहे जडत्वपरिच्छिन्नत्वादिकं वैधर्म्यमपि ब्रूमः इति चेदाह "यद्" इति—

**यत्साधर्म्यसमाक्रान्तं वैधर्म्यं तदनात्मसु ।**
**दृष्टं, तेनानुमातव्याऽनेकात्मस्वप्यनात्मता ॥१२९॥**

यत्=उद्देश्यभूतं साधर्म्यसमाक्रान्तम्=साधर्म्यसमानाधिकरणकं वैधर्म्यम्=विरुद्धो धर्मो येषां ते विधर्माणः विधर्मणां भावो वैधर्म्यं जडत्वपरिच्छिन्नत्वादिकम्, तद्=विधेयभूतम् अनात्मसु=घटपटाद्यनात्मपदार्थेष्वेव दृष्टम्=उपलब्धमुपलभ्यत इति विवक्षितोऽर्थः, तेन=दर्शनेन लिङ्गेन अनेकात्मसु अपि=साङ्ख्यतार्किकाद्यभिमतेषु नानात्मस्वपि अनात्मता=आत्मभिन्नता अनुमातव्या=अनुमितिज्ञानविषयतां नेतव्या । तथाचायं प्रयोगः—"साङ्ख्याद्यभिमत आत्माऽनात्मा भवितुमर्हति साधर्म्यसमानाधिकरणकवैधर्म्यवत्त्वात् घटादिवद्" इति ॥१२९॥

सं०—ननु हम केवल आत्मा अनात्मा का साधर्म्य ही नहीं मानते किन्तु जडत्वादि वैधर्म्य भी स्वीकार करते हैं इसलिये हमारे मत में आत्माऽनात्मा के धर्मों का साङ्कर्य होने से स्वरूपसाङ्कर्य की आपत्ति नहीं हो सकती? ऐसी आशङ्का के होने पर समाधान करते हैं—

पदार्थ—यत्=जो साधर्म्यसमाक्रान्तम्=साधर्म्यविशिष्ट वैधर्म्यम्=(तुम्हारा माना हुआ) आत्मा अनात्मा का वैधर्म्य है तत्=वह अनात्मसु=अनात्ममात्र में ही दृष्टम्=देखा गया है (शुद्ध आत्मा में नहीं) तेन=उस (दर्शनरूप लिङ्ग से)

कारण से अनेकात्मसु अपि=साङ्ख्य,तार्किक अभिमत नाना आत्माओं में भी अनात्मता=अनात्मता अनुमातव्या=अनुमान करने योग्य है।

यहां अनुमान का प्रकार यह है—"साङ्ख्याद्यभिमत आत्मा अनात्मा भवितुमर्हति साधर्म्यसमानाधिकरणकवैधर्म्यवत्त्वात् घटादिवत्" = साङ्ख्यादिकों का माना हुआ आत्मा अनात्मा होने के योग्य है, साधर्म्यविशिष्ट वैधर्म्य वाला होने से, घटादि की न्याईं।

भाव यह है कि—जिस प्रकार घटपटादि अनात्मपदार्थ पदार्थत्व वा द्रव्यत्वरूप से समान धर्म वाले हैं परन्तु उनका घटत्व पटत्वादि वैधर्म्य भी होता है वैसे ही भेदवादियों के आत्मा आत्मत्वेन चेतनत्वेन समानधर्म वाले और जडत्वेन परिच्छिन्नत्वेन वैधर्म्य वाले होते हैं। परन्तु जो २ साधर्म्यविशिष्टवैधर्म्य वाला है वह सब अनात्मा ही देखा गया जैसा कि—घटादि पदार्थ, इस प्रकार व्याप्तिपक्षधर्मता के बल से साङ्ख्यादि नानात्मवादियों का आत्मा अनात्मा ही जानना चाहिये ॥१.२९॥

नानात्मवादे दोषान्तरमप्याह—"अदृष्टाऽनियमादीनाम्" इति—

**अदृष्टाऽनियमादीनां दोषाणां च परम्परा ।**
**स्मर्त्तव्या मुक्तिमिच्छद्भिरात्मानेकत्ववादिभिः॥१.३०॥**

च = चेन दोषान्तरं समुच्चिनोति। किञ्च—मुक्तिम् इच्छद्भिः=

मोक्षकामिभिर्जिज्ञासुभिः सद्भिः आत्मानेकत्ववादिभिः=नानात्मवादिभिः अदृष्टाऽनियमादीनाम्=तत्तदधिकरणावच्छेदेन तत्तददृष्टस्य तत्तत्फलजनकत्वनियमः तद्विरुद्धोऽदृष्टाऽनियमः आदिनाऽभिसन्ध्यादेर्ग्रहणम् तेषामदृष्टाऽनियमादीनां दोषाणाम्=दूषणानाम् परम्परा=प्रवाहः राशिरिति यावत् स्मर्त्तव्या=चिन्तनीया ।

अयमाशयः—साङ्ख्यास्तावन्नानात्मवादिनोऽनात्मसमवायि प्रधानवर्त्ति अदृष्टं मन्वते । तेषां प्रधानसाधारण्यान्नैव तत् प्रत्यात्मं सुखदुःखोपभोगनियामकं भवितुमर्हति । काणादास्तु तमदृष्टगुणमात्मनि समवेतं स्वीकुर्वते. तेषामपि पूर्ववत् साधारणेनात्ममनःसंयोगेन निष्पद्यमानं तदस्यैवात्मन इदमदृष्टमिति नियमहेतोरभावाददृष्टाऽनियमो दोषोऽवर्जनीय एव । सति चैवमदृष्टाऽनियमे सुखदुःखादिसाङ्कर्यं बन्धमोक्षाद्यव्यवस्थादयोऽपि दोषाः प्रादुष्युः । प्रपञ्चितश्चायमर्थो ब्रह्ममीमांसायाः द्वितीयाध्यायस्य तृतीये पादे अंशाधिकरणे "अदृष्टाऽनियमात्" (ब्र० सू० २ । ३ । ५१) इति सूत्रभाष्यादौ ॥१३०॥

सं०—नानात्मवाद में दोषान्तर कथन करते हैं—

पदार्थ—च=और मुक्तिम् इच्छद्भिः=मुक्ति की इच्छा करने वाले आत्मानेकत्ववादिभिः=साङ्ख्यादि नानात्मवादियों को अदृष्टाऽनियमादीनां=अदृष्टाऽनियम आदि दोषाणां=दोषों की परम्परा=परम्परा भी स्मर्त्तव्या=स्मरण करनी चाहिये ।

अर्थात् साङ्ख्यादि अनेकात्मवादी मुक्ति को मानकर

---

१ नैयायिकमते जीवानां विभुत्वेन सर्वेषां सर्वशरीरेषु विद्यमानत्वात् अदृष्टाऽनियमात्=अदृष्टानां पुण्यपापानामनियमात् नियमाभावात् केषाञ्चिद् दारिद्र्यं केषाञ्चिदैश्वर्यमिति व्यवस्था न स्यादित्यर्थः ।

आत्माओं का भेद मानते हैं परन्तु उनके इस नानात्मवाद में "अदृष्टाऽनियम" आदि दोषों की परम्परा प्राप्त होती है–तथाहि साङ्ख्यमत में प्रधानसमवेत अदृष्ट है और आत्मा नाना तथा विभु हैं परन्तु प्रधान का सर्वात्मा के प्रति साधारण सम्बन्ध है इस लिये एक के सुखी दुःखी होने से सब सुखी दुःखी होंगे क्योंकि सब आत्माओं के सन्निधान में उत्पन्न हुए अदृष्ट में यह कोई नियम नहीं हो सकता कि अमुक अदृष्ट अमुक आत्मा का ही है अन्य का नहीं। किञ्च मोक्षावस्था में भी अदृष्टवाले विभुप्रधान का विभु आत्मा के साथ सम्बन्ध बना रहने से पुनः बन्ध की आपत्ति हो जाने से बन्धमोक्ष की व्यवस्था ही नहीं बन सकती, इत्यादि और दोष भी जान लेने।

इसी प्रकार वैशेषिकादि के मत में यही दोष समान रूप से प्राप्त होते हैं क्योंकि इन के मत में भी आत्मा विभु तथा नाना हैं और अदृष्ट आत्माओं में समवायसम्बन्ध से रहता है। एवं मनःसंयोग भी सब आत्माओं के साथ समान है इस लिये तत्तत् अदृष्ट तत्तत् आत्मा का है ऐसा विवेक न हो सकने से सर्वात्माओं के सन्निधान में उत्पन्न हुए अदृष्ट से सब को सुख दुःख भोग समानरूप से बना रहेगा। इसी प्रकार बन्ध मोक्ष की अव्यवस्था भी पूर्ववत् जान लेनी ॥ १३० ॥

औपनिषदनयेऽपि अनादित्वेन साधर्म्यं प्रसञ्जयन्नात्मानात्मनोर्धर्मसाङ्कर्येण विवेकाभावमाक्षिपति—"षण्णाम्" इति—

**षण्णामपि च साधर्म्यं नन्वनादित्वमिच्छताम् ।**
**कुतः स्याद्धर्मसाङ्कर्यादात्मानात्मविवेचनम् ॥१३१॥**

ननु=इति शङ्कायाम् । षण्णाम् अपि च=" जीवेशौ च विशुद्धा चिद्विभेदस्तु तयोर्द्वयोः । अविद्या तच्चितोर्योगः षडस्माकमनादयः" इत्याचार्योक्तिपुरःसरं जीवादिकानां षण्णामपि पदार्थानाम् अनादित्वम्=अनादित्वरूपं साधर्म्यम्=समानं धर्मम् इच्छताम्=स्वीकुर्वतामौपनिषदानां मते इति शेषः धर्मसाङ्कर्यात्=धर्मस्य सङ्करभावात् आत्मानात्मविवेचनम्=आत्मानात्मनोर्विवेकः कुतः=कस्माद्धेतोः स्यात् कथमपि न स्यादित्याक्षेपः ।

अयमत्राशयः पूर्वपक्षिणः—अद्वैतिनो हि जीवादीन् षट् पदार्थाननादीन् मन्यन्ते तेन तेषां नयेऽपि अनादित्वेनात्मानात्मनोः साधर्म्यं प्राप्तमेव, ततश्च तदुक्तरीत्या तत्पक्षे दुःशकस्तयोर्विवेक इति सकलं शास्त्रं विप्लुतं स्यात् । अस्मत्सिद्धान्तानुरोधेन तु कथञ्चित्साधर्म्ये सत्यपि वैधर्म्यज्ञानाद्भवेदेव विवेको येनास्माकं शास्त्रारम्भो न निरर्थक इति ॥१३१॥

सं०—अब पूर्वपक्षी अनादित्वरूप से आत्मा तथा अनात्मा के साधर्म्य द्वारा सिद्धान्त में उन दोनों के विवेक का अभाव कथन करता है—

पदार्थ—ननु=ननु षण्णाम् अपि च=जीवेश्वरादि छः पदार्थों के अनादित्वम्=अनादित्वरूप साधर्म्यम्=साधर्म्य को इच्छताम्=मानने वाले अद्वैतियों के (मत में) धर्मसाङ्कर्यात्=

( आत्मा और अनात्मा दोनों के ) धर्म का सङ्कर हो जाने से आत्मानात्मविवेचनम् = आत्मा, अनात्मा का विवेक कुतः = कैसे स्यात् = हो सकता है ? किन्तु कदापि नहीं हो सकता।

भाव यह है कि—जीव, ईश्वर, शुद्धचैतन्य, उन का परस्पर भेद, अविद्या, अविद्या तथा चैतन्य का परस्पर सम्बन्ध, यह छः पदार्थ वेदान्त मत में अनादि माने हैं, एवं "अनादित्व" रूप से आत्मा अनात्मा का साधर्म्य बना ही रहता है, एकान्ततः वैधर्म्य नहीं। अतः उन के कथनानुसार दोनों का विवेक करना ही कठिन है। विवेकाभाव से शास्त्रारम्भ ही व्यर्थ सिद्ध होता है ॥१३१॥

उक्तमाक्षेपं परिहर्त्तुमाह सिद्धान्ती—"अनेकत्वम्" इति—

अनेकत्वसमाक्रान्ता यथाऽनात्मसु चैकता।
अनित्यत्वसमाक्रान्ता तथाऽनात्मस्वनादिता ॥१३२॥

यथा=येन प्रकारेण अनात्मसु=आत्मभिन्नेषु घटादिव्यक्तिषु अनेकत्वसमाक्रान्ता=अनेकत्वविशिष्टा एकता=एकत्वं "वर्त्तते" इतिशेषः तथा च= तेन एव प्रकारेण तद्वदेवेत्यर्थः अनात्मसु=अनात्मपदार्थेषु अविद्यादिषु अनित्यत्वसमाक्रान्ता=अनित्यत्वविशिष्टा अनादिता= अनादिभावोऽस्तीत्यर्थः। एवञ्च सति आत्मानात्मनोरैकान्तिकमेव वैधर्म्यम् अनात्मनोऽनादेरपि विनाशित्वात् आत्मनश्च तद्व्यतिरेकादिति भावः॥ १३२॥

सं०—अब सिद्धान्ती उक्त आक्षेप का परिहार करता है—

पदार्थ—यथा=जिस प्रकार अनात्मसु=आत्म भिन्न घटादि पदार्थों में अनेकत्वसमाक्रान्ता=अनेकत्वविशिष्ट एकता=एकता ( देखी गई है ) विद्यमान है तथा च=वैसे ही अनात्मसु=अविद्यादि अनात्म पदार्थों में अनित्यत्वसमाक्रान्ता=अनित्यत्वविशिष्ट अनादिता=अनादिपना है।

भाव यह है कि—यद्यपि सिद्धान्त में सुगम रीति से जिज्ञासु के बोधार्थ छः पदार्थों को अनादि माना है तथापि उन में चेतनमात्र तो अनादि नित्य है शेष पांच पदार्थ अनादि होने पर भी नित्य नहीं क्योंकि ज्ञान द्वारा उन का बाध=अत्यन्तनिवृत्ति हो जाती है। इस रीति से सिद्धान्त में आत्मा तथा अनात्मा का अत्यन्त वैधर्म्य ही है साधर्म्य नहीं, अतः वादीकथित आक्षेप निर्मूल जानना चाहिये ॥१३२॥

ननु अनादिपदार्थस्याऽनित्यत्वं क्व दृष्टमित्याक्षेपं निराकर्त्तुं साङ्ख्यनैयायिकाभिमतमेव दृष्टान्तीकरोति—"भविष्यत्सु" इति—

**भविष्यत्सु भविष्यत्त्वे प्रागभावेऽप्यनादिता।**
**दृष्टैवानित्यताक्रान्ता तथाऽन्यत्रानुमीयताम् ॥१३३॥**

शृणु यत्रानादिष्वपि अनित्यता दृष्टा यथा—भविष्यत्सु=साङ्ख्यनये भाविषु घटपटादिपदार्थेषु भविष्यत्त्वे=भाविनि वर्त्तमानो योऽयं भविष्यत्त्वरूपोऽनादिधर्मः तस्मिन्, प्रागभावे अपि=तथाच नैयायिकनये घटादीनां प्रागभावेऽपि अनादिता=अनादिभावः अनित्यताक्रान्ता एव=अनित्यत्वग्रस्तैव दृष्टा=उपलभ्यते इत्यर्थः, तथा=तेनैव प्रकारेण ( तद्वत् ) अन्यत्र=अविद्यादिष्वपि अनित्यत्व-

विशिष्टाऽनादिता अनुमीयताम्=अनुमानेन साध्यताम् । तथाचायं प्रयोगः–अनात्मपदार्थवर्तिनी अनादिताऽनित्यत्वसमानाधिकरणा अनात्मपदार्थवर्तित्वात् प्रागभावादिवत् व्यतिरेके यथाऽऽत्मेति । अत्र "तथा" इति स्वरसात् पूर्वं "यथा" इत्यध्याहर्त्तव्यम् ॥१३३॥

सं०—ननु अनादि पदार्थ की अनित्यता कहां देखी गई है ? इस आशङ्का का वारण करने के अभिप्राय से नैयायिकाद्यभिमत प्रागभावादि को ही दृष्टान्त कोटि में रखते हुए कहते हैं—

पदार्थ—भविष्यत्सु=(जैसे) भावि घटपटादि पदार्थों (में जो) भविष्यत्वे=(साङ्ख्यरीति से) भविष्यत्त्वरूप धर्म (उस) में प्रागभावे अपि=और (नैयायिकाभिमत) प्रागभाव में अनादिता=(जो) अनादिता (है वह) अनित्यताक्रान्ता एव=अनित्यत्वविशिष्ट ही दृष्टा= देखी गई है तथा=वैसे ही अन्यत्र=अन्य स्थल में अर्थात् अविद्यादिक अनात्म पदार्थों में भी अनुमीयताम्=अनुमान से सिद्ध कर लेनी चाहिये ।

यहां अनुमान का प्रकार ऐसा है–अनात्मपदार्थवर्तिनी अनादिताऽनित्यत्वसमानाधिकरणा अनात्मपदार्थवर्तित्वात् प्रागभावादिवत् अर्थात् अनात्मपदार्थनिष्ठ अनादिता अनित्यत्वसमानाधिकरण है अनात्म पदार्थवर्ती होने से प्रागभावादि की न्याईं ॥१३३॥

ननु किंरूपाऽसावनित्यता यत्समाक्रान्ताऽनादिता भविष्यद्भविष्यत्वे प्रागभावे चोक्तेत्याशङ्कयामाह—" विनाशित्वम् " इति—

**विनाशित्वं च सादित्वमनित्यत्वप्रयोजके ।**
**नित्यान्यत्वमनित्यत्वं न विनाशित्वसादिते ॥१३४**

विनाशित्वम्=ध्वंसप्रतियोगित्वम् सादित्वं च=वार्थे चायं चः शब्दः, अथवा कारणवत्त्वमित्यर्थः, एतद्द्वयमपि अनित्यत्वप्रयोजके= अनित्यत्वगमके एव स्तः । नतु तत्स्वरूपभूते इत्यर्थः । अनित्यत्वम्= अनित्यत्वस्वरूपञ्च नित्यान्यत्वम्=नित्यभिन्नत्वमेव विनाशित्वसादिते = विनाशित्वं सादित्वञ्च न = विनाशित्वसादित्वमात्रं नानित्यपद-बोध्यमित्यर्थः । एवञ्चाऽविद्यादीनां केषाञ्चित्सादित्वाभावेऽप्य-नित्यत्वमनिवार्यमिति भावः ॥१३४॥

सं०—ननु आपने भविष्यत्पदार्थवर्तिनी भविष्यता और घटपटादि के प्रागभाव की अनादिता को जिस अनित्यता से समाक्रान्त बतलाया है उस अनित्यता का स्वरूप क्या है ? इस आशङ्का के होने पर कथन करते हैं—

पदार्थ—विनाशित्वम्=विनाशि होना अर्थात् ध्वंस का प्रतियोगी होना सादित्वं च=अथवा कारणजन्य होने से सादि अर्थात् प्रागभाव का प्रतियोगी होना यह दोनों केवल अनित्यत्वप्रयोजके=अनित्यता के प्रयोजक=व्याप्य[1] हैं उसके स्वरूप भूत नहीं । क्योंकि—नित्यान्यत्वम्=नित्यासमानाधिकरणत्व अर्थात् नित्यभिन्नत्व अनित्यत्वम्=अनित्यता का वाच्यार्थ है विनाशित्वसाधिते=विनाशित्व और आदिमत्व न=अनित्यत्व का स्वरूप नहीं ।

१ अनित्यत्वव्याप्ये इत्यर्थः ।

इस कथन से फलित यह हुआ कि यद्यपि अविद्यादिक आदिमान् नहीं किन्तु अनादि हैं तथापि नित्यभिन्न होने से अनित्य ही जानने चाहिये ॥१३४॥

सम्प्रति नित्यत्वगमकं वक्तुं पातनिकामाह—"नाऽविनाशित्वे"ति—

**नाविनाशित्वमात्रं तु नित्यत्वस्य प्रयोजकम् ।**
**नैवानादित्वमात्रं वा न सम्भूयोभयं तथा ॥१३५॥**

अविनाशित्वमात्रं तु=विनाशोऽस्यास्तीति विनाशि, न विनाश्यविनाशि तद्भावोऽविनाशित्वं तन्मात्रं नित्यत्वस्य=त्रैकालाबाध्यत्वरूपस्य नित्यत्वस्य प्रयोजकम्=गमकं न=नैव भवति । यथा तर्कनयेऽविनाश्यपि ध्वंस उत्पत्तिमत्त्वादनित्यः । वा=अथवा अनादित्वमात्रम्=केवलमनादिभावोऽपि न एव=नित्यतासाधको नास्ति यथा तत्रैव प्रागभावस्य विनाशस्तैरेव स्वीक्रियते, तथा=तद्वत् उभयम्=अविनाशित्वमनादित्वञ्चैतद्द्वयम् सम्भूय=मिलित्वाऽपि न=नैव नित्यत्वसाधके इत्यर्थः, खपुष्पे तद्व्यभिचारदर्शनादित्यर्थः । एतच्चाग्रिमश्लोकेन स्वयं स्फुटीभविष्यति ॥१३५॥

सं०—अब नित्यता में साधक युक्ति कथन करने के लिये भूमिका रचते हैं—

पदार्थ—अविनाशित्वमात्रं तु=अविनाशी होना मात्र ही नित्यत्वस्य=नित्यता का प्रयोजकम्=साधक न=नहीं है, (क्योंकि न्यायमत में ध्वंस अविनाशी होने पर भी उत्पत्तिमान् होने से अनित्य है) वा=अथवा अनादित्वमात्रम्=केवल अनादि होना

भी न एव=नित्यत्व का साधक नहीं हो सकता, (क्योंकि न्यायमतानुसार प्रागभाव अनादि होने पर भी नित्य नहीं किन्तु विनाशी है।) तथा=तद्वत् उभयम्=(अविनाशित्व और अनादित्व) दोनों सम्भूय=मिल कर भी न=नित्यता के साधक नहीं। (क्योंकि खपुष्प तथा अनादि अविनाशी अर्थात् उत्पत्ति और नाश दोनों से रहित होने पर भी नित्य अर्थात् त्रैकालाबाध्य नहीं)।

इस वार्त्ता को ग्रन्थकार स्वयं अग्रिम श्लोक से स्पष्ट करते हैं ॥१३५॥

उक्तमर्थं स्फुटयति हेतूपन्यासेन "प्रध्वंसे" इति—

**प्रध्वंसे प्रागभावे च खपुष्पे व्यभिचारतः।**
**किन्तु सत्यत्वमेष्टव्यं नित्यत्वस्य विचारतः ॥१३६॥**

प्रध्वंसे=ध्वंसाभावे, प्रागभावे=अनादिसान्ते संसर्गाभावे, खपुष्पे च=गगनकुसुमे च व्यभिचारतः=व्यभिचाराद्धेतोः अविनाशित्वादिकं नित्यत्वस्य प्रयोजकं नास्तीत्येवं पूर्वश्लोकेनान्वयनीयम्।

किन्तर्हि नित्यत्वगमकमित्याकाङ्क्षायामाह—"किन्तु" इति। किन्तु विचारतः=विचारात् सत्यत्वम्=यत् त्रैकालाबाध्यत्वं तदेव नित्यत्वस्य=नित्यताया प्रयोजकम् एष्टव्यम्=वाञ्छनीयं मन्तव्यमित्यर्थः। यस्य वस्तुनो देशतः कालतो वस्तुतो वा कथमपि बाधो न भवेत्, किन्तु यत्सत्तयैवाऽसदपि सद्भायात् तदेव नित्यं वस्त्विति परमार्थः ॥ १३६ ॥

---

१ सर्वं यदर्थं सत्तावत् भाति ज्यायादव एवकारसन्निवेशः।

सं०—अब उक्त अर्थ में हेतु का उपन्यास करके, उसे स्फुट करते हैं—

पदार्थ—प्रध्वंसे=ध्वंसाभाव में, प्रागभावे=प्रागभाव में, खपुष्पे च=तथा आकाश पुष्प में,(क्रम से) व्यभिचारतः=व्यभिचार पाए जाने के कारण अविनाशित्वादिक धर्म नियता के साधक नहीं।

(ननु नियता का साधक क्या है ? ऐसी आशङ्का होने पर उत्तर देते हैं कि–) किन्तु विचारतः=विचार से सत्यत्वम्=त्रैकालाबाध्यत्व ही नित्यत्वस्य=नित्यत्व का गमक एष्टव्यम्=मानना चाहिये ॥१३६॥

ननु—भवतां नये षडेवानाद्य इति कथं सङ्गतं यावता दर्शितरीत्याऽनादिसङ्ख्यानैयत्यापत्तेरितीमां शङ्कां व्युदस्यन्नाह–"अनित्यानाद्यवस्तूनाम्" इति—

**अनित्यानाद्यवस्तूनां नैव सङ्ख्या नियम्यते ।**
**नित्यानादित्वमेकस्मिन्नात्मन्येव समाप्यते ॥१३७॥**

अनित्यानाद्यवस्तूनाम्=अनित्यानि तथा अनाद्यानि च तानि वस्तूनि तेषामनित्यत्वविशिष्टानादिपदार्थानामित्यर्थः। वस्तुतस्तु—अनित्यानि च तानि अनादीनि अवस्तूनि अनात्मपदार्थास्तेषां सङ्ख्या=सङ्ख्यानं गणना न, एव नियम्यते=नियन्तुं न शक्यते, अर्थात् अनिर्वचनीयाज्ञानविलासस्य सङ्ख्याननियमे शास्त्रतात्पर्यं नास्ति, केवलमपवादे आत्मस्वरूपं बोधयितुमध्यारोपन्यायेन शिष्यबुद्धिसौकर्याय षडनादित्वप्रक्रियावतारो वैदान्तिकानां

१–आदिरेवाऽऽद्यः। स्वार्थे यत्। न आद्यो यस्य स अनाद्यः। क्लीबेऽनाद्यम्।

ननु तत्राग्रहग्रहिलता, तत्रापि तु—नित्याऽनादित्वम्=नित्यत्वसमाक्रान्तोऽनादिभावः एकस्मिन्=अद्वितीयाखण्डस्वरूपे आत्मनि एव=प्रत्यगभिन्ने ब्रह्मण्येव समाप्यते=पर्यवसितं भवति।

एतदुक्तं भवति—यद्यप्यनाद्यनन्तवासनामूलकतयाऽनात्मपदार्थानामित्थम्भावेन सङ्ख्यानकरणं प्रजापतेरपि दुःशकं तथापि जिज्ञासूनामन्तःकरणे आत्मबोधावताराय सम्प्रदायविद्भिः षण्णामनादित्वं कल्पितं यत्रैकं ब्रह्मैवानाद्यनन्तमितरे पञ्च पदार्थाः सत्यप्यनादित्वे ज्ञानबाध्यत्वादनित्या एवातो न कथमप्यनादित्वं नित्यत्वे प्रयोजकमिति युक्तमुक्तं "नित्यानादित्वमेकस्मिन्नात्मन्येव समाप्यते" इति। सूपपादितोऽयमर्थोऽस्माभिः "अनादितत्त्वे" इति नेह विस्तरं विदध्मः ॥१३७॥

सं०—ननु यदि अनादि पदार्थों की सङ्ख्या का नियम ठीक नहीं तो आप के सिद्धान्त में छः ही पदार्थ अनादि क्यों माने हैं ? उत्तरः—

पदार्थ—अनित्यानाद्यवस्तूनाम्=अनित्यत्व विशिष्ट अनाद्य ( अर्थात अनादि ) पदार्थों अथवा अनादि अवस्तुभूत पदार्थों की सङ्ख्या=सङ्ख्या [ का ] न एव नियम्यते=नियम नहीं हो सक्ता ( अर्थात अनिर्वचनीय अज्ञान के कार्यभूत[=अनिर्वचनीय अज्ञान द्वारा प्रतिभासमान ] पदार्थों की सङ्ख्या में शास्त्र का तात्पर्य नहीं केवल अपवाद द्वारा आत्मस्वरूप के बोधार्थ अध्यारोपन्याय से छः अनादि पदार्थों की प्रक्रिया दर्शाई गई है। सिद्धान्ती का उसमें आग्रह नहीं है। ) किन्तु—नित्यानादित्वम्=नित्य-

त्वसमानाधिकरण अनादिता एकस्मिन्=एक अद्वितीय ब्रह्म-स्वरूप आत्मनि=प्रत्यगभिन्न आत्मा में एव=ही समाप्यते=पर्यवसित होती है वस्तुतः अनादि अनन्त एक ब्रह्म ही परमार्थ सत्य है यही शास्त्र का सारभूत अर्थ जानना चाहिये १.३७

ननु कथं भावस्यानादेर्विनाश इति चेदाह—"नाऽनादित्वम्" इति—

**नाऽनादित्वं न सादित्वं नश्यन्नाशाय वाञ्छति ।**
**किन्तु सामग्र्यभावं वा व्यापारं स्वविरोधिनः।१.३८॥**

नश्यन्=नाशमुपयन् सन् पदार्थः नाशाय=स्वध्वंसाय अनादित्वम=अनादिभावं न वाञ्छति=नाऽपेक्षते सादित्वम=सादिभावं जन्यत्वं वा न न वाञ्छति=नापेक्षते । "वाञ्छति" इत्येकमपि क्रियावचनं नद्वयस्वारस्यायाऽऽवर्त्तनीयम् । किं वाञ्छतीत्यपेक्षायामाह—"किन्तु" इति । किन्तु सामग्र्यभावम्=कारणसामग्र्या अभावं वा=अथवा स्वविरोधिनः=स्वबाधकस्य व्यापारम्=क्रियामेवापेक्षत इत्यर्थः। सामग्र्यभावो न्यायनये यथा तन्तुतत्संयोगध्वंसे पटनाशः, स्वविरोधिनो व्यापारो यथा उत्पन्नेन घटेन घटप्रागभावनाश इत्येवमादिरीत्या स्वयमूह्यः ॥१३८॥

सं०—ननु भावरूप अनादि पदार्थ का नाश कैसे होसक्ता है ? उत्तरः—

पदार्थ—नश्यन्=नाश को प्राप्त होता हुआ पदार्थ नाशाय=अपने नाश के लिये अनादित्वम्=अनादिभाव की

न वाञ्छति=अपेक्षा नहीं करता तथा न सादित्वम्=सादिभाव की भी अपेक्षा नहीं करता, किन्तु सामग्र्यभावम्=अपने कारणसामग्री के अभाव की वा=अथवा स्वविरोधिनः=अपने बाधक के व्यापारम्=व्यापार की अपेक्षा करता है ।

सार यह है कि—अनादित्व, सादित्व नाश के प्रयोजक नहीं । जिस पदार्थ के कारणसामग्री का अभाव=ध्वंस हो जाय उसका अवश्य नाश हो जाता है । जैसा कि—तन्तु वा तन्तु संयोग के नाश से पट का नाश होता है । अथवा जिस का कोई विरोधी बलवत् बाधक हो उस का भी अवश्य नाश हो जाता है जैसा कि—(न्याय मत में) अनादि प्रागभाव का उस के प्रतियोगी घट द्वारा नाश हो जाता है । इसी प्रकार ब्रह्म से अतिरिक्त अविद्यादि पांच अनादि पदार्थों का भी स्वविरोधी तत्त्वज्ञान से नाश हो जाता है इस में कोई विरोध वा आश्चर्य नहीं ॥१३८॥

उक्तमेव द्रढयति—"सादि" इति—

सादि वानादि वा किञ्चिद्वस्तुभूतं तदस्ति न ।
तं सत्यं शेषयित्वैकं यस्य ज्ञानं विरोधि न ॥१३९॥

सादि वा=आदिः कारणं तेन सह वर्त्तते इति सादि कारण-जन्यं कार्यमित्यर्थः, अनादि वा=न आदिः कारणं यस्य तत् अनादि=कारणाजन्यमेवम्भूतं सादि वा अनादि वा यदेव किञ्चिद्

वस्तुभूतम्=किञ्चिदपि वस्तु स्यात् तत् न अस्ति=तत्तादृशमेवम्भूतं नास्ति यस्य=सादेरनादेर्वा वस्तुनः ज्ञानम्=अधिष्ठानज्ञानम् विरोधि=बाधकं न=नास्ति। सर्वमेवाऽविद्यादिकं साद्यनादि ज्ञान-बाध्यत्वाद्विनाश्येवेति भावः। नन्वेवमात्माऽप्यनादित्वात् अविद्यादिवत् ज्ञानबाध्यः स्यादित्याशङ्कायामाह—"तम्" इति। तम्=श्रुतिस्मृत्यनुभवप्रसिद्धम् सत्यम्=त्रैकालाबाध्यम्, एकम्=अखण्डैकरसमात्मानं शेषयित्वा=वर्जयित्वा सकलमन्यत् ज्ञानबाध्यमित्यर्थः। आत्मनोऽकल्पितत्वादधिष्ठानज्ञानबाध्यता नास्त्यतस्तस्याऽनित्यतापि नास्तीति भावः॥१३९॥

सं०—अब उक्त अर्थ को ही स्फुट करते हैं—

पदार्थ—सादि वा=सादि अनादि वा=अथवा अनादि किञ्चिद् वस्तुभूतम्=जो भी कोई पदार्थ हो, तत् न अस्ति=वह कोई भी ऐसा नहीं है यस्य=जिस का ज्ञानम्=अधिष्ठानज्ञान (ब्रह्मसाक्षात्कार) विरोधि=बाधक न=नहीं है, (अर्थात् अविद्यादिक सर्व अनादि सादि पदार्थों का ब्रह्म ज्ञान ही बाधक है,) किन्तु तम्=उस श्रुति, स्मृति, तथा विद्वदनुभवसिद्ध सत्यम्=परमार्थ सत्य त्रैकालाबाध्य एकम्=अखण्ड एकरस परमात्मा को शेषयित्वा=वर्जित करके अन्य सब पदार्थमात्र का ज्ञान से बाध हो जाता है।

---

१ 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छां ६।२।१) नेह नानास्ति किञ्चन (कठ० २।१।११; बृ० ४।४।१९) इत्याद्यबाधितार्थ-विषयकप्रमाणजन्यं श्रवणमननिदिध्यासनोपकृतश्च ब्रह्मज्ञानमित्यर्थः।

कोई भी ज्ञान ब्रह्म बाधक नहीं हो सकता क्योंकि सकल कल्पनाओं का वही अधिष्ठान है, निरधिष्ठान भ्रम होता नहीं यह वार्त्ता पीछे वर्णन कर आए हैं ॥१३९॥

तदेवाबाध्यं सत्यं दर्शयति—"यस्माद्" इति—

**यस्मादन्यदसत्सर्वं सादि वाऽनादि वाऽखिलम् ।**
**यस्यैवाविद्यया शुक्ते रूप्यवत्सदिवाऽऽदृतम् ॥१४०॥**

यस्मात्=यतः कारणात् अन्यत्=आत्मभिन्नं सादि वा अनादि वा सर्वम् असत्=प्रतीतिसमसत्ताकमेव भातीति शेषः यस्य एव=यस्यैव चात्मनः अविद्यया=अज्ञानेन शुक्तेः=अर्थात् शुक्तौ रूप्यवत्=रजतवत् अखिलम्=समग्रम् सद् इव=सत्यमिव आदृतम्=इष्टसाधनताज्ञानविषयीकृतमस्ति तदेवात्मभूतं वस्तु परमार्थसत्यमित्यर्थः ॥ १४० ॥

सं०—अबाध्य परमार्थ सत्य का कथन करते हैं—

पदार्थ—यस्मात्=जिस कारण से सादि वा अनादि वा=सादि अथवा अनादि अन्यत्=आत्मा से भिन्न सर्वम्=सब ही असत्=मिथ्या है और यस्य एव=जिस की अविद्यया=अविद्या से ही शुक्तेः=शुक्ति में रूप्यवत्=रजत

---

१—अत्र "शुक्तेः" इति षष्ठ्यन्तम् । "अविद्यया" इति पदमावर्त्यानेन सम्बन्धनीयम् । तेन शुक्तेरविद्यया यथाऽसदपि रजतं सदिवावभासते, तथैव यस्याऽऽत्मनोऽविद्यया सर्वमपीदं प्रपञ्चजातं सदिवाद्रियते तदात्मवस्तु परमार्थसत्यमिति परमार्थः ।

२—वस्तुतस्तु खिलं परिशेषोऽद्वैतरूपः, तद्भिन्नं सर्वं प्रपञ्चजातमिति युक्तं स्यात् ।

की न्याईं अखिलम्=सम्पूर्ण प्रपञ्च सद् इव=सत्य की न्याईं आवृतम्=भान होता हैं, वही सर्वाधिष्ठान आत्मा एकमात्र परमार्थ सत्य जानना चाहिये ॥१४०॥

ननु यथा दृग्दृश्ययोर्मिथ्यासम्बन्धवाननात्मा मिथ्या तद्वत्ताद्दृक्षसम्बन्धवत्त्वादात्मापि मिथ्या किन्न स्यात्तथाच वैदान्तिकानामनात्मवादित्वापत्त्या शून्यवाद एव फलतीति शङ्कामपनुदन्नाह—"अत एव" इति—

**अत एवात्र सन्दृष्टं सम्बन्धित्वमनात्मसु ।**
**सत्यङ्गीकुर्वतां प्राप्तं सतोऽनात्मत्वमित्यसत् ॥१४१॥**

अतः एव=यस्माद् दर्शितरीत्या आत्मभिन्नस्यैव सर्वस्याऽसत्त्वमतो हेतोः अत्र अनात्मसु=आविद्यादिषु सर्वेषु पदार्थेषु सन्दृष्टम्=उपलब्धं सम्बन्धित्वम्=सम्बन्धिनोर्भावः अर्थात् सम्बन्धस्तं मिथ्याभूतं सम्बन्धं सति=आत्मनि अङ्गीकुर्वताम्=स्वीकुर्वताम् वैदान्तिकानाम् सतः=आत्मनोऽपि अनात्मत्वम्=अनात्मभावो मिथ्यात्वमिति यावत् प्राप्तम्=प्रसक्तम् इति=इत्ययमाक्षेपो वादिनाम् असत्=असदेव मिथ्यैव वेदान्तसिद्धान्ताऽज्ञानमूलक एवेत्यर्थः ॥ १४१ ॥

सं०—ननु–जैसे मिथ्या सम्बन्ध वाला दृश्य प्रपञ्च मिथ्या है, वैसे ही मिथ्या सम्बन्ध का प्रतियोगी आत्मा भी मिथ्या मानना होगा जिस से शून्यवाद की आपत्ति होगी ? ऐसी आशङ्का का समाधान दर्शाते हैं—

पदार्थ—अतः एव=(जिस कारण दर्शित रीति के अनु-

सार आत्मा से भिन्न सब मिथ्या कथन किया गया है ) इस हेतु से अत्र अनात्मसु=अविद्यादि अनात्म पदार्थों में सन्दृष्टम्=प्रतीयमान जो सम्बन्धित्वम्=मिथ्या सम्बन्ध उस को सति=आत्मा में अङ्गीकुर्वताम्=अङ्गीकार करने वाले वेदान्तियों के मत में सतः=आत्मा की अनात्मत्वम्=अनात्मता प्राप्तम्=प्राप्त होती है अर्थात् अनात्मवत् मिथ्या सम्बन्ध का आश्रय आत्मा भी मिथ्या ही सिद्ध होता है इति=यह वादियों आक्षेप असत्=मिथ्या ही है अर्थात् सिद्धान्त के अज्ञान से है ॥ १४१ ॥

सर्वोऽप्ययं सम्बन्धसम्बन्धिव्यवहारोऽविद्यामाहात्म्यादेवेति परं तात्पर्यं मन्वान उक्तेऽर्थे सिद्धान्तं प्रकटयति—"असत्याम्" इति—

**असत्यामप्यविद्यायां यावत्सत्त्वं प्रकल्पितम् ।**
**सम्बन्धित्वं सतस्तावदसम्बद्धस्य कल्पितम् ॥१४२**

असत्याम् अपि=परमार्थस्वरूपशून्यायामवस्तुभूतायामपि अविद्यायाम्=अज्ञानादिशब्दाऽभिलप्यायां यावत् सत्त्वम् प्रकल्पितम्=अविद्याऽस्तीति यावद्व्यवहारो भवति । तावत्=एवमेव अविद्यास्थितिपर्यन्तम् सतः=सकलबाधावधिभूतस्य असम्बद्धस्य=वस्तुतोऽसङ्गोदासीनस्वभावस्याप्यात्मनः सम्बन्धित्वम्=सम्बन्धिनो भावोऽर्थात् सम्बन्धः कल्पितम्=कल्पित एव ।

अयम्भावः–चिदध्यस्ताऽविद्या चित्तादात्म्यमापन्ना स्वरूपतो निरुपाख्याऽपि यथा सदिवावभासते तथा असङ्गोऽप्यात्मा

स्वाध्यस्ताऽविद्यामाहात्म्यादेव ससङ्गः प्रतीयते, "ध्यायतीव लेलायतीवे"ति श्रुतेः (बृ० उ० ४ । ३ । ७ )। ततश्च द्वयोर्मिथुनीभावोऽविद्याविलसित एवेति वेदितव्यम् ॥१४२॥

सं०—आत्मा का सम्बन्धिपना अविद्या के सामर्थ्य से ही भासता है वस्तुतः नहीं ऐसा कथन करते हैं—

पदार्थ—असत्याम् = परमार्थसत्ता से शून्य अपि = भी अविद्यायाम् = अविद्या में यावत् सत्त्वम् = जब तक सद्रूपता प्रकल्पिताम् = कल्पित है, ( अविद्या सद्रूप हो कर भासती है पर वस्तुतः वह सद्रूप है नहीं) तावत् = तब तक सतः = सकल निषेध के अवधिभूत असम्बद्धस्य = वस्तुतः असङ्ग उदासीन-स्वभाव आत्मा का सम्बन्धित्वम् = सम्बन्ध भी कल्पितम् = कल्पित ही भासता है।

तात्पर्य यह है कि दोनों के अन्योन्याध्यास द्वारा आत्मा की सद्रूपता अविद्या में तथा अविद्या की ससङ्गता आत्मा में प्रतीत होती है, यह सब प्रतीति अविद्या का विलास ही जानना चाहिये ॥१४२॥

उक्तमेवार्थं स्फोटयति—"वस्तुभूतः" इति—

**वस्तुभूतो न सम्बन्धः कोऽप्यात्मानात्मनोर्यतः।**
**मोहादेव ततः सिद्धा तयोः साधर्म्यकल्पना ॥१४३**

यतः आत्माऽनात्मनोः=चिदचितोः वस्तुभूतः=पारमार्थिकः कः अपि सम्बन्धः=कश्चिदपि संयोगादिर्वा तादात्म्यादिर्वा न=नैव सिद्ध्य-

तीति शेषः, ततः=तस्मात् कारणात् तयोः=तयोर्द्वयोरात्मानात्मनोः, मोहात् एव साधर्म्यकल्पना=समानधर्मस्वभावता सिद्धा=युक्ता भवतीत्यर्थः । इत्थं परेषामात्मानात्मनोः साधर्म्यकल्पनाऽज्ञानविजृम्भितैवेति भावः ॥ १४३ ॥

सं०—अब उक्त अर्थ को स्फुट करते हैं—

पदार्थ—यतः=जिस कारण आत्मानात्मनोः=चेतन तथा जड का वस्तुभूतः=परमार्थ कः अपि=कोई भी सम्बन्धः न=सम्बन्ध सिद्ध नहीं हो सकता ततः=इसी कारण से तयोः=उन दोनों के साधर्म्यकल्पना=समान धर्म की कल्पना मोहात्=मोह से एव=ही सिद्धा=युक्त है ।

सार यह है कि—अज्ञान प्रयुक्त कल्पना के विना आत्मा तथा अनात्मा का अन्य कोई भी सम्बन्ध युक्तिप्रमाणसिद्ध नहीं ॥ १४३ ॥

ननु सन्ति वादिनामुक्तार्थबाधका अनेके तर्काः प्रकाशस्वभावस्य कथमज्ञानाश्रयतेत्याद्या इति तत्कथमात्मानात्मनोराध्यासिकसम्बन्धसिद्धिरिति शङ्कमानम्प्रत्याह—"हेतवः" इति—

**हेतवस्ते[1] न चोद्धाव्या ये पूर्वोक्तार्थबाधकाः ।**
**तेषां सन्ति हि वेदान्ताः साध्याभावस्य साधकाः ॥**

ये=वादिनां ये, पूर्वोक्तार्थबाधकाः=पूर्वोक्तो योऽर्थो दृशः परमार्थकत्वरूपः तस्य बाधका विरोधिनः ये हेतवः, ते[1] न च

१ यद्वा मूले तेन इत्येकं पदम् । तेनेत्यस्य तस्माद्धेतोरित्यर्थः । पूर्वोक्तार्थबाधका ये हेतवो वादिभिरुद्भाव्याः स्युस्तेषां साध्याभावस्य साधका

उद्भाव्याः=कदापि नोत्थापनीयाः हि=यतः तेषाम्=वादिप्रयुक्ताना-मात्मानात्मनोः साधर्म्यसाधकाना हेतूनाम् साध्याभावस्य साधकाः=साधर्म्याभावस्य समर्थकाः वेदान्ताः=दर्शितानि श्रुतिवचांस्य-नेकानि सन्ति=वर्त्तन्ते तानि च बहुशः पूर्वमुक्तानि, अत आत्मा-ऽनात्मनोराध्यासिक एव सम्बन्धो न भाविक इति भावः ॥१४४॥

सं०—ननु स्वप्रकाश आत्मा के आश्रित तमरूप अज्ञान कैसे हो सकता है इत्यादि अनेक वादियों के तर्क होने पर आध्यासिक सम्बन्ध की कैसे सिद्धि होगी ? ऐसी शङ्का होने पर सिद्धान्त कहते हैं—

पदार्थ—ये=जो पूर्वोक्तार्थबाधकाः=पूर्व कथन किये ब्रह्मरूप[1] एक अर्थ के बाधक, हेतवः=(वादिप्रयुक्त) हेतु हैं ते[2] न च उद्भाव्याः=वह कदापि उद्भावन न करते चाहिये, हि=

वेदान्ताः सन्ति इति न मुमुक्षुभिर्विस्मरणीयम् । नापि च तैर्निरुत्साहैर्भाव्य-मिति भावः ।

१—अखण्ड ।

२—मूल में ते न इन दो पदों के स्थान में तेन इस प्रकार एक पद भी लिया जा सकता है । ऐसा करने पर इस श्लोक का 'पदार्थ' इस प्रकार होगा—

तेन च=और तिस कारण से पूर्वोक्तार्थबाधकाः—पूर्व कथन किये हुए अखण्ड अर्थ के बाधक ये=जो हेतवः=हेतु (वादियों करके) उद्भाव्याः=उद्भावनीय (हों) तेषाम्=उन (हेतुओं) के साध्याभावस्य साधकाः=साध्याभाव के साधक अर्थात् हेत्वाभासता के निरूपक वेदान्ताः=वेदान्तवाक्य सन्ति=विद्यमान हैं हि=इस में किञ्चिन्मात्र भी संशय नहीं है ।

तात्पर्य यह है कि तार्किकादि प्रौढ़ वादिओं के प्रबल से प्रबल भी तर्कों

जिस कारण से तेषाम्=उन वादिप्रयुक्त आत्मा तथा अनात्मा के साधर्म्य को सिद्ध करने वाले हेतुओं के साध्याभावस्य साधकाः=साध्याभाव के समर्थक वेदान्ताः=अनेक श्रुति वाक्य सन्ति=हैं, (जैसा कि–पीछे अनेक स्थलों में वर्णन कर आए हैं।)

अतः आत्मा अनात्मा का सम्बन्ध आध्यासिक है वास्तव नहीं॥ १४४॥

सम्प्रत्युक्तमर्थमुपसंहरति—"तद्" इति—

**तन्नित्यानादिताधर्मसाङ्कर्यमिह दुर्घटम्।**
**विशेषोऽप्यत्र वक्तव्यो द्वितीये वक्ष्यते स्फुटम्॥१४५॥**

ततः=तस्मात्कारणात् नित्यानादिताधर्मसाङ्कर्यम्=नित्योऽनादिरात्मा अनित्योऽनादिर्वा सादिर्वाऽनात्मा तयोर्द्वयोर्धर्मसाङ्कर्यं धर्माणां चित्त्वाऽचित्त्वादीनां साङ्कर्यं सङ्कीर्णता परस्परात्मता इह=सम्यग्दर्शनरूपे वेदान्तसिद्धान्ते दुर्घटम्=घटयितुमशक्या, नार्हति भवितुमित्यर्थः, किञ्च अत्र=एतस्मिन्विषये विशेषः अपि=अन्योऽपि कश्चन विशेषः वक्तव्यः=कथनीयः। उच्यतां तर्हि कोऽसौ विशेष इत्याह—"द्वितीये" इति। द्वितीये=जिज्ञास्यात्मतत्त्वनिर्णयनामके द्वितीयस्मिन् परिच्छेदे स्फुटम्=प्रकटं यथा-स्यात्तथा वैशद्येनेत्यर्थः वक्ष्यते=निरूपयिष्यते॥१४५॥

---

को निस्सार कर देने वाले वेदान्तवाक्यों के होते हुए मुमुक्षुओं को किसी प्रकार भी वादिकृत तर्कों से भयभीत होकर अखण्डार्थ के बोध में निरुत्साह नहीं होना चाहिये।

सं०—अब उक्त अर्थ का उपसंहार करते हैं—

पदार्थ—(जिस कारण से वादि प्रयुक्त हेतु हेत्वाभास हैं) तत्=तिस कारण से नित्यानादिताधर्मसाङ्कर्यम्=नित्य अनादि जो आत्मा तथा अनित्य अनादि वा सादि जो अनात्मा उन दोनों के धर्मों का परस्पर साङ्कर्य अर्थात् वास्तव तादात्म्य इह=सम्यग्दर्शनरूप सिद्धान्त में दुर्घटम्=दुर्घट है। किञ्च अत्र=इस विषय में विशेषः अपि=और भी कुछ विशेष वक्तव्यः=कथन करने योग्य है परन्तु वह द्वितीये=("जिज्ञास्यात्मतत्त्वनिर्णय" नामक) द्वितीय परिच्छेद में स्फुटम्=स्फुटरूप से वक्ष्यते=कथन करेंगे ॥१४५॥

अनित्यत्वलक्षणमुपसंहरति "नाशित्वाद्"इति—

**नाशित्वादादिमत्त्वाद्वा स्वसत्ताविरहादपि ।**
**ससम्बन्धमिदं दृश्यमनित्यमिति सुस्थितम् ॥१४६॥**

नाशित्वात्=ध्वंसप्रतियोगित्वात्, आदिमत्त्वात्=प्रागभावप्रतियोगित्वात् वा=अथवा स्वसत्ताविरहात् अपि=स्वरूपसत्ताभावादपि ससम्बन्धम्=सम्बन्धसहितमेव इदम्=पुरोवर्त्ति दृश्यम्=दृश्यमात्रं दृग्विषयोऽनात्मपदार्थः अनित्यम्=विनश्वरं बाध्यमिति यावत् इति=एवं सिद्धान्तरूपेण सुस्थितम्=सुनिर्णीतमित्यर्थः। एवञ्चानित्यदृश्यमात्रस्य मिथ्यात्वे सिद्धे आत्मपदार्थ एव नित्यः परमार्थसत्य इति फलितोऽर्थः ॥१४६॥

सं०—अब अनित्यत्वलक्षण के उपसंहार द्वारा फलितार्थ को कथन करते हैं—

पदार्थ—नाशित्वात्=नाशवान् होने से आदिमत्त्वात्=कारण से जन्य होने से वा=अथवा स्वसत्ताविरहात् अपि=अपनी स्वतन्त्रसत्ता से रहित होने के कारण भी ससम्बन्धम्=सम्बन्ध सहित इदम्=यह दृश्यम्=दृश्यमात्र अर्थात् यावत् अनात्म-पदार्थ अनित्यम्=अनित्य=बाध्यस्वरूप है इति सुस्थितम्=यही शास्त्र का निर्णीत सिद्धान्त है ॥१४६॥

परं प्रकरणमुपसंहरति "तस्माद्" इति—

**तस्मान्मृषात्मता सिद्धा सर्वस्यैवाऽप्यनात्मनः।**
**नेह नानेति नेतीति निषेधप्रतियोगिनः ॥१४७॥**

तस्मात्=पूर्वोक्तप्रकाराद्धेतोः सर्वस्य एव अपि अनात्मनः=अवच्छेद्यावच्छेदेनानात्ममात्रस्याऽविद्यादेरेव मृषात्मता=मिथ्यात्वं सिद्धा=सिद्धमित्यर्थः। कीदृशस्याऽनात्मनः इत्यनात्मानं विशिनष्टि "नेह" इत्यादिना। "नेह नाना" इति "नेति" इति निषेधप्रतियोगिनः="नेह नानास्ति किञ्चन" ( बृ० ४।४।१९; कठ० २।१।११ ) "नेति नेति" ( बृ० २।३।६; बृ० ४।४।१२ ) इत्यादि श्रुतिप्रतिपाद्यत्रैकालिक-निषेधप्रतियोगिभूतस्येत्यर्थः। एतेन "प्रातिपन्नोपाधौ त्रैकालिक-

१ इदमत्र वोध्यम्—"नेह नानास्ति किञ्चन" इत्यत्र श्रुतौ "इह" पदेन 'नाना' रूपप्रपञ्चोपादानाधिष्ठानं ब्रह्म विवक्षितम्। तथाच तत्र (ब्रह्मणि)प्रपञ्च-निषेधेन श्रुतेः यावत्प्रपञ्चस्य त्रैकालिको निषेधः प्रतिज्ञातो भवति, मृत्तिकायां घटो नास्तीति घटोपादानाधिष्ठानभूतायां मृत्तिकायां घटनिषेधवत्। भूतले घटो नास्ति, वृक्षमूले कपिसंयोगो नास्ति इत्यादिका दृष्टान्तास्त्वत्र व्यभिचरिता एव भूतलवृक्षमूलादिषु निषेधप्रतियोगिनां घटकपिसंयोगादीनामुपादानसमा-नाधिकरणाधिष्ठानत्वासम्भवादिति सूक्ष्ममीक्ष्यम्।

निषेधप्रतियोगित्वं मिथ्यात्वम्" इति मिथ्यात्वलक्षणमप्युक्तं भवति ।

प्रयोगश्च प्रतिफलति—"सर्वोऽप्यनात्मा मिथ्या भवितुमर्हति त्रैकालिकनिषेधप्रतियोगित्वात् शुक्तिरजतवत्" इति ॥१४७

**सं०—अब परम प्रकरण उपसंहार करते हैं—**

**पदार्थ—**तस्मात्=पूर्वोक्त प्रकार से सर्वस्य एव अपि अनात्मनः=यावत् अविद्यादि अनात्म पदार्थ का ही मृषात्मता=मिथ्यापन सिद्धा=सिद्ध है । (कैसा अनात्म पदार्थ है ?) "नेह नाना" इति "नेति" इति निषेधप्रतियोगिनः=जो "नेह नानास्ति किञ्चन" "नेति नेति" इत्यादि श्रुतियों द्वारा किये हुए निषेध (अत्यन्ताभाव) का प्रतियोगी है ॥१४७॥

ननु अद्वैते द्वैतसत्त्वं प्राप्तमप्राप्तं वा ? नाद्योऽद्वैताऽसिद्धेः, नान्त्योऽप्रसक्तप्रतियोगिनिषेधापत्तेरितीमामाशङ्कामपनुदति "नासद्" इति—

**नासन्निषिध्यते क्वापि नापि सत्यं निषिध्यते ।**
**भ्रान्तिप्रसक्तसत्त्वस्य सत्त्वमेव निषिध्यते ॥१४८॥**

क्व अपि=कुत्राऽपि असत्=निरुपाख्यं शशशृङ्गादिकं न निषिध्यते=नैव निषेधप्रतियोगित्वेनाऽभ्युपगम्यते, न अपि सत्यं निषिध्यते=सत्यं स्वरूपसत् त्रैकालाबाध्यमपि वस्तु नैव निषेधविषयीक्रियते, किन्तु—भ्रान्तिप्रसक्तसत्त्वस्य=भ्रान्त्या प्रसक्तं प्राप्तं सत्त्वं यस्य तत् तस्य रज्जुसर्पादेः सत्त्वम् एव=सत्तैव निषिध्यते । तस्मान्नाप्रसक्तनिषेधापत्तिर्नवाऽद्वैतहानिरिति भावः । अत्र बहुवक्तव्यं ग्रन्थगौरवभयान्नोक्तम् ॥ १४८ ॥

सं०—ननु अद्वैतसिद्धान्त में द्वैत प्राप्त है अथवा अप्राप्त है ? प्रथम पक्ष में द्वैतापत्ति से अद्वैतहानि का प्रसङ्ग होगा। द्वितीय पक्ष में अप्रसक्तनिषेध की आपत्ति होगी ? ऐसी आशङ्का होने पर उत्तर देते हैं—

पदार्थ—क्व अपि=कहीं भी असत्=असत् अर्थात् शश-शृङ्ग तथा खपुष्पादिक तुच्छ पदार्थों का न निषिध्यते=निषेध नहीं होता, न अपि सत्यं निषिध्यते=(और) सत्य अर्थात् त्रैकालाबाध्य ब्रह्म का भी निषेध नहीं होता, किन्तु—भ्रान्तिप्रसक्तसत्त्वस्य=भ्रान्ति से प्राप्त है सत्ता जिसकी ऐसे रज्जुसर्पादिक पदार्थ की सत्वम् एव निषिध्यते=सत्ता का ही निषेध किया जाता है, (अतः अप्रसक्त प्रतिषेध की आपत्ति रूप दोष, वा अद्वैतहानि दोष का गन्ध भी नहीं) ॥१४८॥

उक्तमर्थं[1] स्पष्टीकरोति—"नामरूपे" इति[2]—

**नामरूपक्रियाकारो विकारोऽनात्मविग्रहः।**
**भ्रान्तिप्रसादसम्प्राप्तसत्त्वोऽस्तीति विजृम्भते ॥१४९॥**

नामरूपक्रियाकारः=नाम च रूपश्च क्रिया च आकारो यस्य स तथाविधः विकारः=स्थूलसूक्ष्मात्मकः सर्वोऽपि प्रपञ्चः

१—अनात्ममात्रसत्त्वनिषेधरूपमर्थमित्यर्थः ॥

२—यद्वा सदसन्निषेधस्य सर्वन्यायविरुद्धत्वेन भ्रान्तिप्रसक्तसत्त्वस्यैव निषेधे श्रुतितात्पर्यमिति पूर्वस्मिन् श्लोके प्रतिपाद्याधुना सदृष्टान्तं यावत्प्रपञ्चस्य भ्रान्तिप्रसक्तसत्त्वतामुपपादयति "नामे" ति द्वाभ्याम्।

अनात्मविग्रहः=अनात्मस्वरूपः भ्रान्तिप्रसादसम्प्राप्तसत्त्वः=भ्रान्तिप्रसादेन अज्ञानमाहात्म्येन प्राप्तं सत्त्वं यस्य सः अज्ञानमहिमविलसित इत्यर्थः, अस्ति इति विजृम्भते=असदपि सद्रूपेण भासत इत्यर्थः॥१४९॥

सं०—उक्त अर्थ को स्पष्ट करते हैं[1]—

पदार्थ—नामरूपक्रियाकारः=नामरूपक्रियात्मक विकारः= सूक्ष्मस्थूलात्मक सर्व प्रपञ्च (जो) अनात्माविग्रहः=अनात्मस्वरूप है वह (सब) भ्रान्तिप्रसादसम्प्राप्तसत्त्वः=अज्ञान की सामर्थ्य से ही सत्तावाला होकर आस्ति इति विजृम्भते=असत् भी सद्रूप होकर भासता है ॥ १४९ ॥

उक्तेऽर्थे दृष्टान्तमाह—"यथैव" इति—

**यथैव शुक्तिसत्त्वेन रूप्यमस्तीति जल्प्यते ।**
**तथात्मसत्तया भ्रान्त्याऽनात्माऽस्तीति विकल्प्यते ॥**

यथा एव=येन प्रकारेणैव शुक्तिसत्त्वेन=शुक्त्यात्मकाधिष्ठान-सत्तया तत्तादात्म्यमापन्नतया रूप्यम् अस्ति="इदं रजतम्" इति= इत्येवमाकारेण जल्प्यते=व्यवह्रियते तथा=तथैव आत्मसत्तया=आत्म-सत्तातादात्म्यापन्नत्वेन भ्रान्त्या=अज्ञानेनैव अनात्मा अस्ति इति= "प्रपञ्चः सन्" इत्येवमाकारेण कल्प्यते=कल्पनाविषयीक्रियत इत्यर्थः ॥ १५० ॥

---

१—यद्वा—शङ्का—ननु यदि निषेध का विषय भ्रान्तिप्रसक्तसत्ता-वान् पदार्थ ही होता है तो केवल रज्जुसर्पादिक ही निषेध के विषय हो सकते हैं, प्रपञ्च नहीं, क्योंकि घटपटादिक प्रपञ्च की सत्ता भ्रान्तिप्रसक्त नहीं है । वादी के ओर से ऐसी आशङ्का के होने पर दृष्टान्तसहित प्रपञ्च की भ्रान्तिप्रसक्तसत्त्वता "नामे" त्यादिक दो श्लोकों से सिद्ध करते हैं:—

सं०—उक्त अर्थ में दृष्टान्त कथन करते हैं—

पदार्थ—यथा एव=जैसे शुक्तिसत्त्वेन=शुक्ति की सत्ता से रूप्यम् अस्ति="यह रजत है" इति=इत्याकारक जल्प्यते=व्यवहार होता है, तथा=वैसे ही आत्मसत्तया=आत्म-रूप अधिष्ठान की सत्ता से अर्थात् सद्रूप आत्मा के तादात्म्य से ही भ्रान्त्या=भ्रान्ति से अनात्मा अस्ति="प्रपञ्च है" इति=इत्याकारक विकल्प्यते=कल्पना की जाती है ॥१५०॥

आत्मसत्तयैव सर्वं सदित्याह—"अनात्मनि" इति—

**अनात्मन्यात्मसत्तायाः संसर्गो भ्रान्तिरेव हि ।**
**अतो नास्त्यन्यसत्तायाः सम्भवोऽप्यात्मनो बहिः॥**

(यतः=यतो हेतोः) अनात्मनि=बाध्यस्वभावे अविद्यादिप्रपञ्चे आत्मसत्तायाः=सत्स्वभावस्यात्मनः यः संसर्गः=सम्बन्धः सः भ्रान्तिः एव=भ्रमरूप एव असङ्गोदासीनस्वभावस्याप्यात्मनः अनात्मनि तादात्म्यसम्बन्ध आध्यासिक एव, हि=इत्ययमर्थो निश्चितो वेदा-न्तानामिति शेषः । अतः=अतो हेतोः आत्मनः वहिः=आत्मनः पृथक् आत्मसत्तां विहायेत्यर्थः, अन्यसत्तायाः=अन्यस्याः कस्या अपि सत्तायाः सम्भवः अपि=योग्यता अपि न अस्ति=नास्त्येव । अत्र "यत्तदोर्नित्यमभिसम्बन्धः" इति नियमेनोद्देश्यार्थकस्य यत्प-दस्याऽऽक्षेपो बोध्यः ॥१५१॥

१ अथवा अन्यस्य कस्यापि अनात्मपदार्थस्य सत्ताया इत्येवं विग्राह्यम् ।

२ यद्वा मूलस्थं 'हि' पदमेव हेत्वर्थकं ग्राह्यम् । अस्मिन्पक्षे टीकायां "यतः" इति पदस्याऽध्याहारो नाऽऽवश्यकः ।

सं०—आत्मसत्ता से ही सब सद्रूप होकर भासता है इस अर्थ को कहते है—

पदार्थ—(यतः=जिस कारण से ) अनात्मनि=अनात्मा में आत्मसत्तायाः=आत्मसत्ता का संसर्गः=सम्बन्ध भ्रान्तिः एव=भ्रमरूप हि=ही है अतः=इस कारण से आत्मनः बहिः=आत्मा से पृथक् अन्यसत्तायाः=किसी अन्य (पदार्थ की) सत्ता का सम्भवः=सम्भव अपि=भी न अस्ति=नहीं है

यहां पर हि पद सिद्धान्त का निश्चायक जानना और उद्देश्यार्थ के समर्पक "यतः" पद का अध्याहार कर लेना[1] ॥ १५१ ॥

ननु "अस्ति ब्रह्म" इति प्रत्ययवत् "सन् प्रपञ्चः" इति प्रत्ययान्यथाऽनुपपत्त्याऽनात्मसत्त्वमपि किं न कल्पनीयं स्यात् ? इत्याशङ्क्याह—"अध्यस्ते" इति—

अध्यस्तेऽस्तीति संवादे सिद्धेऽधिष्ठानसत्तया ।
पृथक्सत्त्वविकल्पे स्यादबाधामानगौरवम् ॥१५२॥

अधिष्ठानसत्तया=सकलकल्पनाऽधिष्ठानभूतस्यात्मनः सत्तया अध्यस्ते=कल्पितेऽनात्मपदार्थे अस्ति इति="सन् प्रपञ्चः""सन् घटः" इति संवादे=व्यवहारे सिद्धे=उभयवादिमतेनेष्टे सति पृथक्सत्त्व-

---

१—मूलस्थ "हि" पद का अर्थ "जिस कारण से" भी हो सकता है। इस पक्ष में "यतः" पद के अध्याहार की कोई आवश्यकता नहीं रहती।

विकल्पे=पृथक्सत्तायाः कल्पने अबाधामानगौरवम्=अध्यस्तस्य अबाध्यत्वम्, अमानं मानाभावः, गौरवश्चैते दोषाः स्युरित्यर्थः।

अत्र अध्यस्तस्यापि प्रपञ्चस्य स्वसत्ताङ्गीकारे ब्रह्मवद्बाधः, "सत्यस्य सत्यम्" (बृ०२ । १ । २०) इत्यादिश्रुतिबलाद् ब्रह्मणः परमार्थसत्यत्वस्य निर्भ्रान्तत्वे तद्वत्प्रपञ्चसत्यतायां नास्ति किञ्चिन्मानमिति मानाभावः, जवापुष्पोपरागवशादेव "रक्तः स्फटिकः" इत्यादिव्यवहारवद् ब्रह्मसत्तयैव सर्वत्र सद्व्यवहारोपपत्तौ तस्य पृथक् स्वसत्ताङ्गीकारे च गौरवमिति ध्येयम् ॥१५२॥

सं०—ननु "प्रपञ्च है" इस प्रत्यय की अन्यथा अनुपपत्ति से प्रपञ्च की भी सत्ता क्यों नहीं स्वीकार कर लेते ? ऐसी आशङ्का के होने पर सिद्धान्ती आत्मसत्ता से अतिरिक्त सत्ता मानने में गौरवादि दोष कथन करते हैं—

पदार्थ—अधिष्ठानसत्तया=अधिष्ठान की सत्ता से ही अध्यस्ते=अध्यस्त पदार्थ में अस्ति इति="प्रपञ्च है" "घट है" इत्याकारक संवादे=व्यवहार के सिद्धे=सिद्ध होने पर पृथक्सत्त्वविकल्पे=प्रपञ्च की पृथक् सत्ता कल्पना में अबाधामानगौरवम्=अबाध, अमान तथा गौरव यह तीन दोषों का समूह स्यात्=प्राप्त होगा।

अभिप्राय यह है कि—ब्रह्म की न्याईं प्रपञ्च को परमार्थसत्व मानने से उसके बाध का अभावरूप "अबाध" तथा ब्रह्मवत् प्रपञ्च की परमार्थसत्ता में प्रमाण न होने से "अमान" और जपापुष्प के संसर्ग से "रक्तः स्फटिकः" इस प्रकार के व्यवहार की न्याईं ब्रह्मसत्ता के संसर्गाध्यास

के द्वारा "प्रपञ्चः सन् घटः सन्" इत्यादि व्यवहार सिद्ध होने पर वृथा प्रपञ्च की अपनी सत्ता मानने से "गौरव" दोष होता है ॥ १५२ ॥

केवलं चेदद्वैतं कथं तर्हि तद्विशेषभानम् ? इत्याशङ्क्याह "निष्प्रकारकम्" इति—

**निष्प्रकारकमद्वैतं सत्तामात्रस्वरूपकम् ।**
**सप्रकारतया भाति स्वस्याज्ञानवशेन तत् ॥१५३॥**

निष्प्रकारकम्=सर्वप्रकारशून्यं निर्विशेषमिति यावत् अद्वैतम् = आत्मतत्त्वम् (वस्तुतः) सत्तामात्रस्वरूपकम्=सत्तामात्रं स्वरूपं यस्य तत् सन्मात्रमेव न तत्र कोऽपि वास्तवः प्रकार इत्यर्थः तत्=तत् निर्विशेषमपि स्वस्य=स्वात्मनः अज्ञानवशेन=अज्ञानसामर्थ्येन=स्वाश्रयस्वविषयकाज्ञानमाहात्म्येन सप्रकारतया=सविशेषतया भाति= प्रकाशते । अज्ञानप्रयुक्ता एव ब्रह्मणि सर्वे विशेषाः गगन इव तलमलिनत्वादय इति भावः । स्वाश्रयस्वविषयकत्वमज्ञानस्यावोचाम ॥ १५३ ॥

सं०—अब "निर्विशेष अद्वैत में सविशेषता अज्ञान द्वारा ही भासती है" इस अर्थ को कहते हैं—

पदार्थ—निष्प्रकारकम्=सर्व प्रकारों से रहित=निर्विशेष अद्वैतम्=अद्वैत आत्मा (वस्तुतः) सत्तामात्रस्वरूपकम्= सत्तामात्र स्वरूप ही है, तथापि तत्=वह स्वस्य अज्ञानवशेन= स्वाश्रित स्वविषय अज्ञान के कारण सप्रकारतया=सविशेष रूप (धर्मधर्मिभाव) से भाति=भासता है।

भाव यह कि–जैसे नीलत्वादि विशेषरहित आकाश में नीलत्वादि की प्रतीति अज्ञानप्रयुक्त है वैसे ही सर्वाधिष्ठान निर्विशेष ब्रह्म में नाना प्रकार की प्रतीति अज्ञानसिद्ध है, स्वतन्त्र नहीं ॥ १५३ ॥

उक्तमेवार्थं विशदयति—"तत्तद्विशेषे"ति—

**तत्तद्विशेषनिर्मुक्तोऽप्यात्मा स्वतमसावृतः ।**
**रजसा भाति विक्षिप्तस्तत्तद्विशेषवानिव ॥१५४॥**

तत्तद्विशेषनिर्मुक्तः=ते ते ये विशेषाः अहन्त्वममत्त्वादयः कर्तृत्वभोक्तृत्वादयो घटत्वपटत्वादयः कार्यकारणभावसंसर्गरूपादयो वा तैरेतैर्निर्मुक्तो नितरां मुक्तोऽर्थात्तत्तद्विकारादिभिरसंस्पृष्टः अपि आत्मा स्वतमसा=स्वाश्रयस्वविषयाज्ञानेन आवृतः=आवरणं प्राप्तः सन् रजसा=रजोगुणेन अज्ञानीयविक्षेपशक्त्या विक्षिप्तः=विक्षेपं प्राप्तः तत्तद्विशेषवान् इव=तादृक्षकार्याकारेण परिणत इव भाति=प्रकाशते, वस्तुतस्तु निर्विशेष एवायमित्याशयः ।

उक्तञ्च सर्वज्ञात्ममुनिभिः "सङ्क्षेपशारीरके"—

प्रत्यक्प्रमाणकमसत्यपराक्प्रभेदं
प्रक्षीणकारणविकारविभागमेकम् ।
चैतन्यमात्रपरमार्थनिजस्वभावं
प्रत्यञ्चमच्युतमहं प्रणतोऽस्मि नित्यम् ॥ ( १ । ३ )

आच्छाद्य विक्षिपति संस्फुरदात्मतत्त्वं
जीवेश्वरत्वजगदाकृतिभिर्मृषैव ।
अज्ञानमावरणविभ्रमशक्तियोगा-
दात्मत्वमात्रविषयाश्रयताबलेन ॥ (१।२०) इति ॥१५४ ॥

सं०—उक्त अर्थ को विशद करते हैं—

पदार्थ—तत्तद्विशेषनिर्मुक्तः=अहन्त्वममत्वादि कर्तृत्वभोक्तृत्वादि घटत्व पटत्वादि तथा कार्यकारणभावसम्बन्धरूपादि नाना प्रकार के विशेषों मे अत्यन्त मुक्त अपि=भी आत्मा=आत्मा स्वतमसा=स्वाश्रित स्वविषय अज्ञान से आवृतः=आवरण को प्राप्त हुआ २ रजसा=रजोगुण से अर्थात् अज्ञान की विक्षेप शक्ति द्वारा विक्षिप्तः=विक्षेप को प्राप्त हो कर तत्ताद्विशेषवान् इव=उस उस विशेष ( विकार ) वाले की न्याईं हुआ भाति=भासता है, ( वस्तुतः वह निर्विशेष ही है उस में कोई विशेष नहीं )॥१८४॥

इत्थश्च नात्मसत्तातिरिक्ताऽन्या कापि सत्ता युक्तियुक्तेतीममर्थं प्रसाध्य श्रुतिमपि तत्र प्रमाणयति—"अतः" इति—

**अतोऽसत्त्वं विशेषाणां प्रत्यक्षाद्दर्शयत्यसौ ।**
**वाचारम्भणं विकारो नामधेयमिति श्रुतिः ॥१८५॥**

अतः=यस्मादेवं सर्वे विशेषा अद्वैतात्मनि तदाश्रिताज्ञानसमुत्थाः स्वतस्तु तेषां सत्ता नास्ति तस्मादेव कारणात् असौ श्रुतिः=इदं वेदवाक्यम् प्रत्यक्षात्=स्वत एव साक्षात् विशेषाणाम्=सर्वेषामुक्तानां विशेषाणाम् असत्त्वम्=स्वतःसत्ताशून्यतां दर्शयति=प्रतिपादयति। का सा श्रुतिरित्याह–"वाचारम्भणं विकारो नामधेयम्" (छां०६।१।४,५,

१ यद्वा निषेधप्रतियोगिभूतानां सर्वविशेषाणामसत्त्वे श्रुतिरपि प्रमाणमित्याह "अतः" इति।

६; ६ । ४ । १, २, ३, ४ ) इति="यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्,वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" (छां० ६।१।४) इत्येवमादिकं वेदवाक्यमित्यर्थः ।

अत्रोक्तश्रुतेरयमर्थः—यथा सोम्यैकेन मृत्पिण्डेन कारणभूतेन विज्ञातेन सर्वं मृन्मयं मृद्विकारजातं घटादि विज्ञातं स्यात् कार्यस्य कारणानन्यत्वादित्यर्थः। कथं तर्हि कार्यकारणयोर्भेदप्रसिद्धिरित्यत आह वाचेति । वाचारभ्यत इति वाचारम्भणं वागालम्बनं विकार उच्यते, परन्तन्न परमार्थतो वस्त्वस्ति । यतो नामधेयं नामैव नामधेयं नाममात्रं नार्थोऽस्तीत्यर्थः। तर्हि किमस्तीत्याह-मृत्तिकेति। मृत्तिकेत्येव मृत्तिकैव तु सत्यं,वस्तुषु (घटशरावादिषु)व्यावर्त्तमानेष्वनुस्यूतत्वादिति । एवमेवापरा अपि एतत्प्रकरणस्थाः श्रुतयो योज्याः। स्पष्टीकृतश्चायमर्थो महत्यारभट्या-"तदनन्यत्वमारम्भणशब्दादिभ्यः" ( ब्र० सू० २।१ ।.१४ ) इत्यत्रारम्भणाधिकरणे ॥१५५॥

सं०—अब उक्त अर्थ को श्रुति द्वारा स्पष्ट करते हैं[1]—

पदार्थ—अतः = इसी कारण से " वाचारम्भणं विकारो नामधेयम् " इति (छां० ६।१।४,५,६;६।४।१,२,३,४)="यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति असौ श्रुतिः=इत्येवमादिक स्वतःप्रमाणभूत वेदवाक्य विशेषाणाम् = सब विशेषों की असत्त्वम् = स्वतःसत्ताशून्यता को प्रत्यक्षात् = साक्षात् ही दर्शयाति = दिखाता है ।

---

१ यद्वा निषेध प्रतियोगिभूत सर्व विशेषों के असत्व में श्रुति प्रमाण देते हैं ।

यह श्रुतियां छान्दोग्य उपनिषद में आरुणि-श्वेतकेतु (पिता पुत्र) के संवाद की हैं—पहिली का अर्थ इस प्रकार है। हे सोम्य ! जैसे कारणभूत एक मृत्पिण्ड के विज्ञात होने से यावत् मृत्तिका के विकार (कार्य) विज्ञात हो जाते हैं क्योंकि मृत्तिकासत्ता से उन की कोई पृथक् (स्वतन्त्र) सत्ता उपलब्ध नहीं होती ऐसा ही वह आदेश है जिस के श्रवण द्वारा एक ब्रह्म के ज्ञात होने पर सकल प्रपञ्च ज्ञात हो जाता है, अर्थात् ब्रह्म की सत्ता से पृथक् प्रपञ्च की भी कोई स्वतन्त्र सत्ता नहीं है । सर्व विकार वाणी का आरम्भणमात्र ही होते हैं अर्थात् जैसे घट, घटिका शराव आदिक विकार नाममात्र ही हैं, केवल मृत्तिका ही सकल घटादि कार्यों में अनुस्यूत होने से सत्य है। उसी प्रकार याव-त्प्रपञ्च भी कार्य होने से वाणी का प्रयोग मात्र ही है और केवल ब्रह्म सकल प्रपंच में अनुस्यूत होने से सत्य है। इसी प्रकार इस प्रकरण में आई हुई अन्य श्रुतिओं का अर्थ भी लगा लेना चाहिए। इन श्रुतियों से स्पष्ट सिद्ध है कि सब विशेष मिथ्या हैं और निर्विशेष एक ब्रह्म ही परमार्थ सत्य है ॥

श्रुत्यन्तर्गतं नामधेयशब्दं निर्वक्ति—"नामैव" इति—

नामैव नामधेयं स्यादिति व्युत्पत्तियोगतः ।
नाममात्रादृते नार्थः कश्चिदप्युपलभ्यते ॥१९६॥

नाम एव नामधेयं स्यात् = नामप्रातिपदिकात्स्वार्थे धेयप्रत्यये कृते "नामधेय" शब्दः सिद्धयति तस्य नाममात्रमित्येवार्थो भवति इति व्युत्पत्तियोगतः=इत्याकारताद्धितव्युत्पत्तियोगेन अर्थात् नाम-धेयपदेऽवयवशक्तियोगतः नाममात्रात् ऋते=नाममात्रं विना अर्थगन्धः अपि=अर्थस्य विषयस्य गन्धो लेशोऽर्थगन्धः विकारसत्तालेशो-ऽपि न=नास्ति, इति=एवमभिप्रायेण उपदिश्यते=उपदेशविषयी-क्रियते श्रुत्येति शेषः।

अत्रेदमवधेयम्—"नामैव" इत्यत्र एवकारोऽन्ययोगव्य-वच्छेदार्थः, यथा "साधुरेव" इत्युक्तौ एवेन चोरव्यावृत्तिर्भवति तद्वत् प्रकृतेऽपि नामपदेन सहैवोक्तार्थयोगो व्यवच्छिद्यते, तेन च विकाराणां स्वतन्त्रसत्ता विनिवार्यते ॥१५६॥

सं०—अब श्रुत्यन्तर्गत "नामधेय" पद का निर्वचन करते हुए यावत् विकार की स्वतन्त्र सत्ता का निषेध दिखाते हैं—

पदार्थ—नाम एव नामधेयं स्यात् = नाम ही नामधेय कहाता है अर्थात नाम पद के उत्तर स्वार्थ में "धेय" प्रत्यय के लगाने से "नामधेय" पद की सिद्धि होती है जिस का अर्थ नाममात्र ही होता है इति व्युत्पत्तियोगतः = इस प्रकार की व्युत्पत्ति के बल से अर्थात "नामधेय" पदनिष्ठ अव-यव शक्ति ( योगशक्ति ) के द्वारा नाममात्रात् ऋते = नाममात्र के विना अर्थगन्धः अपि = घटपटादि विकाररूप अर्थ का

१ "भागरूपनामभ्यो धेयः" इति वार्तिकेनेत्यर्थः।

लेशमात्र भी ( स्वतन्त्र सत्तावान् ) न = नहीं हैं, इति उपदिश्यते = इस प्रकार श्रुति का उपदेश है।

सार यह है कि जैसे "साधुरेव" (साधु ही है) ऐसा कथन करने पर वाक्यान्तर्गत " एव " पद से साधुभिन्न चौरादि की व्यावृत्ति विवक्षित होती है वैसे ही " नामैव नामधेयम्" इस वाक्य में "एव" के द्वारा नामभिन्न घटादि विकार की व्यावृत्ति जाननी ॥१५६॥

अर्थस्य नाममात्रतामाह— "पटोऽस्ति" इति—

पटोऽस्तीति घटोऽस्तीति व्यवहारः स्फुटोऽप्यहो ।
न पटो न घटो नाम वस्तु किञ्चिदवेक्ष्यते ॥१५७॥

" अहो "=इति महदाश्चर्यम् यद्यपि पटः अस्ति इति घटः अस्ति इति = इत्येवंरूपः सत्तानुविद्धः व्यवहारः=शब्दप्रयोगः स्फुटः=प्रकटो वर्तते इति शेषः तथापि पटः नाम किञ्चिद् अपि वस्तु = परमार्थभूतं सत्तातिरिक्तं न=नैव अवेक्ष्यते=प्रतीयते, एवमेव घटः ( नाम ) किञ्चिदपि परमार्थभूतं वस्तु न = नैवावेक्ष्यत इति विभज्यान्वयः ॥ १५७॥

सं०—अब अर्थ = विषय की नाममात्रता को कथन करते हैं—

पदार्थ—अहो=महान आश्चर्य है कि—पटः अस्ति इति= पट है घटः अस्ति=घट है इति=उक्ताकार व्यवहारः=शब्द-

---

१ अत्र श्लोके पटघटशब्दौ कार्यमात्रस्योपलक्षकौ बोध्यौ।

प्रयोगरूप व्यवहार स्फुटः=स्फुटरूप होता है परन्तु फिर भी विचार करने पर पटः नाम किञ्चित् अपि वस्तु=पट नाम कोई भी वस्तु सत्ता से अतिरिक्त न अवेक्ष्यते=भान नहीं होती और घटः(नाम किञ्चित् अपि वस्तु) न (अवेक्ष्यते)=घट नाम करके कोई स्वतन्त्र वस्तु सिद्ध नहीं होती । (अर्थात जैसे घटादि विकार स्वतन्त्रसत् न होने से मिथ्या हैं वैसे ही नामरूपात्मक सकल प्रपञ्च अपनी सत्ता से शून्य होने के कारण मिथ्या जानना चाहिये ॥१५७॥

उक्त एवार्थः स्पष्टीक्रियते—"वाचा" इति—

**वाचा निष्पद्यते नाम तच्च श्रोत्रेण गृह्यते ।**
**दृश्यन्ते तन्तवोऽक्ष्णा तद्गुणाश्चान्यन्न दृश्यते॥१५८॥**

वाचा=वाण्या नाम=घटपटादि नाम निष्पद्यते=निष्पन्नं भवति तत् च=तच्च नाम शब्दरूपत्वात् श्रोत्रेण=श्रोत्रेण करणेन गृह्यते=अध्यक्षीक्रियते, अक्ष्णा=चक्षुषा ( तु ) तन्तवः=अंशुविकाराः तद्गुणाः[3] च=रूपाद्याश्च दृश्यन्ते=आलोक्यन्ते. अन्यत्=नामरूपाभ्यां

---

१ यद्वा—ननु कथमुच्यते 'न पटो न घटो नाम वस्तु किञ्चिद्वेक्ष्यते' इति पटघटादीनां सार्वजनीनव्यवहारसिद्धत्वात् आतानवितानवत्त्वकम्बुग्रीवादिपटघटाद्याकृतीनां तत्तद्गुणानाञ्च प्रत्यक्षेणोपलभ्यमानानामनपोह्यत्वादिति चेदुच्यते "वाचा"इति ।

२ तन्तुशब्दोऽत्र मृत्तिकाया अप्युपलक्षणम् ।

३ तेषां तन्तूनां (मृत्तिकायाश्च) ये गुणा रूपस्पर्शगुरुत्वादयस्ते इत्यर्थः ।

पृथक् स्वतन्त्रसत्ताकं किमपि पटघटवाच्यं न दृश्यते=नैव भातीत्यर्थः ॥ १५८ ॥

संः—अब उक्त अर्थ का ही स्पष्टीकरण करते हैं—

पदार्थ—वाचा=वाणी से नाम=घटपटादि नाम निष्पद्यते=निष्पन्न (सिद्ध) होता है तत् च=और वह नाम (शब्द रूप होने के कारण) श्रोत्रेण=श्रोत्र इन्द्रिय से गृह्यते=साक्षात किया जाता है (सुना जाता है) परन्तु अक्ष्णा=चक्षु से तन्तवः=तन्तु, तद्गुणाः च=और उन के रूपादिगुण दृश्यन्ते=देखे जाते हैं अन्यत्=नामरूप से अतिरिक्त और कुछ भी पटघटादि पदार्थ न दृश्यते=नहीं दीखता ॥१५८॥

ननु तन्तुभिरारब्धत्वात्पटस्तन्तुभ्यो भिन्नः, मृदाऽऽरब्धत्वाच्च घटो मृद्भिन्नः शब्दबुद्धिकालादिभेदादपीति कथमुच्यते नाम्नोऽन्यन्न रूपादिकं स्वतन्त्रं सदिति चेदत्राह—"तन्तुभिन्नः" इति—

**तन्तुभिन्नः पटोऽस्तीति मृदो भिन्नस्तथा घटः ।**
**वस्तुवृत्तमनालोच्य भृशं मुह्यन्ति वादिनः ॥१५९॥**

पटः तन्तुभिन्नः अस्ति, तथा=तद्वत् घटः=कुम्भोऽपि मृदः=मृत्पिण्डात् भिन्नः=भेदवान् अस्तीति पुनरन्वयनीयम् इति=यदुक्तं तत्, वस्तुवृत्तम्=वस्तुनो वृत्तं वस्तुवृत्तं कार्यकारणयोस्तत्त्वम् अनालोच्य=अविचार्य वादिनः=आरम्भवादाद्यभिमानिनस्तार्किकाः

---

१ अत्र नाकृतेर्वस्तुत्वं तस्यास्तद्भावाभावान्वयव्यतिरेकाभ्याम् इत्यनुमानेन आकृतेरप्यवस्तुत्वं प्रमाणसिद्धमेवेत्यपि योज्यम् ।

भृशम्=अत्यन्तम् मुह्यन्ति=मोह प्राप्नुवन्ति ॥ १५९ ॥

सं०—कार्यकारण की भिन्न सत्ता मानने में वादियों का मोह कथन करते हैं—

पदार्थ—पटः=पटः तन्तुभिन्नः=तन्तुओं से भिन्न अस्ति=है तथा=वैसे ही घटः=घट मृदः=मृत्तिका से भिन्नः=भिन्न है इति=इस प्रकार वस्तुवृत्तम्=वस्तुस्वभाव को अनालोच्य=विचार किये विना वादिनः=कार्यकारण के भेदवादी तार्किक भृशम्=अत्यन्त ही मुह्यन्ति=मोह को प्राप्त होते हैं ॥ १५९ ॥

किं तद्वस्तुवृत्तमित्याह त्रिभिः "रूपस्पर्शे"त्यादिभिः—

रूपस्पर्शगुरुत्वानि यावत्तन्तुस्थितानि हि ।
विभागादिर्विभागान्तः संयोगः कारकैः कृतः ॥ १६० ॥

रूपस्पर्शगुरुत्वानि=रूपश्च स्पर्शश्च गुरुत्वञ्च तानि रूपस्पर्शगुरुत्वानि । तत्र चक्षुर्मात्रग्राह्यो गुणो "रूपम्," त्वगिन्द्रियमात्रग्राह्यो गुणः "स्पर्शः", आद्यपतनाऽसमवायिकारणं "गुरुत्वम्" । तान्येतानि हि=निश्चयेन यावत्तन्तुस्थितानि=यावत्तन्तु स्थितं येषां तानि यावत्तन्तुस्थितानि तन्तुस्थितिकालसमस्थितिभाञ्जि भवन्तीति शेषः ।

तथा विभागादिः=विभाग आदिर्यस्य सः विभागादिः विभागान्तः=विभागोऽन्ते यस्य स विभागान्तः, एवम्भूतो यः संयोगः=

अप्राप्तप्राप्तिरूपः संयोगाख्यो गुणो न्यायमते पटाऽसमवायिकारणभूतो घटाऽसमवायिकारणभूतो वाऽस्ति सः कारकैः=कर्त्रादिभिः कारकैः क्रियान्वयभाग्भिः कृतः=जनितोऽस्तीत्यर्थः ॥१६०॥

सं०—वह वस्तुवृत्त क्या है? इस आकाङ्क्षा के होने पर कहते हैं—

पदार्थ—हि=निश्चय करके रूपस्पर्शगुरुत्वानि=रूप स्पर्श तथा गुरुत्व यावत्तन्तुस्थितानि=तन्तुओं की स्थितिकाल पर्यन्त स्थिति वाले होते हैं। किञ्च—विभागादिः=विभाग है आदि में जिस के, तथा विभागान्तः=विभाग है अन्त में जिस के ऐसा संयोगः=तन्तुओं का परस्पर संयोग कारकैः=कर्त्ता आदि कारकों ने कृतः=किया है[2] ॥१६०॥

ततः किमित्याकाङ्क्षायां स्वोक्तेः परमतात्पर्यमाह "कारके"ति—

**कारकव्यापृतेर्दृष्टा संयोगे चरितार्थता।**
**संयोगात्तु पृथक्कश्चिदन्विष्टोऽपि प्रयत्नतः ॥१६१॥**

---

१ कारककृतो विभागादिर्विभागान्तः संयोगोऽपि तन्त्वादिकारणगत एव न पटादिकार्यगत इत्यपि नात्र विस्मरणीयम्।

२ यहां पर यह भी ध्यान रहे कि तुरीतन्तुवेमादि कृत विभागादि और विभागान्त संयोग गुण भी तन्त्वादि कारणगत ही होता है पटादिकार्यगत नहीं।

**पटस्य प्रागभावोऽस्ति सत्ता सन्ति तथा गुणाः ।**
**ध्वंसोऽस्तीति गिरामर्थः खपुष्पमिव नेक्ष्यते ॥१६२॥**

कारकव्यापृतेः=कारकाणां कर्त्तृकर्मकरणसम्प्रदानापादानादीनां या व्यापृतिः पटादिकार्यसाधनाय व्यापारविशेषो यथा पटसाधनाय कर्त्तुस्तन्तुवायस्य कृतिरूपो व्यापारः,तस्याः व्यापृतेः यथायथं चरितार्थता=सफलता संयोगे=तन्तुसंयोगे एव दृष्टा=अवलोकिता संयोगात् तु पृथक्=तं तन्तुसंयोगं विहायाऽन्यः कश्चित्=कोऽपि–"पटस्य प्रागभावः अस्ति" "पटस्य सत्ता अस्ति" "पटस्य गुणाः=शुक्लादयः सन्ति=वर्त्तन्ते तथा"पटस्य ध्वंसः अस्ति"इति गिराम् अर्थः=इत्येवंरूपाणां वाचां कश्चन स्वतन्त्रभूतोऽर्थः प्रयत्नतः=प्रयत्नेन अन्विष्टः अपि=विचारितोऽपि, खपुष्पम् इव=गगनकुसुममिव न ईक्ष्यते=नैवावलोक्यते विवेकिभिरिति शेषः ।

आतानवितानवन्तो विलक्षणक्रमास्तन्तव एव पटव्यवहारभाजो भवन्ति न वस्तुतः पटो नाम कश्चिदस्ति स्वतन्त्रः पदार्थ इति भावः । स्पष्टीकृतोऽयमर्थो भाष्यकारैरारम्भणाधिकरणे "पटवच्च" (ब्र० सू० २ । १ । १९) इति सूत्रभाष्ये। "खपुष्पमिव नेक्ष्यते" इति कथनेनाजातवादोऽपि ध्वनितः ॥१६१,१६२॥

सं०—अब सिद्धान्ती स्वोक्ति का परमतात्पर्य कथन करता है—

पदार्थ—कारकव्यापृतेः=कर्त्ता आदि कारकों के व्यापार की संयोगे=तन्तुसयोग में चरितार्थता=सफलता दृष्टा=देखी गई है (अर्थात् किसी विलक्षण प्रकार से तन्तुओं का

---

१ न पदार्थ इति शेषः।

परस्पर संयोग करा देना ही कारक व्यापार का फल है)[1] संयोगात् तु पृथक्=तन्तु संयोग से पृथक् अन्य कश्चित्=कोई पटस्य प्रागभावः अस्ति="पट का प्रागभाव है," सत्ता=पट की "सत्ता है", गुणाः सन्ति="पट के शुक्लादि गुण हैं" तथा=और ध्वंसः अस्ति="पट का ध्वंस है"—इति गिराम् अर्थः=इत्याकारक वाक्यों का अर्थ प्रयत्नतः=प्रयत्न से अन्विष्टः अपि=ढूंडने पर भी खपुष्पम् इव=आकाशपुष्प की न्याई न ईक्ष्यते=नहीं देखा जाता, (अर्थात् विलक्षण संस्थानविशिष्ट तन्तु ही पट है तन्तु से भिन्न पट की कोई स्वतन्त्र सत्ता नहीं) ॥१६१,१६२॥

यदि नास्ति पटादिः कश्चन स्वतन्त्रः पदार्थस्तर्हि कथं लोके "पटमानय, घटं पूरय" इत्यादिर्व्यवहारो दृश्यते ? इत्यत आह— "न केनापि" इति—

**न केनापि पटो दृष्टो न घटोऽपि यतस्ततः ।**
**पटोऽस्तीति घटोऽस्तीति व्यवहारो भ्रमः स्फुटः ॥**

यतः=यस्माद्धेतोः वस्तुविचारे क्रियमाणे केन अपि=प्रमात्रा विवेकिना पुरुषेण पटः=पटः न दृष्टः=नैव विलोकितः न अपि घटः=घटसत्ताऽपि वास्तविकी नालोक्यत इत्यर्थः, ततः=तस्मात्कारणात् पटः अस्ति इति, घटः अस्ति इति व्यवहारः=शब्द-

---

१ यहां पर भाव यह है कि तन्तुओं में संयोगगुण उत्पन्न करने मात्र से ही कारकों की चरितार्थता हो जाती हैं न कि पट की उत्पत्ति करने से।

प्रयोगः स्फुटः = प्रकटरूपः, भ्रमः=भ्रान्तिरेव । तथाचोक्तं श्रीमद्भागवते भरतरहूगणसंवादे—

न सूरयो हि व्यवहारमेनं तत्त्वावमर्शेन सहामनन्ति । इति

(श्रीमद्भा० ५।११।१)

अपि च तत्रैव

विशेषबुद्धेर्विवरं मनाक् च पश्यामि यन्न व्यवहारतोऽन्यत् ।
क ईश्वरस्तत्र किमीशितव्यं तथापि राजन् करवाम किन्ते ॥

(श्रीमद्भा० ५।१०।१२)

इति ॥ १६३ ॥

सं०—यदि पटादिक कोई भी स्वतन्त्र पदार्थ वस्तुतः नहीं है तो लोक में व्यवहार क्यों होता है ? ऐसी आशङ्का होने पर कथन करते हैं—

पदार्थ—यतः=जिस कारण से ( विचार करने पर ) केन अपि =किसी ने भी पटः न दृष्टः=पट नहीं देखा न अपि घटः(दृष्टः)=नाही घट देखा है ततः=अत एव पटः अस्ति इति= "पट है," घटः अस्ति='घट है', इति व्यवहारः=इत्याकारक व्यवहार स्फुटः=स्फुटरूप भ्रमः=भ्रम है ॥१६३॥

पटादिसृष्टौ व्याख्यातं प्रकृतिविकृतिभावं कार्यमात्रेप्यतिदिशति—"सर्वकार्येषु" इति—

**सर्वकार्येष्ववेक्ष्यैषा प्रक्रियेति विवक्षया ।**
**श्रुत्याऽग्न्यादिविकारेषु केषुचिद्व्युदपादि सा ॥१६४॥**

एषा=श्रौताऽनिर्वचनीयत्वपर्यवसायिनी प्रकृतिविकृतिभा-

वरूपा प्रक्रिया=रीतिः सर्वकार्येषु=अवच्छेद्याऽवच्छेदेन कार्यमात्र इत्यर्थः, अवेक्ष्या=विचारणीया निश्चेतव्या वा इति=एवंरूपेण विवक्षया=वक्तुमिच्छया तात्पर्येणेति यावत्, श्रुत्या=वेदेन केषुचित्=कतिपयेषु अग्न्यादिविकारेषु=अग्न्यादिकार्येषु सा=प्रक्रिया व्युदपादि=निरूपितेत्यर्थः ।

अयमर्थः—"अपागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयम्" ( छां० ६ । ४ । १ ) इत्यादिना यदग्न्यादीनां त्रिवृत्कृतानां रोहितादि रूपं प्रसिद्धं लोके तदत्रिवृत्कृतानां तेजःप्रभृतीनां विद्धि । तत्र रूपत्रयव्यतिरेकेण यदग्निरिति मन्यसे त्वम्, तस्याग्नेरग्नित्वमिदानीमपागादपगतम्, प्राग्रूपत्रयविवेकविज्ञानाद्याग्निबुद्धिरासीत्ते साग्निबुद्धिरपगताऽग्निशब्दश्चेत्यर्थः, इत्यादि स्वपुत्रं श्वेतकेतुं प्रति तत्पित्रुपदिष्टं श्रौतमर्थजातं विकाराणामनृतत्वमेव स्पष्टमाख्यातीति भावः ॥ १६४ ॥

सं०—पटादि कार्य में कथन किये हुए कार्यकारण भाव का कार्यमात्र में अतिदेश कथन करते हैं—

पदार्थ—एषा=यह ( पूर्वोक्त ) अनिर्वचनीयत्ववाद में पर्यवसान को प्राप्त होने वाली श्रुतिसम्मत प्रक्रिया=कार्यकारणभाव की रीति सर्वकार्येषु=( कार्यमात्र ) सब कार्यों में अवेक्ष्या=विचारने योग्य है, इति=इस प्रकार की विवक्षया=विवक्षा ( तात्पर्य ) से ही श्रुत्या=वेद ने केषुचित्=कई एक अग्न्यादिविकारेषु=अग्नि आदि विकारों में सा=वही प्रक्रिया व्युदपादि=प्रतिपादन की है ( दिखाई है ) ।

छान्दोग्य के षष्ठ प्रपाठक में अपागादग्नेरग्नित्वं वाचारम्भणम्= त्रिवृत्करणप्रक्रिया द्वारा, पूर्व निश्चय किया हुआ अग्नि का अग्निपना निवृत्त हो गया, किन्तु रोहितादिरूपमात्र की सत्ता से अतिरिक्त अग्नि की अपनी कोई सत्ता नहीं अर्थात "अग्नि" नाम तथा "अग्नित्व" रूप यह सब कल्पित है इत्यादि श्रुति ने स्पष्ट ही कार्यमात्र की स्वतन्त्र सत्ता का निषेध किया है जिस से सर्व विकार मिथ्या सिद्ध होते हैं ॥ १६४ ॥

किमर्थेयं कारणातिरिक्तकार्याभावरूपा कल्पना श्रुत्या क्रियते यावत् सा ब्रह्मस्वरूपनिरूपणे स्वतन्त्रेत्याशङ्कमानम्प्रत्याह "अयम्" इति—

**अयं न्यायोऽतिकारुण्यात्तेभ्यः श्रुत्योपदिश्यते ।**
**यैरात्मानात्मनोर्मोहात्सत्त्वं साधर्म्यमिष्यते ॥१६५॥**

श्रुत्या=मातृवत्परमहितकारिण्या वेदवाचा अयं न्यायः= कारणादनतिरिक्तसत्ताकः कार्यप्रपञ्चरूपोऽयं न्यायो दृष्टान्तः अग्न्यादिदृष्टान्तयुक्तिरित्यर्थः अतिकारुण्यात्=अत्यन्तं करुणया तेभ्यः=तेभ्योऽधिकारिभ्यः उपदिश्यते=कथ्यते, यैः=सुकुमारमतिभिः पुरुषैः मोहात्=अज्ञानाद्धेतोः आत्माऽनात्मनोः=प्रत्यक्पराचोः साधर्म्यम्=समानो धर्मः सत्त्वम्=सत्यरूपत्वेन इष्यते=मन्यते ।

अयं भावः—तार्किकादयो हि सत्तावत्त्वादिकमात्माऽनात्मनोः साधर्म्यं परमात्वसपत्त्वेन मन्यन्ते, स च तेषां मोहः, नहि निरस्तसमस्तातिशयस्य परमार्थसत्यस्वभावस्यात्मनः कथ-

मपि केनाऽपि विनश्वरस्वभाववता साम्यं भवितुमर्हति । नच परमार्थं सत् द्वितीयं किमपि वस्तु, दर्शितयुक्तेः । जगत्कारणत्व-वादिनीनां श्रुतीनाञ्च समन्वयः परब्रह्मण्येवेति तदनतिरिक्त-सत्ताकत्वं कार्यप्रपञ्चस्य बोधयितुमेव श्रुत्याग्न्यादिदृष्टान्तोऽवता-रितः "फलवत्सन्निधावफलं तदङ्गम्" इति न्यायादिति स्वतन्त्रा-ऽपि श्रुतिस्तथोपदेशे प्रकृतिविकृतिभावमवातारयत् । तदुक्तं "सङ्क्षेपशारीरके" द्वितीयाध्याये—

भोक्त्रादिसूत्रे परिणामवाद-
माश्रित्य तद्वादिभिरुक्तदोषम् ।
समादधानो मुनिराह तस्मात्
सिद्धान्तसिद्धिः पुनरुत्तरत्र ॥ ७९ ॥

तथाच—

कृपणधीः परिणाममुदीक्षते
क्षपितकल्मषधीस्तु विवर्त्तताम् ।
स्थिरमतिः पुरुषः पुनरीक्षते
व्यपगतद्वितयं परमं पदम् ॥ ८९ ॥ इति ॥१६५॥

सं०—ननु "कारण से अतिरिक्त कार्य की स्वतन्त्र सत्ता नहीं" इस रूप से जो श्रुति ने कारणातिरिक्त कार्या-भावरूप युक्ति कथन की है वह किस प्रयोजन के लिए है ? ऐसी आशङ्का होने पर कहते हैं—

पदार्थ—श्रुत्या=(माता के समान परम हित करने वाली) श्रुति ने अतिकारुण्यात्=अति दयालु होने के कारण अयं न्यायः=कारण सत्ता से अतिरिक्त कार्य की सत्ता के निषे-

धार्थ अग्नि आदि दृष्टान्तरूप युक्ति तेभ्यः=उन सुकुमारमति अधिकारी पुरुषों के लिये उपदिश्यते=कथन की है, यैः= जिन्हों ने मोहात्=अज्ञान से आत्मानात्मनोः=आत्मा तथा अनात्मा का साधर्म्यम्=समान धर्म सत्वम्=परमार्थसत्त्वरूप से इष्यते=स्वीकार किया है।

भाव यह है कि कई एक तार्किक प्रभृति आत्मा तथा अनात्मा के साधर्म्य को वस्तुतः सत्य स्वीकार करते हैं परन्तु पूर्वोक्त युक्तियों के द्वारा निर्विशेष आत्मा में किसी प्रकार का धर्मरूप विशेष सिद्ध नहीं हो सकता और ऐसे श्रुतिसम्मत उच्च सिद्धान्त को सहसा समझने में जिन अधिकारियों की बुद्धि समर्थ नहीं तथा हृदय में कार्यकारणभाव की सत्यता प्रबल हो कर बैठी है उन सुकुमारमति पुरुषों के हितार्थ श्रुति भगवती ने अध्यारोपद्वारा कार्यकारणभाव का उत्थान करके अग्न्यादि दृष्टान्तों से कार्य को अनृत कथन करते हुए एकमात्र परम कारण ब्रह्मसत्ता से ही प्रपञ्च को सत् कथन किया है। इस रीति के अनुसार जिज्ञासु के हृदय में प्रपञ्च का मिथ्यात्व भले प्रकार स्थिर हो जाता है यही उक्त दृष्टान्तों का प्रयोजन है ॥१६५॥

यद्यनात्मा स्वयं सन्न स्यात् तर्हि कथं व्यवहारः सिद्ध्ये-

दित्याशङ्कां परिहरन्नाह— "स्वसत्ताम्" इति—

**स्वसत्तां सञ्जयन्नेकः कल्प्यमानैर्विशेषणैः ।**
**सर्वस्य व्यवहारस्य निर्वोढाऽऽत्मा यथा नटः ॥१६६॥**

एकः=अद्वितीयः आत्मा=आत्मा कल्प्यमानैः=आविद्यकैः विशेषणैः=घटपटादिभिः सह स्वसत्ताम्=स्वात्मभूतां सत्ताम् सञ्जयन्=सम्बन्धयन् स्वसत्तासंसर्गमापादयन्निति यावत् सर्वस्य=अखिलस्य व्यवहारस्य=दानादानादिक्रियाकलापस्य निर्वोढा=निर्वाहकः, आत्मैवाऽविद्यां द्वारीकृत्य सकलं व्यवहारं निर्वहति न तत्राऽनात्मनः स्वतन्त्रसत्ताऽपेक्षणीया । उक्तेऽर्थेऽनुरूपं दृष्टान्तमाह—"यथा नटः" इति । यथा एक एव नटः=नाट्याभिनयकारी स्वशक्तिभूतेन विविधेनोपकरणेन राजामात्यादिव्यवहारं साधयति तद्वदित्यर्थः ॥ १६६ ॥

सं०—यदि अनात्मा में स्वतन्त्र सत्ता नहीं तो घट पटादि के व्यवहार की सिद्धि कैसे होगी ? ऐसा आक्षेप होने पर समाधान कहते हैं—

पदार्थ—एकः आत्मा=एक अद्वितीय आत्मा ही कल्प्यमानैः=अविद्याकल्पित विशेषणैः=घट पटादि पदार्थों के साथ स्वसत्तां सञ्जयन्=अपनी सत्ता का संसर्ग कराता हुआ यथा नटः=नटवत् सर्वस्य=सब व्यवहारस्य=व्यवहार का निर्वोढा= साधक है ( इस लिये व्यवहार सिद्धि के अर्थ अनात्मा की स्वतन्त्र सत्ता अपेक्षित नहीं ) ॥१६६॥

भूयोऽपि कार्यकारणयोरनन्यत्वप्रदर्शनव्याजेनोक्तमेवार्थं समर्थयते—"रूपकार्ये"ति—

  

**रूपकार्यसमाख्याश्च भिद्यन्ते हि परस्परम् ।**
**स्वसत्ताऽनुगता तत्र भिद्यते न मनागपि ॥१६७॥**

"हि"=इति निश्चितोऽयमर्थः । कोऽसाविति प्रदर्श्यते रूपकार्येत्यादेरन्वयेन । रूपकार्यसमाख्याः च=रूपञ्च कार्यञ्च समाख्या च ता रूपकार्यसमाख्याः । तत्र रूपम्=आकारः कम्बुग्रीवाद्यात्मको ऽवयवसन्निवेशविशेषात्मकः, कार्यम्=जलाद्याहरणादिकम्, समाख्या=घटपटाद्यभिधानम्, एते रूपाद्याः परस्परम्=अन्योन्यम् भिद्यन्ते=तत्तद्नात्मानः सम्भवन्ति, नहि यदस्ति रूपं तदेव जलाहरणम्, नच यज्जलाहरणं तदेव नामेति कोऽपि प्रेक्षावान् प्रतिपत्तुमर्हेत् । परन्तु तत्र=तेषु रूपादिषु अनुगता=अनुस्यूता स्वसत्ता=आत्मसत्ता मनाक् अपि=किञ्चिदपि न भिद्यते=भेदभाङ् न भवति सद्रूपं सत्कार्यं सन्नामेति सर्वत्र सदनुगतिदर्शनादित्यर्थः ॥१६७॥

सं०—अब उक्त अर्थ को प्रकारान्तर से पुष्ट करते हैं—

पदार्थ—हि=यह निश्चित अर्थ है कि रूपकार्यसमाख्याः च=घटादि का रूप, जलाहरणादि क्रिया, तथा घटादि नाम यह सब परस्परम्=परस्पर भिद्यन्ते=भिन्न २ होते हैं (जो रूप है सो नाम नहीं, जो नाम है सो रूप नहीं और जो जलाहरणादि क्रिया है वह रूपादिक नहीं,) परन्तु तत्र=इन सब रूपादिकों में अनुगता=अनुस्यूत ( एकरस ) स्वसत्ता=आत्मसत्ता मनाक् अपि=किञ्चिन्मात्र भी न भिद्यते=भेद को प्राप्त नहीं होती ॥ १६७ ॥

नन्वेवमात्मनि सामान्यसत्ताङ्गीकारे जातिवादिमतप्रवेशो निर्विशेषवादव्याकोपश्चेति शङ्कमानम्प्रत्याचष्टे—"विशेषैः" इति—

**विशेषैरात्मनो यावत्संसर्गो भात्यविद्यया ।**
**निःसामान्यात्मनस्तावदुक्तिः सामान्यनामतः ॥१६८॥**

यावत्=यावत्कालपर्यन्तम् अविद्यया=अज्ञानेन आत्मनः= विशेषैः=घटपटादिविशेषणैः सह संसर्गः=तादात्म्यं संसर्गाध्यास इत्यर्थः भाति=प्रतीयते वर्त्तत इति यावत् तावत्=तावदेव निःसामान्यात्मनः=सामान्यविशेषभावातीतस्य, तस्यात्मनः सामान्यनामतः=सामान्यनाम्ना उक्तिः=व्यवहारो भवतीत्यर्थः ।

आविद्यक एव सामान्यविशेषभाव आत्मनि नतु भाविकस्तथाच न जातिवादिमतप्रवेशो नापि निर्विशेषवादहानिरिति भावः ॥ १६८ ॥

सं :—ननु उक्त रीति से आत्मा में सामान्यविशेषभाव अङ्गीकार करने से निर्विशेषवाद की हानि होगी ?

उत्तरः—

पदार्थ—यावत्=जब तक विशेषैः=घटादि विशेषणों के साथ आत्मनः=आत्मा का अविद्यया=अविद्या से संसर्गः= संसर्गाध्यास भाति=भासता हैं ( बना रहता है ) तावत्= तब तक निःसामान्यात्मनः=सामान्यविशेषभाव से रहित आत्मा का भी सामान्यनामतः=सामान्यसत्ता नाम से उक्तिः=व्यवहार होता है ।

भाव यह है कि आत्मा में सामान्यविशेषभाव आविद्यक है परमार्थ नहीं अतएव सिद्धान्त में निर्विशेषवाद की कोई हानि नहीं ॥ १६८ ॥

अनात्मनोऽपि सत्संसर्गेणैव व्यवहार्यत्वं दर्शयति—"सत्ता-संसर्गतः" इति—

**सत्तासंसर्गतो हीष्टाऽनात्मनो व्यवहार्यता।**
**संसर्गो व्यवहार्यश्चेत्तदा तेनैव तस्य सा ॥१६९॥**

"हि" इति निश्चितमेतद् यत् सत्तासंसर्गतः=सत्तादात्म्येनैव अनात्मनः=घटपटादिदृश्यस्यापि व्यवहार्यता=व्यवहारविषयता इष्टा=युज्यत इत्यर्थः। चेत्=यदि संसर्गः=अनात्मनि सत्तादात्म्याध्यासः व्यवहार्यः=व्यवहारविषयत्वेनेष्टः तदा तेन एव=उक्तेन संसर्गाध्यासेनैव तस्य=संसर्गस्य सा=व्यवहार्यता मन्तव्येति शेषः। सर्वोऽपि व्यवहारः सत्तादात्म्यद्वारैवेति न व्यवहारसिद्धयै परमार्थसत्तान्तरापेक्षेति भावः ॥१६९॥

सं०—अब अनात्मा के व्यवहार को सत्ता के संसर्ग द्वारा कथन करते हैं—

पदार्थ—सत्तासंसर्गतः=सत्ता के संसर्ग से ही अनात्मनः=घटपटादि अनात्मा के व्यवहार्यता=व्यवहार की विषयता इष्टा=इष्ट है अर्थात् घटपटादि यावत् अनात्मा का ग्रहण त्यागादि व्यवहार सत्ता के संसर्गाध्यास से ही होता है हि=यह बात निश्चित ही है। चेत्=यदि संसर्गः=संसर्ग

व्यवहार्यः=व्यवहार की विषयता वाला इष्ट हो तदा=तब तेन=उस सत्ता के संसर्गाध्यास से एव=ही तस्य=उस की सा=व्यवहारविषयता जान लेनी ॥१६९॥

आत्मसत्ता तु स्वभाने निरपेक्षैवेत्याह "अज्ञाते" इति—

**अज्ञाते निर्विशेषे यो यो विशेषो विकास्यते ।**
**तत्राऽनावरणा सत्ता स तयैव प्रकाश्यते ॥१७०॥**

अज्ञाते=अज्ञानाधिष्ठाने निर्विशेषे=विशेषभावविवर्जिते सन्मात्रवपुषि ब्रह्मणि यः यः विशेषः=घटपटादिद्वैतरूपोऽध्यस्तः सन् विकास्यते=विकसितो भवति भातीत्यर्थः, तत्र=तस्मिन् स्फुरति सति अध्यस्ते सत्ता=ब्रह्मसत्ता तु अनावरणा=आवरणरहिता स्वयम्भातैवास्ति । सः=सोऽयं विशेषः तया एव=आवरणशून्ययैव सत्तया प्रकाश्यते=भातो भवति ।

एतदुक्तं भवति—यथा शुक्तिरजतादिभाने इदमंशोऽनावरणोऽनुस्यूतश्चावृतांशस्तु रज्जुत्वादिः, तद्वत् ब्रह्मसत्ताऽप्यनावरणा आवृतांश आनन्दादिरिति सन्तोष्टव्यम्[1] । उक्तञ्चाचार्यैः-

अध्यस्तमेव हि परिस्फुरति भ्रमेषु
नान्यत्कथञ्चन परिस्फुरति भ्रमेषु ।
रज्जुत्वशुक्तिशकलत्वमरुक्षितित्व-
चन्द्रैकताप्रभृतिकानुलम्भनेन ॥ ( सं० शा० १ । ३६ )

इति॥ १७० ॥

---

१ विशदयिष्यन्ति च ग्रन्थकारा एतदेव द्वितीये परिच्छेदे । तथाहि—
**सच्चिद्रूपं स्वसिद्ध्यर्थमनाच्छाद्यात्मनस्तमः ।**
**आश्रित्यैवाद्वयानन्दस्वरूपं संवृणोति च ॥१३॥**

सं०—अब "ब्रह्मसत्ता स्वप्रतीति में निरपेक्ष है" इस अर्थ को कहते हैं—

पदार्थ—अज्ञाते=अज्ञान तत्कार्य के अधिष्ठानभूत निर्विशेषे=विशेष ( द्वैत ) भाव से वर्जित सन्मात्र ब्रह्म में यः यः विशेषः=जो जो घट पटादि विशेष विकास्यते=भासता है, तत्र=उन विशेषों के भासने में सत्ता=ब्रह्मसत्ता तो अनावरणा=आवरण शून्य स्वयं प्रकाश ही रहती है, सः=और वह वह विशेष तया एव=उसी निरावरण सत्ता के द्वारा प्रकाश्यते=प्रतीत होता है (अर्थात् ब्रह्मसत्ता ही स्वतन्त्र है अन्य नहीं) ॥ १७० ॥

सैव सत्ता सविचाराऽज्ञानतत्कार्यबाधिकेत्याह "स्वप्रकाशा" इति—

**स्वप्रकाशा हि दृग्रूपा सत्ता सर्वप्रकाशिका ।**
**सम्यग्विचारमापन्नाऽविद्यातत्कार्यनाशिका ॥ १७१ ॥**

"हि" इति निश्चितोऽयमर्थः। कोऽसौ इत्याह—दृग्रूपा=चैतन्यस्वरूपा स्वप्रकाशा=अवेद्यत्वे सति अपरोक्षव्यवहारविषया सत्ता=ब्रह्मसत्ता ( सन्मात्रं ब्रह्मेत्यर्थः ) सर्वप्रकाशिका=सर्वस्यैव प्रकाशयित्री यत्रेदमुक्तम्—"तमेव भान्तमनुभाति सर्वम्" ( मुं० २। २। १० ) इति। सैव सत्ता सम्यग्विचारम् आपन्ना=सम्यग्विचारसहकृततत्त्वमस्यादिमहावाक्यजन्याखण्डाकारवृत्तिसंसर्गं प्राप्ता सती ( विशेषभावं प्राप्ता सती ) अविद्यातत्कार्यनाशिका=

मूलाविद्यातत्कार्यभूताऽहङ्कारादिसमस्तप्रपञ्चबाधिका भवति। प्रपञ्चितश्चायमर्थो "वेदान्तकल्पलतिकायां" मधुसूदनसरस्वतीभिरिह ग्रन्थगौरवभयादुदास्यते ॥१७१॥

सं०—अब विचार सहित उक्त सत्ता को अज्ञान तत्कार्य का बाधक कथन करते हैं—

पदार्थ—हि=यह सिद्धान्त निश्चित है कि दृग्रूपा= चैतन्यस्वरूप तथा स्वप्रकाशा=अपनी स्फूर्ति के लिये अन्य किसी भी प्रकाश की अपेक्षा न करने वाली सत्ता=ब्रह्म-सत्ता (ही) सर्वप्रकाशिका=सब का प्रकाश करती है। (और) वही सत्ता सम्यग्विचारम्,आपन्ना=विचारसहकृततत्त्वम-स्यादि महावाक्यजन्य अखण्ड वृत्ति के संसर्ग को प्राप्त हुई हुई (अर्थात् तादृश विशेषभाव को प्राप्त हो कर) अविद्यातत्कार्यनाशिका=अविद्या और उस के कार्यभूत सकल अहङ्कारादि प्रपञ्च का बाध करती है (बाधक होती है) ॥ १७१ ॥

अविद्यायाः पूर्वोत्तरावधिमाह "द्रष्टुः" इति—

**द्रष्टुः सत्त्वमनावृत्य तत्कैवल्यमुपाश्रिता।**
**नामरूपक्रियाकाराऽविद्यैव दृश्यते दृशा ॥१७२॥**

द्रष्टुः=स्वयम्प्रकाशसाक्षिणः सत्त्वम् अनावृत्य=स्वरूपसत्ताया आवरणमकृत्वैव तत्कैवल्यम्=तदखण्डस्वरूपम् उपाश्रिता=

१ एष एव विषयः पूर्वं पञ्चविंशतितमे श्लोके सदृष्टान्तं व्युत्पादितः।

सती नामरूपक्रियाकारा=नाम च रूपश्च क्रिया चेति द्वन्द्वः ता आकारो यस्याः नामादिरूपेण परिणममाना, अविद्या एव=अज्ञानमेव दृशा=दृग्रूपेण प्रतीचा दृश्यते=भास्यते। आच जगदाकारपरिणाममाचाखण्डाकारवृत्तिमविद्यायाः पूर्वोत्तरावधिरिति भावः॥ १७२॥

सं०—अब अविद्या की पूर्वोत्तर अवधि कथन करते हैं—

पदार्थ—द्रष्टुः=स्वयम्प्रकाश साक्षी के सत्त्वम्=स्वरूप को अनादृत्य=आवरण न करके तत्कैवल्यम्=उस की अखण्डता को उपाश्रिता=आश्रयण करती हुई और नामरूपक्रियाकारा=नाम, रूप तथा क्रिया के परिणाम को प्राप्त हुई अविद्या, एव=अविद्या ही दृशा=दृग्रूप आत्मा करके दृश्यते=भासती है, (अर्थात जगदाकार परिणाम से लेकर अखण्डाकार वृत्ति की उत्पत्ति पर्यन्त ही अविद्या की स्थिति=अवधि जाननी चाहिये )॥१७२॥

सम्प्रत्यात्मकैवल्यमुच्यते—"तत्तद्" इति—

**तत्तद्विशेषनिर्मुक्तं सर्वसम्बन्धवर्जितम्।**
**निःसामान्यविशेषं यत्तत्कैवल्यं दृगात्मनः॥१७३**

---

१ गतश्लोकेऽनावृतात्मकैवल्यमुपाश्रिता सत्यविद्यैव नामरूपक्रियाकारा भासते इत्युक्तं परं किं तत्कैवल्यस्वरूपमित्यशङ्कायां तत्कैवल्यस्वरूपमभिधातुमाह "तत्तद्" इति भावः।

तत्तद्विशेषनिर्मुक्तम्=ते च ते विशेषाः अहमाद्याः घटपटाद्याश्च तैर्निर्मुक्तं नितरां मुक्तं सकलविशेषातीतम् अत एव सर्वसम्बन्धवर्जितम् = सर्वे च ते सम्बन्धाः संयोगाद्यास्तैर्वर्जितमसङ्गत्वात् एवं यत् दृगात्मनः=चैतन्यवपुषो ब्रह्मणः निःसामान्यविशेषम्=सामान्यविशेषभावरहितं स्वरूपमस्तीति शेषः, तत्=तदेव तस्य कैवल्यम् = केवलीभाव इत्यर्थः। अनाद्यविद्यानिवृत्त्युपलक्षितं निरतिशयानन्दबोधरूपं निःसामान्यविशेषत्वमेवात्र कैवल्यपदेन व्यपदिष्टमिति भावः॥ १७३॥

सं०—ननु पिछले श्लोक में आए हुए कैवल्य पद से आप का क्या अभिप्राय है? ऐसी आशङ्का के होने पर आत्मा का कैवल्य स्वरूप कथन करते हैं—

पदार्थ—तत्तद्विशेषनिर्मुक्तम्=उन २ घटपटादिविशेषों से रहित अथवा कर्तृत्वभोक्तृत्वादि विशेषों से रहित तथा सर्वसम्बन्धवर्जितम्=सर्व प्रकार के सम्बन्धों से वर्जित यत्=जो दृगात्मनः=दृक् स्वरूप चेतन आत्मा का निःसामान्यविशेषम्=सकल सामान्यविशेषभाव से शून्य स्वरूप है तत्=वही उस का कैवल्यम्=मुक्तस्वरूप है, अर्थात् अनादि अविद्या की निवृत्ति करके उपलक्षित निरतिशयानन्द बोधस्वरूप आत्मा का निःसामान्यविशेषभाव ही "कैवल्य" पद से अभिप्रेत है॥१७३॥

सम्प्रति द्वाभ्यामुक्तमर्थं स्फुटयन्नुपसंहरति "द्रष्टृदृश्यत्वे" ति—

द्रष्टृदृश्यत्वरूपो वा भोक्तृभोग्यत्वलक्षणः ।
आधाराधेयतारूपोऽप्यन्यो वापि यथा तथा ॥१७४॥
साक्षादपि प्रणाड्या वा यः कोऽप्यस्य कथञ्चन ।
द्रष्टुर्दृश्येन सम्बन्धः स बन्धः स मृषोदितः ॥१७५॥

द्रष्टृदृश्यत्वरूपः=प्रकाश्यप्रकाशस्वरूपः वा=अथवा भोक्तृभोग्यत्वलक्षणः=भोक्तृभोग्यस्वरूपः अपि वा=किंवा आधाराधेयतारूपः=अधिष्ठानाधिष्ठेयस्वरूपः अन्यः अपि (वा) यथा तथा=येन केनापि प्रकारेण उक्तेभ्यः सम्बन्धेभ्योऽन्योऽपि वा यः कोऽपि सम्भवन् साक्षात्=साक्षादेव अपि वा=अथवा प्रणाड्या=परम्परया यः कः अपि अस्य द्रष्टुः=सर्वसाक्षिणः आत्मनः दृश्येन=अनात्मना सह कथञ्चन=केनापि प्रकारेण कोऽपि सम्बन्धः, सः=सः सर्वोऽपि सम्बन्धः बन्धः=बन्धपदवाच्यः सः मृषा=मिथ्यैव उदितः=कथितः प्रतीतो वा भवति। वास्तवसम्बन्धस्य दर्शितरीत्याऽनुपपत्तेरिति भावः ॥१७४; १७५॥

सं०—अब दो श्लोकों द्वारा उक्त अर्थ को स्फुट करते हुए उपसंहार करते हैं—

पदार्थ—द्रष्टृदृश्यत्वरूपः=द्रष्टा का दृश्य के साथ द्रष्टृदृश्यत्वरूप वा=अथवा भोक्तृभोग्यत्वलक्षणः=भोक्तृभोग्यत्वस्वरूप अपि वा=किंवा—आधाराधेयतारूपः=आधाराधेयभाव अन्यः अपि (वा) यथा तथा=और भी येन केन प्रकारेण जो सम्बन्ध सम्भव हो सके वह सब ही साक्षात्=साक्षात् अपि वा=अथवा प्रणाड्या=परम्परारूप से यः कः अपि=जो कोई भी कथञ्चन=

किसी प्रकार से अस्य=इस द्रष्टुः=द्रष्टा का दृश्येन=दृश्य के साथ सम्बन्धः=सम्बन्ध है सः बन्धः=वह बन्ध कहाता है परन्तु सः=वह मृषा=मिथ्या ही उदितः=कथन किया गया है वा भासता है।

सार यह है कि दर्शित श्रुति युक्ति द्वारा असङ्ग आत्मा के साथ दृश्य का कोई भी सत्य सम्बन्ध सिद्ध नहीं हो सकता ॥ १७४, १७५ ॥

नचैवं सति तार्किकमतसिद्धो दुःखध्वंसरूपोऽपि मोक्षः सिद्ध्यतीत्याह "मिथ्यादृश्येन" इति—

**मिथ्यादृश्येन मिथ्यैव यः सम्बन्धो दृगात्मनः ।**
**तस्य ज्ञानेन बाधः स्यान्न ध्वंसस्तूपपद्यते ॥१७६॥**

मिथ्यादृश्येन=दर्शितरीत्या मिथ्याभूतेन दृश्येन अहङ्कारा-द्यनात्मना सह दृगात्मनः=दृग्रूपस्यात्मनः यः सम्बन्धः स मिथ्या एव=मृषाभूत एवाऽस्ति । तस्य=एवंविधस्य तस्य सम्बन्धस्य ज्ञानेन=तत्त्वमस्यादिमहावाक्योत्थाखण्डाकारात्मकब्रह्मज्ञानेन बाधः =निवृत्तिः स्यात्, ध्वंसः तु=बन्धप्रतियोगिकः ध्वंसाभावस्तु न=नैव उपपद्यते=उपपन्नो भवति ।

अयमभिसन्धिः—इच्छाद्वेषाद्या गुणाश्चेत्स्वाभाविकास्तर्हि धर्मिणि सति तेषामत्यन्तोच्छेदो न स्यात्, घटे सति तस्य याव-द्विशेषगुणोच्छित्त्यदर्शनात् । तथा चोक्तं वार्तिककारैः—

आत्मा कर्त्रादिरूपश्चेन्मा काङ्क्षीस्तद्विमुक्तताम् । (सं० वा० ५५)
नहि स्वभावो भावानां व्यावर्त्तेतौष्ण्यवद्रवेः ॥ ( सं० वा० ५६ )

इति। तथाच धर्मिणा सहैव तेषां निवृत्त्यङ्गीकारे नैरात्म्यवाद-प्रसङ्गोऽनिवार्यः। तदुक्तं ब्रह्मसिद्धिकारैः—"विज्ञानादिविशेषगुण-निवृत्तिलक्षणा च मुक्तिरुच्छेदपक्षान्न भिद्यते, नहि सतोऽप्यात्यन्तिको दर्शना-भावोऽभावाद्विशिष्यते, कश्च सर्वतः प्रेयस आत्मनोऽभावमभिकाङ्क्षेदित्यपुरु-षार्थो मोक्षः स्याद्" इति। तस्मान्मिथ्याबन्धबाध एव मोक्षो न वि-शेषगुणात्मकबन्धध्वंसरूप इति। प्रपञ्चस्तु वेदान्तकल्पलतिकादौ द्रष्टव्यः॥ १७६॥

सं०—उक्त बन्ध का रज्जुसर्पवत् बाध कथन करते हुए तार्किकमतसिद्ध दुःखध्वंसरूप मोक्ष की अनुपपत्ति कथन करते हैं—

पदार्थ—मिथ्यादृश्येन=मिथ्याभूत दृश्य अर्थात् अहङ्का-रादि अनात्मा के साथ दृगात्मनः=दृग्रूप प्रसक् आत्मा का यः=जो सम्बन्धः=सम्बन्ध है वह मिथ्या एव=मिथ्या ही है तस्य=उस मिथ्याभूत सम्बन्ध की ज्ञानेन=ब्रह्मज्ञान से बाधः=बाधरूप निवृत्ति ही स्यात्=होती है ध्वंसः तु=ध्वंसाभावरूप निवृत्ति कदापि न, उपपद्यते=उपपन्न नहीं हो सकती॥१७६॥

उक्तेऽर्थे उपपत्तिमाख्यान् ध्वंसबाधयोर्भेदमाचष्टे द्वाभ्यां "येन" इति—

येन रूपेण यद्वस्तु यत्र ध्वंसमुपागतम्।
तेन रूपेण तद्वस्तु तत्र सत्यं पुरा मतम्॥१७७॥
यद्रूपेण तु यत्किञ्चिद्यत्र बाधमुपागतम्।
तद्रूपेण च तत्तत्र कालत्रयेऽप्यसन्मतम्॥१७८॥

येन=प्रसिद्धेन रूपेण=कम्बुग्रीवादिरूपेण यद् वस्तु=यद् घटादिकं पदार्थजातम्, यत्र=यस्मिन् अधिकरणे कपालादौ मृत्पिण्डादौ वा ध्वंसम्=ध्वंसाख्यमभावम् उपागतम्=प्राप्तम्, तेन रूपेण=कम्बुग्रीवादिरूपेण तद् वस्तु=घटादिकं तत्र=अधिकरणे कपालादौ मृत्पिण्डादौ वा पुरा=ध्वंसावस्थातः प्राक् सत्यम्=अबाध्यं मतम्=अभिमतं स्वीकृतं तार्किकादिभिरित्यर्थः।

तु=परन्तु यत् किञ्चित्=यत्किमपि वस्तु रज्जुसर्पादिकं शुक्तिरजतादिकं वा यद्रूपेण=येन रूपेण सर्पत्वेन रजतत्वेन वा यत्र=स्वाधिष्ठानभूते रज्ज्वादौ बाधम् उपागतम्="नायं सर्पः" "नेदं रजतम्" इत्याकारेण बाधभावं प्राप्तम् तद्रूपेण च=तेनैव सर्पत्वादिरूपेण तत्=रज्जुसर्पादिकं तत्र=स्वाधिष्ठाने कालत्रये अपि=सर्वदैवेत्यर्थः असत्=अत्यन्तासत् अधिष्ठानसत्तानतिरिक्तसत्ताकं प्रतिभासमात्रशरीरं नतु तुच्छं,मतम्=इष्टमित्यौपनिषदानां सिद्धान्त इत्यर्थः। कार्यविनाशो हि द्विविधः। कश्चिदुपादानेन सह, कश्चिद्विद्यमान एवोपादाने। आद्यो बाधः। अन्त्यो निवृत्तिः (ध्वंसः)। आद्यस्य कारणमधिष्ठानतत्त्वसाक्षात्कारः, अपरस्य तु तद्भिन्नमिति द्वयोर्विवेक इति भावः। अनुपदमेवायमर्थः स्फुटीकरिष्यते॥ १७७, १७८॥

सं०—अब उक्त अर्थ में उपपत्ति कथन करते हुए ध्वंस तथा बाध का परस्पर भेद कथन करते है—

पदार्थ—यत्=जो वस्तु=घटादिक वस्तु येन=जिस रूपेण=कम्बुग्रीवादि रूप से यत्र=जिस कपालादिक अधिकरण में ध्वंसम्=ध्वंसाभाव को उपागतम्=प्राप्त हुई है, तत्=वह वस्तु=घटादिक वस्तु तत्र=उस अधिकरण (स्वाश्रय)

में तेन=उस रूपेण=रूप करके अर्थात् कम्बुग्रीवादि आकार से पुरा=ध्वंस के पूर्व सत्यम्=सत्य मतम्=इष्ट है, (अर्थात् तार्किकादिक सत्य घटादि पदार्थ का ही दण्डादि द्वारा "ध्वंस" मानते हैं)।

तु=परन्तु यत् किञ्चित्=जो कुछ रज्जु सर्पादिक पदार्थ यद्रूपेण=जिस आकार से यत्र=जिस रज्ज्वादि अधिष्ठान में बाधम्=बाधरूप निवृत्ति को उपागतम्=प्राप्त हो गया हो तद्रूपेण च=उसी सर्पत्वादिरूप से तत्=वह सर्पादि पदार्थ तत्र=उस रज्ज्वादि अधिष्ठान में कालत्रये अपि=तीन कालों में ही असत्=अत्यन्त असत्=प्रतीतिसिद्ध ही मतम्=मत (इष्ट) है।

सार यह है कि प्रतीयमान वस्तु की अधिष्ठान साक्षात्कार से निवृत्ति का नाम "बाध" और उक्त साक्षात्कार के विना दण्डादि प्रहार द्वारा घटादि निवृत्ति का नाम "ध्वंस" है, यही दोनों की परस्पर विशेषता जाननी चाहिये ॥ १७७,१७८ ॥

ध्वंसबाधयोर्भेदमुपसंहरति "ध्वस्ते" इति—

**ध्वस्तबाधितवैधर्म्यमेवमाहुर्मनीषिणः ।**
**बाध्यसत्त्वमतिर्भ्रान्तिर्वस्त्वज्ञानकृता यतः ॥१७९॥**

मनीषिणः=मनस ईषिणो मनीषिणः,शकन्ध्वादित्वात्साधुः । सदसद्विवेकिनः पण्डिताः ध्वस्तबाधितवैधर्म्यम्=ध्वंसबाधयोर्विरुद्ध-

स्वभावतां भेदमिति यावत्, एवम्=उक्तरीत्या आहुः=कथयन्ति। किमत्र प्रमाणमित्याह—"बाध्ये"ति। यतः=यस्मात् कारणात् बाध्यसत्त्वमतिः=बाध्यस्य शुक्तिरजतादेर्या सत्त्वमतिः सत्यताबुद्धिः (ययेष्टसाधनतां मन्वानः प्रतिपत्ता तदादातुं प्रवर्तते) सा वस्त्वज्ञानकृता=वस्तुनः शुक्त्यादेर्यदज्ञानमविद्या तत्कृता ततः सा भ्रान्तिः=अतस्मिंस्तद्बुद्धिरेवेत्यर्थः॥ १७९॥

सं०—अब ध्वंस और बाध के भेद का उपसंहार करते हैं—

पदार्थ—मनीषिणः=ज्ञाता पण्डित ध्वस्तबाधितवैधर्म्यम्=ध्वंस तथा बाध का भेद एवम्=दर्शित रीति के अनुसार आहुः=कथन करते हैं—यतः=क्योंकि बाध्यसत्त्वमतिः=बाध्य पदार्थनिष्ठ जो सत्यता बुद्धि वह वस्त्वज्ञानकृता=वस्तु के अज्ञान से होती है, (ध्वंस में ऐसा नहीं) इसी लिए वह भ्रान्तिः=भ्रान्ति है॥ १७९॥

सम्प्रति बाध्यादीनां स्वरूपमाह "बोध्यासत्त्वम्" इति—

बोध्यासत्त्वं भवेद्बाध्यं बुद्धासत्त्वं तु बाधितम्।
बाध्यासत्त्वमतिर्बाधो वस्तुबोधस्तु बाधकः॥१८०॥

बोध्यासत्त्वम्=बोध्यं ज्ञातव्यं त्रैकालिकमसत्त्वं यस्य तद् बोध्यासत्त्वं रज्जुसर्पादिकं बाध्यम्=बाधयोग्यं बाधबुद्धिविषयीभूतं भवेत्=स्यात्, तु=परन्तु बुद्धाऽसत्त्वम्=बुद्धं प्रतिभासकालात्पूर्वमेव ज्ञातमसत्त्वं यस्य तद् बुद्धासत्त्वं खपुष्पादिकं तुच्छं बाधितम्, भवेदिति पूर्वेण सम्बन्धः, बाधितशब्देन व्यपदिश्यत इत्यर्थः। बाध्यासत्त्वमतिः=बाध्यं रज्जुसर्पादिकं तन्निष्ठमसत्त्वं

त्रैकालिकनिषेधप्रतियोगित्वं, तद् विषयीकुर्वाणा या मतिः बुद्धिः सा, बाधः = "बाधः" इत्युच्यते, वस्तुबोधः तु=अधिष्ठान-साक्षात्कारस्तु बाधकः=बाधको भवतीत्येवं बाध्यादीनां स्वरूपं बोद्धव्यम् ॥ १८० ॥

सं०—अब बाध्यादिकों का स्वरूप कथन करते हैं—

पदार्थ—बोध्यासत्त्वम् = जानने योग्य है त्रैकालिक असत्त्व जिस का वह पदार्थ बाध्यम् = "बाध्य" भवेत्=होता है जैसा कि रज्जु में सर्प तथा शुक्ति में रजत इत्यादिक, तु = परन्तु बुद्धासत्वम् = प्रतिभास के पूर्व ही जान लिया है असत्त्व जिस का वह वस्तु बाधितम् = "बाधित" अर्थात् तुच्छ कहाती है जैसा कि—खपुष्पादिक । बाध्यासत्त्वमतिः = रज्जु सर्पादिक बाध्य पदार्थनिष्ठ जो असत्त्वबुद्धि वह बाधः = "बाध" जानना, वस्तुबोधः तु = और अधिष्ठान का जो साक्षात्कार वह बाधकः = "बाधक" कहाता है ॥१८०॥

किन्तद्वस्तु यत्साक्षात्कारेण बन्धबाधे सति मोक्षो लभ्यत इत्यत आह—"वस्त्वबाध्यम्" इति—

वस्त्वबाध्यं सदात्मैकस्तद्बोधो बन्धबाधकः ।
बन्धबाधमपेक्ष्यैव सिद्धस्यापि स साधकः ॥१८१॥

सदा=सर्वदैव कालत्रयेऽपि अबाध्यम्=बाधशून्यं वस्तु=परमार्थभूतं एकः=अद्वितीयः आत्मा=आत्मैवेत्यर्थः । तद्बोधः=तस्य

परमार्थात्मवस्तुनः बोधः साक्षात्कारः बन्धबाधकः=बन्धस्य दृश्यस्य बाधको निवर्त्तको भवति ।

ननु—अबाध्यात्मरूपश्चेन्मोक्षः कथं तर्हि ज्ञानेन तस्य सिद्धिरसिद्धस्यैव सिद्धिदर्शनादितीमां शङ्कां परिहरन्नाह—"बन्धबाधम्"इति । सः=वस्तुबोधः बन्धबाधम्=आध्यासिकस्य दृश्य-सम्बन्धरूपस्य बन्धस्य यो बाधः तम्, अपेक्ष्य एव=तदपेक्षां कृत्वैव सिद्धस्य अपि=नित्यप्राप्तस्यापि आत्मवस्तुनः साधकः=सिद्धि-हेतुरित्युच्यते । एतच्च पूर्वं सविस्तरं प्रत्यपीपदाम ॥१८१॥

सं०—अब वस्तु का स्वरूप कथन करते हुए नित्य सिद्ध मोक्ष की भी सिद्धि कथन करते हैं—

पदार्थ—एकः=एक अखण्ड अद्वितीय आत्मा=आत्मा ही सदा=सर्वदा अर्थात् तीनों कालों में अबाध्यम्=अबाध वस्तु=वस्तु है, तद्बोधः=उस आत्म वस्तु का जो बोध=साक्षात्कार वह बन्धबाधकः=बन्ध का बाधक है । बन्धबाधम्=बन्ध के बाध की अपेक्ष्य एव=अपेक्षा करके ही सः=वह वस्तु बोध सिद्धस्य अपि=नित्यसिद्ध भी आत्मरूप मोक्ष का साधकः=उपचार दृष्टि से साधक कहाता है (जैसा कि नित्य प्राप्त कण्ठमाला की प्राप्ति अज्ञाननिवृत्ति की अपेक्षा से मानी गई है ) ॥ १८१ ॥

सम्प्रति महाप्रकरणार्थमुपसंहरन् सम्पद्याविर्भावाधि-करणोक्तमर्थं सङ्गृह्णाति द्वाभ्यां "नाशी" इति—

नाश्यऽनित्यो मृषाऽविद्यामूलो द्वेष्यो जिहासितः।
सर्वानर्थवहो बन्ध इत्येवं साधितं यतः ॥१८२॥
बन्धोऽतः सर्वथा बाध्यो मोक्षोऽनेन तिरोहितः।
आत्मबोधेन तद्बाधे मोक्षोऽभिव्यज्यते स्वतः ॥१८३॥

यतः=यस्मात् कारणात् बन्धः=पूर्वोक्तस्वरूपो बन्धः नाशी=नाशवान्, अनित्यः=अस्थास्नुः, मृषा=मिथ्या, अविद्यामूलः=अविद्याऽज्ञानं मूलं यस्य स तादृशः, द्वेष्यः=प्रतिकूलज्ञानविषयोऽत एव जिहासितः=हातुमिष्टः सर्वैरपि प्राणिभिः, किञ्च सर्वानर्थवहः=जननमरणाधिव्याध्याद्युच्चावचक्लेशपरम्पराप्रसोता इति एवम्=इत्येवमाकारतया दर्शितरीत्या साधितम्=सप्रमाणं निरूपितमित्यर्थः।

अतः=अस्मात् कारणात् अयं बन्धः=प्रपञ्चाख्यः सर्वथा=सर्वप्रकारेण अर्थात् यज्ञदानादिना विविदिषां सम्पाद्य शमादिसम्पत्तिपूर्वकगुरूपसदनपूर्वकं प्राप्तेन ज्ञानेन बाध्यः=बाधनीयः, अनेन=अनेनैव पाप्मनाऽज्ञानेन ज्ञानविज्ञाननाशिना मोक्षः=मुक्तस्वरूपोऽप्यात्मा तिरोहितः=आवृतः शैवालेन नितान्तनिर्मलं सरो यथा। आत्मबोधेन=ब्रह्मात्मैक्यसाक्षात्कारेण तद्बाधे=तस्य बन्धस्य बाधे सति मोक्षः=मुक्तस्वभाव आत्मैव मोक्षः स्वतः=स्वयमेव अभिव्यज्यते=अभिव्यक्तो भवति। उक्तञ्च परमर्षिणा व्यासेन "सम्पद्याऽऽविर्भावः स्वेन शब्दात्" (ब्र०सू०४।४।१) इति।

१ "निर्गुणब्रह्मज्ञानिनामत्रैव परब्रह्मप्राप्तिमाह "सम्पद्य" इति। हृत्पुण्डरीकं भूतेन्द्रियान्तःकरणादिमिलितो जीवः सम्पद्य प्राप्य स्वेन रूपेण नित्यशुद्धबुद्धमुक्तसत्यज्ञानानन्दादिस्वरूपेण आविर्भावः आविर्भूतो भावः स्वरूपं यस्य स अभिव्यक्तस्वरूपवान्

अत्र स्वरूपनिष्पत्तिरपि नाऽपूर्वस्वरूपलाभविषया किन्तु पूर्वस्वरूपानतिरिक्तैव। कथं तर्हि फलत्वेनोक्तिः ? अज्ञाननिवृत्त्यपेक्षयेति ब्रूमः। तथा चाहुः पूज्यपादाः—" फलत्वसिद्धिरपि मोक्षस्य बन्धननिवृत्तिमात्रापेक्षा नाऽपूर्वोपजनापेक्षा " इति शिवोम् ॥१८२,१८३॥

सं०—अब महाप्रकरण का उपसंहार करते हुए सम्पद्याविर्भावाधिकरणोक्त अर्थ का दो श्लोकों द्वारा सङ्ग्रह करते हैं—

पदार्थ—यतः = जिस कारण से बन्धः = उक्तस्वरूप बन्ध नाशी = नाशवान, अनित्यः = अनित्य, मृषा = मिथ्या, अविद्यामूलः = अविद्या है मूल कारण जिस का ऐसा, और द्वेष्यः = प्राणिमात्र के लिए द्वेष का विषय अर्थात् प्रतिकूल ज्ञान का विषय है, अतएव जिहासितः = हातव्य ( त्याग करने की इच्छा का विषय ) सर्वानर्थवहः = ( और ) जन्ममरणादि अनेक क्लेश परम्परा का देने वाला है, इति एवम् = इस प्रकार दर्शितरीति के अनुसार साधितम् = हमने प्रमाण और युक्तिओं के साथ प्रतिपादन किया है।

अतः = इस कारण से अयं बन्धः = उक्त प्रपञ्चात्मक बन्ध सर्वथा = सर्व प्रकार से अर्थात् यज्ञादि कर्मों द्वारा

---

भवति। कुतः ? स्वेन शब्दात्। " एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते " ( छां० ८। १२। ३ ) इति श्रुतेरित्यर्थः। ( अद्वैतमञ्जरी )

विविदिषासम्पादन के अनन्तर विधिपूर्वक गुरूपसदन द्वारा प्राप्त किये हुए ज्ञान से बाध्यः=बाध करने योग्य है, अनेन=इसी पापी अज्ञान से मोक्षः=मुक्त आत्मा तिरोहितः=आवृत है। सो आत्मबोधेन=ब्रह्मात्मैक्य साक्षात्कार द्वारा तद्बाधे=उस बन्ध का बाध होने पर मोक्षः=मुक्तस्वभाव आत्मा स्वतः=स्वयमेव अभिव्यज्यते=प्रकाशित हो जाता है, (ऐसा बन्धनिवृत्त्युपलक्षित मुक्त आत्मा ही मोक्ष का स्वरूप जानना चाहिये) ॥ १८२, १८३ ॥

तस्यैव नित्याऽभिव्यक्तस्वरूपस्य मोक्षस्य स्वरूपमाह "अथैकः" इति—

**अथैको नित्यकूटस्थसच्चिदानन्दसागरः ।**
**स्वयं भाति स्वतोऽपास्तसुषुप्तिस्वप्नजागरः ॥१८४॥**

अथ=ब्रह्मात्मैक्यसाक्षात्कारोत्तराऽविद्यातत्कार्यात्मकबन्धबाधानन्तरम्, एकः=अद्वितीयः नित्यकूटस्थसच्चिदानन्दसागरः=नित्यस्त्रैकालाबाध्यः कूटस्थो निर्विकारश्चासौ सच्चिदानन्दः एव सागरः समुद्रः (अत्र शान्तत्वगाम्भीर्यादिना साम्यं बोध्यम्) एवम्भूतो मोक्ष आत्मा स्वयम्=स्वयमेव परापेक्षां वर्जयित्वैव भाति=भासते। एतदेव शास्त्रेण बोधनीयं यत्स्वतःसिद्धो मोक्ष इति, साध्यत्वे च तस्याऽनित्यत्वाद्यनिवार्यानेकदोषप्रसक्तिः । स च पुनः कीदृशः ? स्वतोऽपास्तसुषुप्तिस्वप्नजागरः=स्वत एव अपास्ताः सुषुप्तिस्वप्नजागरा यत्र येन वा तादृशः, यत्रेदमुक्तम्—"नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम् । अदृष्टमव्यवहार्यमग्राह्यमलक्षणम-

चिन्त्यमव्यपदेश्यमेकात्म्यप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः" ( माण्डू० ७ ) इति ॥ १८४ ॥

**सं०—निसाभिव्यक्त मोक्ष का स्वरूप कथन करते हैं—**

**पदार्थ—**अथ=आत्मबोध द्वारा अविद्यारूप बन्ध के बाध के अनन्तर एकः=अद्वितीय अखण्ड नित्यकूटस्थसच्चिदानन्द-सागरः=नित्य, कूटस्थ, सच्चिदानन्दसागर अर्थात् समुद्र के समान शान्त निस्तब्ध सच्चिदानन्दस्वरूप मोक्ष स्वयम्=

---

१ नान्तःप्रज्ञं स्वप्नावस्थायां मनोविरचितविषयज्ञानशून्यं न बहिःप्रज्ञं जागरिते इन्द्रियजन्यविषयज्ञानरहितं **नोभयतःप्रज्ञं** जागरित-स्वप्नयोः सन्ध्यवस्थाबबोधरहितं **न प्रज्ञानघनं** सुषुप्त्यवस्थायां जाग्रत्स्वप्न-ज्ञानानां कारणरूपेण घनीभावाश्रयं **न प्रज्ञं** युगपत्सर्वविषयज्ञातृत्वशून्यं **नाऽप्रज्ञं** न ज्ञानाभावरूपम्, **अदृष्टं** ज्ञानेन्द्रियाविषयभूतम्, **अव्यवहार्यम्** अर्थक्रियारहितम्, **अग्राह्यं** कर्मेन्द्रियैरगम्यम्, **अलक्षणम**लिङ्गमननुमेय-मिति यावत्, **अचिन्त्यम**न्तःकरणवृत्त्यविषयभूतम्, **अव्यपदेश्यं** शब्द-शक्त्यविषयभूतम्, **एकात्मप्रत्ययसारं** जाग्रदाद्यवस्थासु एक एवात्मा इत्याकारकः प्रत्ययोऽव्यभिचारिज्ञानमेव सारं प्रमाणं यस्मिन् तत्तथा, यद्वा एक आत्मप्रत्यय एव सारं प्रमाणं यस्याधिगमे तत्तुरीयमेकात्मप्रत्ययसारम् **'आत्मेत्येवोपासीत'** इति ( बृ० १ । ४ । ७ ) श्रुतेः । **प्रपञ्चोपशमं** प्रपञ्चस्य कार्यकारणरूपस्योपशमोऽभावो यस्मिँस्तत्तथा, **शान्तम**विक्रियम्, **शिवम**ानन्दस्वरूपम्, **अद्वैतं** भेदशून्यम्, **चतुर्थं** तुरीयं पादं **मन्यन्ते** संख्याविषयत्वाभावेऽपि पूर्वोक्तपादत्रयापेक्षया चतुर्थमिति कल्पयन्ते शास्त्रविदः। **स** वस्तुतः अतुरीयरूपोऽपि अविद्यया चतुर्थपादत्वेन कल्पित **आत्मा** अस्मत्प्रत्ययविषयः स तुरीयरूपः **विज्ञेयः** मुमुक्षुभिः साक्षात्कर्तव्य इत्यर्थः ।

**( अमरदासीयम् )**

स्वयमेव भाति=भासता है । पुनः वह कैसा है ? स्वतोऽपास्तसुषुप्तिस्वप्नजागरः=स्वतः ही निरस्त हो गए हैं सुषुप्ति, स्वप्न, जागरणादि अवस्था विशेष जिस के ऐसा अर्थात् जो अवस्थात्रयातीत (तीनों अवस्थाओं का साक्षी) है ॥ १८४ ॥

उत्तरपरिच्छेदविषयपातानिकां वीजयन् वन्धमिथ्यात्वमुपसंहरति "यतः" इति—

**यतस्त्वेतादृशो मोक्षः सर्वैर्जीवैरपेक्ष्यते ।**
**आत्मज्ञानेतरो बन्धबाधोपायोऽपि नेक्ष्यते ॥१८५॥**
**विचारेण यतः सम्यगात्मज्ञानमवाप्यते ।**
**आत्मन्येव ततः श्रुत्या जिज्ञास्यत्वं समाप्यते॥१८६॥**

## इति श्रीविचारबिन्दौ बन्धमिथ्यात्वनिर्णयो नाम प्रथमः परिच्छेदः ।

"तु" शब्देन सिद्धान्तं निश्चिनोति पक्षान्तराणि वा व्यावर्त्तयति । यतः=यस्मात् कारणात् सर्वैः जीवैः=विश्ववर्त्तिभिः प्राणिभिः एतादृशः=निरस्तनिखिलदोषगन्धलेशो नित्यमुक्तात्मस्वभावो मोक्षः अपेक्ष्यते=काम्यते, यतश्च आत्मज्ञानेतरः=आत्मज्ञानादन्यः कश्चिदपि वन्धबाधोपायः=बन्धबाधस्य अविद्याद्यनात्मवर्गात्मकस्य बन्धस्य बाधोऽत्यन्तनिवृत्तिस्तस्या उपायः साधनमित्यर्थः अपि न=नैव,ईक्ष्यते=आलोक्यते । यतस्त इति तु परमार्थः ।

यतः=यस्मात् कारणाच्च विचारेण=ब्रह्ममीमांसया सम्यक्=यथार्थभूतं वस्तुस्वरूपानुरोध्येव आत्मज्ञानम्=ब्रह्मात्मैक्यबोधः अवाप्यते=प्राप्यते, ततः=तस्मादेव हेतोः श्रुत्या="आत्मा वा अरे द्रष्टव्यः" (बृ०३।४।५; ४।५।६) इत्याद्यात्मकेन वेदवाक्येन आत्मनि एव=प्रत्यगभिन्नब्रह्मात्मन्येव जिज्ञास्यत्वम्=जिज्ञासाविषयत्वं मीमांस्यत्वमिति यावत् समाप्यते=समन्वीयते । आत्मानं विहाय नान्यत् किञ्चिदपि जिज्ञास्यमस्तीति मातृवत् परमहितकारिण्या श्रुत्या बोध्यते, अतोऽस्माभिरपि वेदान्तशास्त्रपरिशीलनयापितसकलसमयैरत्रैव जिज्ञास्यत्वं समापयिष्यत इति ग्रन्थकाराशयः ॥ १८५, १८६ ॥

इति श्रीपण्डितदेवीदासतनुजनुषा सारस्वतवंशावतंसेन
सतीविष्णुदेवीगर्भजेन जैनन्यायविशारदकावि-
तार्किक (तन्त्रचक्रवर्त्ति) दर्शनाचार्य-
नृसिंहदेवशास्त्रिणा विरचितायाः
"पीयूषवाहिन्याः"
श्रीविचारबिन्दु-
टीकायाः
"बन्धमिथ्यात्वनिर्णयो" नाम प्रथमः परिच्छेदः ।

सं०—अब उत्तरपरिच्छेद के साथ सङ्गति बोधन करते हुए प्रथम परिच्छेद के विषयभूत बन्धमिथ्यात्व प्रकरण का उपसंहार करते हैं—

पदार्थ—"तु" शब्द से पर पक्ष की व्यावृत्ति तथा सिद्धान्त पक्ष का निश्चय बोधन किया है । यतः=जिस

कारण से सर्वैः जीवैः=सब जीवों करके एतादृशः=सकल दोष वर्जित नित्यमुक्तस्वभावरूप मोक्षः=मोक्ष ही अपेक्ष्यते= अपेक्षित ( वाञ्छित ) है अर्थात् प्रत्येक प्राणी दुःख (बन्ध) से अत्यन्तमुक्त होने का अभिलाषी है, और जिस कारण से आत्मज्ञानेतरः=आत्मज्ञान से भिन्न कोई बन्धबाधोपायः= बन्धबाध का साधन अपि=भी न ईक्ष्यते=नहीं देखा जाता ( बनता ही नहीं )।

यतः=(और) जिस कारण से विचारेण=ब्रह्ममीमांसारूप विचार से सम्यक्=यथार्थ आत्मज्ञानम्=ब्रह्मात्मैक्यसाक्षात्कार अवाप्यते=प्राप्त होता है, ततः=इसी कारण से श्रुत्या="आत्मा वा अरे द्रष्टव्यः" इत्यादि वेदवाक्यों के द्वारा आत्मनि एव=प्रत्यगभिन्न ब्रह्मात्मा में ही जिज्ञास्यत्वम्=जिज्ञासा की विषयता समाप्यते= समाप्त की जाती है।

यहां सार यह है कि वेदान्तशास्त्र के निरन्तर परिशीलन से यही अर्थ निर्भ्रान्तरूप से ज्ञात होता है कि 'आत्मा के विना अन्य कोई पदार्थ जिज्ञास्य नहीं' इसी अर्थ में श्रुति का तात्पर्य है। इस विषय को आगे द्वितीय प्रकरण में भले प्रकार निरूपण करेंगे ॥ १८५, १८६ ॥

इति श्रीदर्शनाचार्यनृसिंहदेवशास्त्रिविरचितायां श्रीविचारबिन्दुमिताक्षरायां बन्धमिथ्यात्वनिर्णयो नाम प्रथमः परिच्छेदः।

# शुद्धिवृद्धी

| पृष्ठम् | पंक्तिः | पठनीयम् |
|---|---|---|
| भू०२ | २२ | ०मित्यर्थः |
| ,, ८ | २० | ०न्विचारपरे |
| ,,१३ | ३ | अजातशत्रुभिः |
| ,,१३ | ४ | शालिभिः |
| ,,१४ | २ | ०परमाणु० |
| ,,१४ | १५ | ०मभिप्रेतं |
| ,,२६ | १ | करने में |
| ,,२६ | २० | न्याई |
| ,,२८ | १ | हो जाता है |
| ,,२८ | ५ | कथन करते हैं |
| ,,२९ | २५ | (१) ३।२। ५५—६३ |
| ,,३० | ३ | पूर्ण |
| ,,३० | १८ | जैसे |
| ३ | १४ | पञ्चम्यपाङ्परिभिः |
| ४ | ९ | ईश्वरानुग्रहादेषा |
| ४ | २४ | फलवज्ज्ञानजनकत्वा० |
| ६ | १७ | बुद्धिपर्यन्तेषु |
| १० | ८ | अच्छेदयो |
| १२ | ९ | स्रष्टृत्वात् |
| १२ | १० | पालयितृत्वात् |
| १२ | १० | उपदेष्टृत्वात् |
| १४ | २६ | भावः। |

| पृष्ठम् | पंक्तिः | पठनीयम् |
|---|---|---|
| १५ | २३ | भवति |
| १६ | १८-१९ | व्यावर्त्याभावात् |
| २४ | २२ | विजातीयस्वगतभेद० |
| २५ | ६ | विनाश यह |
| ३६ | १८ | परम्परया |
| ३८ | १० | भिन्नमेव |
| ३८ | १९ | भेदस्य |
| ४० | १० | दोषाणां |
| ४८ | २६ | यथाध्येतारः |
| ५४ | ४ | इति पञ्चमवर्णकम् |
| ५७ | ९ | अहमाकारा० |
| ६६ | ४ | वाचारम्भणवाक्यतः |
| ६६ | ५ | अनृतं |
| ६६ | ५ | केवला |
| ६६ | ६ | कारणस्यैव हि द्विजाः |
| ७४ | ६ | अद्वैत० |
| ७४ | १७ | तस्मान्मायावादिना० |
| ७५ | ९ | प्राप्त्यै |
| ७७ | ७ | सर्वं प्रियं ब्रुवाणं |
| ७९ | ९ | क्षयातिशयादिदोष० |
| ८७ | २५ | देश० |
| ९३ | १६ | भ्रान्तः सम्यक् च |

| पृष्ठम् | पंक्तिः | पठनीयम् |
|---|---|---|
| ९५ | ७ | जडप्रकाशायाः |
| ९५ | १३ | उपादानश्चैतन्य० |
| १२७ | १३ | इस श्लोक में |
| १४० | १८ | तद्वद् विष्णौ सृष्टिः |
| १४४ | १८ | अनित्यत्वादसत्यत्वं |
| १६३ | १ | श्लोकौ १६-१७ |
| १७२ | २० | मिथ्यात्वासम्प्रति० |
| १७३ | १४ | दुःखेन सम्भिन्नं |
| १८२ | २२ | महानज |
| १८८ | १३ | उपधेयाविषय० |
| २०८ | १४ | मार्गो |
| २१६ | १२ | अविद्या० |
| २२० | ११ | ०मप्याह |
| ,, | १८ | २—तथा |
| २२२ | ८ | ०दुःखस्य |
| २२३ | १३ | ०प्यविद्यो० |
| २३५ | १ | ०वर्गः |
| २३५ | ३ | ०वशात् |
| २४७ | ८ | ०विशेषणतया |
| २५४ | २० | ०ममृतत्वोक्तिर्या |
| २५५ | १६ | ०श्रुतावपि |
| ,, | २६ | (३) श०२।६।३।१ |
| २५५ | २३ | टिप्पण्या— |
| २५६ | २२ | ०विशिष्टमोक्षस्वरूप० |
| २६२ | २२ | ०प्रायेणोक्तम् |
| २६४ | ३ | तेनैव |
| २७३ | २२ | "सादित्व" |
| २८२ | ९ | ०भावाद् यथात्मा |
| २८२ | १० | सत्त्वेन |
| २९९ | १६ | शङ्क्यः |
| ३०२ | १६ | ०कारणत्वादिदोष० |
| ३१५ | ७ | एव |
| ३३१ | ८ | गृह्येत, |
| ३५३ | २१ | श्रुतिः |

३५३ २२ (टिप्पणे सन्निवेश्यम्) १—अत्र मूलकारैः "तच्छुभ्रं ज्योतिषां-ज्योतिः" ( मुं० २।२।९ ) "तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् ( बृ० ४।४।१६ ) इतीमे श्रुतीशब्दतः, अर्थतश्चान्या अपि "न तत्र" इत्यादयः सङ्केतिता इति बोध्यम्।

अनया दिशाऽन्यत्रापि यथोचितस्थलेषु विज्ञैः संशोधनादि कार्यम्।